॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

११३



श्रीजगदीशतर्कालङ्कारकृतम्

# पक्षताप्रकरणम्

काशीस्थराजकीयसंस्कृतपाठशालायां न्यायशास्त्रप्रधानाध्याप-
केन म. म. पं० श्री प्रभुदत्तशास्त्रितनुजेन न्यायाचार्य
पं० श्री शिवदत्तमिश्रगौडेन विरचितया "गङ्गा"-
व्याख्यया संवलितं तत्कृतटिप्पण्यादिभि-
र्विभूषितं तेनैव संशोधितश्च



चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा विक्रेता
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी

मुद्रक : विद्याविलास प्रेस, वाराणसी

संस्करण : द्वितीय, वि० संवत् २०३६

मूल्य : रु० ३५-००

हमारे प्रकाशनों की एकमात्र वितरक संस्था—

**चौखम्भा ओरियन्टालिया**

प्राच्यविद्या एवं दुर्लभ ग्रन्थों के प्रकाशक तथा विक्रेता

पो० आ० चौखम्भा, पो० बा० नं० ३२

गोकुल भवन के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी-२२१ ००१ ( भारत )

टेलीफोन : ६५८८९ टेलीग्राम : गोकुलोत्सव

शाखा—बंगलो रोड, ९ यू० बी० जवाहर नगर

दिल्ली-११०००७

फोन : २२१६१७



प्रधान शाखा :—

**चौखम्भा विश्वभारती**

पो० बाक्स नं० १३९

चौक ( चित्रा सिनेमा के सामने )

वाराणसी

फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
113
*****

THE

# PAKṢATĀ PRAKARAṆAM

BY

ŚRĪ JAGADIŚA TARKĀLAṄKĀRA

*Edited wiih*
*the gangā commentary & notes*

By

N. P. ŚRĪ ŚIVADATTA MIŚRA

*Professor, Covernment Sanskrit College, Benares*

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publisher and Seller of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 139
Jadau Bhawan K. 37/116, Gopal Mandir Lane
VARAṆASI ( INDIA )

*Also can be had from*

**CHAUKHAMBHA VISVABHARATI**

Post Box No. 139

Chowk ( Opposite Chitra Cinema )

VARANASI-221001

Phone : 65444



Second Edition 1980

Price : Rs. 35-00

*Sole Distributors :—*

**CHAUKHAMBHA ORIENTALIA**

A House of Oriental and Antiquarian Books

P. O. Chaukhambha, Post Box No. 32

Gokul Bhawan, K. 37/109, Gopal Mandir Lane

VARANASI-221001 ( India )

Telephone : 65889 Telegram : Gokulotsav

**Branch**—Bungalow Road, 9 U. B. Jawahar Nagar

DELHI-110007 ( India )

Phone : 221617

* श्रीः *

# भूमिका

जनकः प्रभुदत्तः श्रीनाह्वीदेवी च मत्प्रसूः ।
न्यायाचार्यो गुरुर्वामाचरणः शरणं मम ॥

अथेदं प्रस्तूयते पक्षताप्रकरणम् । पक्षता चाऽनुमितौ हेतुः, सत्यपि परामर्शादौ पक्षे साध्यनिश्चयसत्त्वे ऽनुमित्यनुत्पत्तेः । तत्र साध्यसंशयः पक्षतेति प्राचीनाः । तेषामयमाशयः । साध्यनिश्चयसत्त्वे बाधनिश्चय-सत्त्वे वाऽनुमितिर्न भवतीति तयोर्विघटनाय संशयस्याऽनुमितिकारण-त्वमावश्यकम् । एवं च साध्यनिश्चयस्य बाधनिश्चयस्य वा संशयं प्रति प्रतिबन्धकत्वादुभयसत्त्वे संशयरूपकारणाभावादेव नानुमितिः । एतन्मते स्वातन्त्र्येणाऽनुमितिं प्रति सिद्धेः प्रतिबन्धकत्वं नास्ति संशयस्य सिद्धिं प्रति प्रतिबन्धकत्वात्संशयोत्तरं सिद्ध्यात्मकपरामर्शाऽसम्भवात्सिद्धि-सत्त्वे आपत्तिविरहात् । सिद्धेश्च साध्यसंशयं प्रति प्रतिबन्धकत्वात्सि-द्ध्यात्मकपरामर्शोत्तरं संशयासम्भवात्सिद्धिसत्त्वे आपत्तिविरहात् । परन्तु साध्यसंशयोत्तरं स्मृत्यात्मकसिद्ध्यात्मकपरामर्शसत्त्वे अनुमिति-र्भवत्येव । प्रत्यक्षनिश्चयं प्रत्येव ग्राह्यसंशयस्य प्रतिबन्धकतया स्मरणा-त्मकसिद्धिं प्रति साध्यसंशयस्याऽप्रतिबन्धकत्वात् ।

अत्र साध्यसंशयश्च न साध्यप्रकारकसंशयः, वह्निः पर्वते न वा, वह्निः पर्वतनिष्ठाभावप्रतियोगी नवेत्यादिसाध्यविशेष्यकसंशयानाम-संग्रहापत्तेः, किन्तु पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यसंशयः पक्षता, तथा च निखिलसंशयानां संग्रहः, प्राचीनमते समानविषयकत्वेन प्रतिबन्धकतास्वीकारात् ।

नव्यास्तु सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता सिषाधयिषा च प्रकृतपक्षे प्रकृतसाध्यानुमितीच्छा। सिद्धिः प्रकृतपक्षे प्रकृतसाध्यनिश्चयः। तथा च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकाऽनुमितित्वावच्छिन्नं प्रति तादृशानुमितिगोचरेच्छाविरहविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नाभावत्वादिना कारणत्वम्। यत्र सिद्धिः सिषाधयिषा च तत्र विशेषणाभावप्रयुक्तो विशिष्टाभावः। यत्र केवलं सिषाधयिषा तत्रोभयाभावप्रयुक्तो विशिष्टाभावः। यत्र केवलं परामर्शः तत्र विशेष्याभावप्रयुक्तो विशिष्टाभावः। बाधनिश्चयस्य च स्वातन्त्र्येणाऽनुमितौ विरोधित्वमिति प्राहुः।

प्राभाकरास्तु सिद्धिसत्त्वेऽनुमितिस्वीकारे क्षतिविरहात्सिद्धिर्नानुमितौ प्रतिबन्धिकेत्याचक्षते। तच्चिन्त्यम्। उत्पन्नानुमितिव्यक्तीनां पुनरुत्पादवारणाय तत्तदनुमितिं प्रति तत्तत्प्रागभावव्यक्तीनां हेतुत्वकल्पने गौरवात्, सिद्धेः प्रतिबन्धकत्वे तु सामान्यसामग्रीविरहादापत्यसम्भवादित्यन्यत्र विस्तरः।

इदन्तु बोध्यम्–प्रतिपिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिता अवधेयवचनो भवति प्रेक्षावतामित्यभियुक्तोक्त्या प्रतिपिपित्सितोऽर्थः प्रतिपादनीयः, अपेक्षितानि चाऽनुमानखण्डीयप्रकरणेषु क्रोडपत्राण्येव। क्रोडपत्राणि च कालीशङ्करी—चान्द्रनारायणी बलदेवीत्यादिनामभिः प्रसिद्धानि। अतो मया तान्येव स्थलविशेषेऽनुगतीकृतानि। स्वर्गीय गुरुवर म० म० पं० श्रीवामाचरणभट्टाचार्यचरणानुग्रहतः स्थलान्तरानुधावने लक्षणान्तरानुसरणे च पूर्वस्मिन् स्थले लक्षणे चाऽस्वरसः, कुत्रचिल्लक्षणसमन्वयप्रकारोऽपि प्रदर्शितः। नायं साहित्यग्रन्थः, येन पर्यायविग्रहादीनामावश्यकता भवेत्। एतेन "मया स्वबुद्ध्यैव रचित इति" केषांचिदुक्तिरपलाप एवेति बोध्यम्।

तदेवं कृतेऽपि संशोधने दृष्टिदोषाद् बुद्धिदौर्बल्याद्वा जाता अशुद्धीः क्षाम्यन्तो गुणगृह्या विद्वांसो मामकीनं श्रमं सफलयिष्यन्ति। स चायं

ग्रन्थः श्रेष्ठिकुलभूषणेन जयकृष्णदासगुप्तमहोदयेन छात्रोपकाराय स्वायत्तीकृत्य प्रकाशितः।

येषां पितृवद्वाराध्यानामसीमकृपया ग्रन्थोऽयं निर्विघ्नेन समाप्तिमवाप, तेषामेव विश्वनाथसद्दशानामस्मज्ज्येष्ठसोदराणां श्रीमतां विद्याधरशास्त्रिणां चरणकमलयोरिमां कृतिं समर्पयामि, भविष्यति चाऽनेन प्रीतो भगवान् सर्वान्तर्यामी **गौरीशङ्कर** इत्याशास्ते।

विद्याभवन<br>
वै० शु० १५ शनौ<br>
१९९२

विदुषामनुविधेयः<br>
श्रीशिवदत्तमिश्रः

❀ श्रीः ❀

# चिन्तामणेः पक्षता

व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥
जगदीशगदाधरौ कृतौ जनुषा येन नवौ पुरातनौ ।
रघुनाथपदानि चिन्तयन् हृदि वामाचरणोऽस्तु मे गुरुः ॥ २ ॥
अपरः किमु जैमिनिः स्थितोऽप्यथ कात्यायन एव नूतनः ।
यमवेक्ष्य विवादिनां वचः प्रमुदत्तोऽवतु नः पिता स मे ॥ ३ ॥
जगदीशपदोद्भूता शिवदत्तेन धारिता ।
अविद्याकलुषौघघ्नी गङ्गेयं गीयतां बुधैः ॥ ४ ॥

व्याप्त्यनन्तरमित्यत्र व्याप्तिपदस्य व्याप्तिनिरूपणे लक्षणा, व्याप्तिनिरूपणानन्तरमित्येव वा पाठः । तत्र निपूर्वकरूपधात्वर्थस्य ज्ञानानुकूलव्यापारस्य प्रतियोगिताकत्वसम्बन्धेनाऽऽनन्तर्यपदार्थैकदेशे ध्वंसेऽन्वयः । आनन्तर्यं च स्वोत्तरकालीनत्वम्, तच्च स्वध्वंसाधिकरणकालवृत्तित्वम् । स्वपदं व्याप्तिनिरूपणपरम्, अन्वयश्चाऽस्य निपूर्वकरूपधात्वर्थे ज्ञानानुकूलव्यापारे । मयेत्यध्याहार्यम् । अस्मच्छब्दार्थो मूलकारः । तस्य [1]निष्ठत्वसम्बन्धेन तृतीयार्थकृतौ अन्वयः । तस्याश्च जन्यतासम्बन्धेन व्यापारेऽन्वयः । तस्य निरूपितत्वसम्बन्धेन कर्माख्यातार्थविषयतायामन्वयः । कर्मप्रत्ययार्थो विषयत्वम्, वर्त्तमानकालाव्यवहितोत्तरकालश्च । विषयतायाः स्वरूपसम्बन्धेन प्रथमान्तार्थपक्षधर्मत्वेऽन्वयः । तथा च व्याप्तिविषयकज्ञानानुकूलव्यापारध्वंसाधिकरणकालवृत्तिमूलकारसमवेतकृतिजन्यवर्त्तमानकालाव्यवहितोत्तरकालवृत्तिज्ञानानुकूलव्यापारनिरूपितविषयतावती पक्षधर्मतेति वाक्यार्थबोधः । व्यापारश्चाऽत्र शब्दरूपः । न च ज्ञाननिरूपितत्वं विषयतायां सर्वसम्मतम्, न तु व्यापारनिरूपितत्वमपीति कथं तादृशव्यापारस्य निरूपितत्वसम्बन्धेनाऽन्वय इति वाच्यम् । याचितमण्डनन्यायेन ज्ञानविषयतामादायैव तादृशव्यापारनिरूपितत्वमिति ध्येयम् । अथवा खण्डशक्तिवादिमते निपूर्वकरूपधातोः ज्ञाने व्यापारे च खण्डशक्तिः, एवं च ज्ञाने प्रयोज्यतासम्बन्धेन व्यापारस्याऽन्वयः । कर्माख्यातार्थः—कृतिः, वर्तमानकालाव्यहितोत्तरकालः, विषयत्वं च । मयेति तृतीयार्थो निष्ठत्वम्, तस्य चाऽऽख्यातार्थकृतो अन्वयः, 'मयात्पचति, क्रयाचैत्रस्ये'त्यादिप्रयोगानुरोधाद्विभक्त्यर्थे विभक्त्यर्थान्वयाभ्युपगमात् । वर्तमानकालाव्यवहितोत्तरकालस्य कृतौ अन्वयः । धात्वर्थज्ञानस्य च निरुपितत्वसम्बन्धेन विषयत्वेऽन्वयः, तथा च मन्निष्ठवर्त्तमानकालाव्यवहितोत्तरकालीनकृतिजन्यव्याप्तिनिरूपणध्वंसकालीनव्यापारप्रयोज्यज्ञानविषयतावती पक्षधर्मतेति

१. समवेतत्वसम्बन्धेनेत्यर्थः ।

दी - अनुमितिलक्षणैककार्यानुकूलत्वसङ्गत्या पक्षधर्मतां निरूपयितुमाह-व्याप्तीति ।

जा अनुमितिलक्षणेति । अनुमितिस्वरूपेत्यर्थः । व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमिति जिज्ञासयैव पक्षतानिरूपणादिति भावः । अत्रानु-

---

बोधः । कचित्तु स्वप्रयोज्यज्ञाननिरूपितत्वसम्बन्धेन व्यापारस्य विषयत्वेऽन्वय इत्याहुः ।

दीधितौ अनुमितीति । लक्षणपदं स्वरूपपरम् । अनुमितिस्वरूपैककार्येत्यर्थः । सङ्गत्येत्यत्र ज्ञानजन्य[1] जिज्ञासाधीनत्वं तृतीयार्थः । अन्वयश्चाऽस्य निरूपणे । पक्षधर्मतामिति द्वितीयार्थो विषयित्वम् । तस्य च निरूपणघटकज्ञानेऽन्वयः । निरूपणस्य च तुमुन्प्रत्ययार्थघटकेच्छायाम् । निरूपयितुमित्यत्र तुमुन्प्रत्ययार्थ इच्छाप्रयोज्यत्वम् । आह – प्रतिजानीते इत्यर्थः । प्रतिज्ञा च स्वाव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकबोधानुकूलो व्यापारः । तथाचाऽनुमितिस्वरूपैककार्यानुकूलत्वसङ्गतिज्ञानजन्यजिज्ञासाधीनपक्षधर्मताविषयकज्ञानानुकूलव्यापारेच्छाप्रयोज्यव्याप्तीत्यादिग्रन्थाभिन्नाव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारकबोधानुकूलव्यापरानुकूलकृतिमान्मूलकार इति वाक्यार्थबोधः[2] ।

अनुमितेर्लक्षणमिति समासभ्रमनिराकरणाय—अनुमितिस्वरूपेत्यर्थ इति । अनुमितिस्वरूपैककार्यानुकूलत्वसङ्गतित्वं हि पक्षधर्मतानिरूपणप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम्, एवं च पक्षधर्मतानिरूपणप्रयोजकजिज्ञासा च व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमित्याकारिका, तज्जनकं व्याप्तिज्ञानजन्यानुमितिजनकज्ञानं मदिष्टसाधनमिति ज्ञानं तद्विषयत्वं व्याप्तिज्ञानजन्यानुमितिजनकत्वेऽस्तीति । अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वस्यैव सङ्गतिसामान्यलक्षणत्वात् । एककार्यानुकूलत्वसङ्गतिज्ञानजन्यजिज्ञासाधीनत्वं पक्षतानिरूपणे दर्शयति—व्याप्तिज्ञानजन्याया इति । ननु व्याप्तिप्रयोज्यानुमितिजनकत्वेन सङ्गतित्वं तदैव स्याद्यदि व्याप्तिप्रयोज्यानुमितिजनकज्ञानं जायतामितीच्छया पक्षतानिरूपणं स्यात्, तादृशेच्छैव न सम्भवति, व्याप्तिवादे व्याप्त्यभिधानाधीनव्याप्तिप्रयोज्यानुमितिजनकज्ञानेन प्रतिबन्धादित्यत आह—किमन्यत्कारणमिति । स्वभिन्नत्वे सति स्वप्रयोज्यानुमितिजनकत्वमेककार्यानुकूलत्वम्, तथाच व्याप्तिज्ञानान्यव्याप्तिप्रयोज्यानुमितिजनकस्य पूर्वग्रन्थादलाभेन तत्तज्ज्ञानेच्छायां न किञ्चित्प्रतिबन्धकमिति भावः । इति जिज्ञासयैव पक्षतानिरूपणादिति । इति जिज्ञासयैव यतः पक्षतानिरूपणमतः पक्षतानिरूपणप्रयोजकत्वं तादृशजिज्ञासायामिति दर्शितम् । निरूपणादिति पञ्चम्यर्थः प्रयोजक-

---

१. तद्धर्मावान्तरधर्मप्रकारकज्ञानगोचरेच्छां प्रति तद्धर्मप्रकारकज्ञानस्य कारणतया स्वप्रयोज्यकार्यप्रयोजकत्वावान्तरधर्मप्रकारकं ज्ञानं जायतामितीच्छायां तादृशसङ्गतिज्ञानजन्यत्वम् ।

२. कृष्णंभट्टास्तु अत्र समभिव्याहृतक्रियायां समानकर्तृकत्वसहितस्वेच्छाधीनेच्छाविषयत्वं तुमुनोऽर्थः, अव्ययकृतो भावे इत्यनुशासनात् । अपरे तु तत्सम्बन्धेन प्रकृत्यर्थक्रियाया एवाऽन्वयः, तथाच पक्षताधर्मताप्रतिपत्त्यनुकूलव्यापरेच्छाविषयो यः तत्समानकर्तृकः तादृशकर्त्तव्यताप्रकारकबोधानुकूलो व्यापारस्तदनुकूलकृतिमान् मणिकार इति बोधः । आद्यो व्यापारः "सन्दिग्धसाध्यकत्वमि" त्यादिशब्दात्मकः, द्वितीयो "व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते" इति शब्दात्मक इत्याहुः ।

कूलत्वं जनकजनकतावच्छेदकसाधारणप्रयोजकत्वमात्रम्, तेन व्याप्तेरनुमित्यहेतुत्वेऽपि न क्षतिः।

यत्तु जनकतावच्छेदकत्वमेवाऽत्राऽनुकूलत्वम्, व्याप्तिवत्पक्षताया अपि करणव्यापारतया सिद्धहेतुभावस्य परामर्शस्य जनकतायामवच्छेदकत्वा-

---

त्वम्। जिज्ञासाभिधानप्रयोगेणैवेत्यर्थः। तादृशजिज्ञासास्वरूपं च व्याप्तिज्ञानजन्यानुमिति प्रयोजकत्वावान्तरधर्मप्रकारकज्ञानं' जायतामिति।

अत्र-एककार्यानुकूलत्वमित्यत्र, प्रयोजकत्वमात्रम्, तत्त्वं च कारणतावच्छेदकाऽवृत्त्यन्यथासिद्धिचतु'ष्टयरहितत्वे सति कार्यनियतपूर्ववर्त्तित्वम्, तेन व्याप्तिपक्षधर्मतयोरेककार्यकारित्वलाभः। व्याप्तेः कारणतावच्छेदकत्वेऽपि एतादृशानुकूलत्वसत्त्वे बाधकाभावादिति ध्येयम्।

यत्त्विति। तथाच सामानाधिकरण्यसम्बन्धेन पक्षताविशिष्टपरामर्शत्वेन कारणतया व्याप्ताविव पक्षतायामपि कारणतावच्छेदकत्वं निर्विवादमिति भावः। ननु पक्षताविशिष्टपरामर्शत्वेन कारणत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण परामर्शविशिष्टपक्षतात्वेनाऽपि कारणत्वं वाच्यम्, तथाच गुरुतरकार्यकारणभावद्वयकल्पनामपेक्ष्य परामर्शत्वेन पक्षतात्वेन च लघुरूपेण कारणताद्वयमेव कल्पनीयम्, एवं च पक्षताया जनकतावच्छेदकत्वं न सम्भवतीत्यतः पक्षताविशिष्टपरामर्शत्वेन कारणतायां विनिगमकं दर्शयति—करणव्यापारतयेति। करणत्वं च व्यापारवदसाधारणकारणत्वम्, व्यापारत्वं च तज्जन्यत्वे सति तज्ज-

---

१. अथैतादृशशब्दप्रयोगात्कथमेतादृशजिज्ञासाभिधानमिति चेन्न। व्याप्तिज्ञानजन्यानुमितेः किमन्यत्कारणमिति जिज्ञासाबोधकप्रश्नवाक्यम्, किंशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविधेयतानिरूपितविशेष्यतावच्छेदकत्वेन वक्तृजिज्ञासितविधेयव्याप्यधर्मावच्छिन्ने शक्तिः। जिज्ञासा च तादृश (व्याप्तिज्ञानजन्यानुमितिजनकत्वत्व) धर्मावच्छिन्नविधेयतानिरूपितविधेय (तादृशजनकत्व) व्याप्यकिञ्चिद्धर्मावच्छिन्नविशेष्यताकज्ञानं जायतामिति। एवं च व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमिति शब्दप्रयोगाद्व्याप्तिज्ञानातिरिक्तवृत्तिव्याप्तिज्ञानजन्यानुमितिजनकत्वत्वावच्छिन्नविधेयतानिरूपिततादृशजनकत्वव्याप्यकिञ्चिद्धर्मावच्छिन्नविशेष्यताकज्ञानसम्भवाज्जिज्ञासालाभः तद्धर्मावन्तरधर्मप्रकारकज्ञानगोचरेच्छां प्रति तद्धर्म (सामान्यधर्म) प्रकारकज्ञानस्यैव स्वातन्त्र्येण हेतुत्वेन व्याप्तिज्ञानजन्यानुनितिजनकत्वे तादृशजिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतित्वलाभः।

ननु इष्टसाधनताज्ञानधर्मितावच्छेदकज्ञानसम्पादनद्वारा सामान्यधर्मप्रकारकज्ञानस्य जिज्ञासाप्रयोजकत्वसम्भवे जिज्ञासां प्रति स्वातन्त्र्येण कारणताकल्पनमनुचितम्। सत्यम्। अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानीयज्ञाननिष्ठविशेष्यतानिरूपितविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपितव्याप्यत्वसम्बन्धवच्छिन्नावच्छेदकतावत्त्वस्य सङ्गतिपदेन विवक्षणीयतया अनुमितिजनकत्वस्य तादृशजिज्ञासाजनकेष्टसाधनताज्ञानीयसामान्यधर्मान्तरप्रकारकज्ञाननिष्ठविशेष्यतानिरूपितविषयतासम्बन्धावच्छिन्नावान्तरधर्मनिष्ठावच्छेकतानिरूपितव्याप्यत्वसम्बन्धावच्छिन्नसामान्यधर्मनिष्ठावच्छेदकतावत्त्वसङ्गतित्वसम्भवान्न दोष' इति ध्येयम्।

२. ननु तादृशाऽन्यथासिद्धिसामान्याभावनिवेशेनैव सामञ्जस्ये चतुष्टयपदं व्यर्थमिति चेन्न। अन्यथासिद्धित्वस्याऽनुगतस्याऽभावेन तत्तदन्यथासिद्ध्यभावकूटनिवेशस्याऽऽवश्यकतया कूटलाघवार्थमेव तदुपादानात्। एतेन नियतपूर्ववर्त्तित्वदलं व्यर्थमिति पूर्वपक्षोऽपि निरस्तः। अनियतपूर्ववर्त्तिगतान्यथासिद्ध्यभावघटितकूटनिवेशे कूटस्य गुरुशरीरतया महागौरवापत्तेरिति।

दिति मतम् । तत्तुच्छम् । पक्षता न कारणमिति तु भ्रम इत्याद्युत्तरग्रन्थ-विरोधा[1]पत्तेः ।

---

न्यजनकत्वम् । तृतीया च हेतौ बोध्या । कारणव्यापारतया सिद्धः सिद्धिविषयीभूतो हेतु-भावः[2] (कारणत्वं) यस्य परामर्शस्य, षष्ठ्या निष्ठत्वम्, तस्य जनकतायामन्वयः । जनकतायामित्यत्र सप्तम्यर्थो निरूपितत्वम्, अवच्छेदकतायां तस्यान्वयः, तत्र च पक्षताया इति षष्ठ्यन्तार्थपक्षतानिष्ठत्वस्यान्वयः । व्याप्तिवदिति दृष्टान्तः । तथाच करणजन्यत्वविशिष्टकरणजन्यानुमितिजनकत्वरूपहेतुनेति फलितम् । एवं च परामर्शोऽनुमितिजनकः व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वादित्यनुमानेन परामर्शेऽनुमिति-जनकत्वसिद्धिरिति ग्रन्थतात्पर्यम् ।

अथ करणजन्यत्वविशिष्टकरणजन्यानुमितिजनकत्वस्य हेतुत्वे अनुमितिजनकत्वव्याप्यकरणजन्यत्वविशिष्टकरणजन्यानुमितिजनकतावान्परामर्श इति परामर्शादनुमितिजनकत्वसाधने सिद्धसाधनम्, परामर्शांशे हेतुघटकानुमितिजनकत्वसिद्धेः । न चाऽधिकावगाहि साध्यनिश्चयस्याऽप्रतिबन्धकत्वात् साध्यतावच्छेदकमात्रावच्छिन्नप्रकारताशालिनिश्चयस्यैव साध्यविधेयकानुमितिप्रतिबन्धकत्वं वाच्यम्, उक्तहेतुमत्तानिश्चयस्य चाऽनुमितिजनकत्वत्वमात्रावच्छिन्नप्रकारताकत्वविरहान्न सिद्धसाधनमिति वाच्यम् । अविशिष्टसाध्यवत्त्वानुमितौ विशिष्टसाध्यवत्तानिश्चयस्यापि विरोधित्वात् । अत एव गवाश्रितत्वे साध्ये सकलगवाश्रितत्वं न हेतुरित्युक्तं ग्रन्थकृता । न च करणजन्यत्वविशिष्टकरणजन्यजनकत्वमेव करणव्यापारत्वं वाच्यम्, न त्वनुमितित्वस्य तत्र प्रवेशः, तथाच न सिद्धसाधनमिति वाच्यम् । व्याप्तिसंस्कारे व्याप्तिज्ञानजन्यत्वव्याप्तिज्ञानजन्यस्मृतिजनकत्वयोः सत्त्वात् तत्रानुमितिजनकत्वाभावेन व्यभिचारापत्तेः ।

न च तद्वारणाय तज्जन्यत्वे सति तज्जन्यस्मृतिभिन्नज्ञानजनकत्वं व्याप्तिज्ञान-जन्यत्वे सति व्याप्तिज्ञानजन्यजनकज्ञानत्वमेव वा हेतुर्वाच्यः तथाच संस्कारे स्मृति-भिन्नज्ञानजनकत्वाभावाद्, ज्ञानत्वविरहाद्वा न व्यभिचार इति वाच्यम् । वह्निव्याप्यधूमवानिति ज्ञाने व्यभिचारतादवस्थ्यात्, तस्य व्याप्तिज्ञानजन्यत्वात्, व्याप्तिज्ञान-जन्यं यद्वह्निव्याप्यधूमवद्वान्देश इति ज्ञानं तज्जनकत्वाच्च तत्र चानुमितिजनकत्वविर-हादिति चेत् ।

अत्र केचित् । व्याप्तिज्ञानजन्यानुमितिजनकत्वविशिष्टव्याप्तिज्ञानजन्यत्वस्यैव हेतुत्वान्न सि-द्धसाधनावकाशः, उक्तज्ञाने परामर्शांशे तादृशविशिष्टजनकत्वविरहात् । न च वैशिष्ट्यनियामकसामानाधिकरण्यघटकाधिकरणविधया परामर्शेऽनुमितिजनकत्वस्य तावतापि सिद्धतया पुनस्तत्साधने सिद्धसाधनं दुर्वारमिति वाच्यम् । तद्धर्मावच्छिन्नविशेष्यतानिरूपितत्तद्धर्माव-

---

१. न चात्र कारणपदस्य कारणतावच्छेदकपरतया न विरोध इति वाच्यम् । जनकतावच्छेदिका पक्षता न कारणमिति तु भ्रम इत्यादेरेवोत्तरग्रन्थतया तादृशकल्पनाया असम्भवात् ।

२. न च सिद्धश्चासौ हेतुभावश्चेति सिद्धहेतुभावः तस्याऽवच्छेदकत्वात् सिद्धहेतुभावावच्छेदकत्वात्, तथाच करणव्यापारतया सिद्धपरामर्शस्य हेतुतावच्छेदकत्वादित्युक्त्यैव सामञ्जस्ये जनकतायामित्यस्य वैयर्थ्यमिति वाच्यम् । परामर्शस्य जनकताद्वयी एका स्वतन्त्रा अपरा करणव्यापारतया सिद्धा तत्राऽस्यामेवाऽच्छेदकत्वसूचनाय तत् ।

म - तत्र[1] न तावत्सन्दिग्धसाध्यधर्मत्वं पक्षत्वम् । P 50

पक्षधर्मतामित्यत्र पक्षे धर्मत्वं [2]यस्या इति व्युत्पत्त्या पक्षतामित्यर्थः। पक्षस्य धर्मत्वं धर्मविशेषः, पक्षत्वमिति वा, देवतादिशब्द इव तलः स्वार्थिकत्वात् । व्याप्तीतीति । न च प्रकृतग्रन्थस्वरसस्खलितस्यैव पाठस्य धर्तुमुचितत्वाद् व्याप्त्येत्येव ( प्रतीक ) धारणं युक्तमिति वाच्यम् । अप्रयोजकत्वात्, व्याप्तिनिरूपणानन्तरमित्येवं मूलपाठमनुसृत्य वा तथोपन्यासादिति भावः ।

ननु सन्दिग्धसाध्यधर्मत्वमिति मूलस्य यदि सन्देहविषयीभूतसाध्य-

---

च्छिन्नप्रकारताशाल्यनुमितिं प्रति तद्धर्मावच्छिन्नविशेष्यताघटितनिश्चयत्वेनैव प्रतिबन्धकतया परामर्शे हेतुघटकानुमितिजनकत्वस्य निर्धर्मितावच्छेदकतयैव भानात्तादृशनिश्चयस्याऽप्रतिबन्धकत्वात् । एवं परामर्शांशे निरुक्तहेतुमत्तानिश्चये व्याप्तिज्ञानजन्यत्वं धर्मितावच्छेदकीकृत्य सामानाधिकरण्यसम्बन्धेन निरुक्तानुमितिजनकत्वसिद्धावपि पक्षतावच्छेदकीभूतपरामर्शत्वं धर्मितावच्छेदकीकृत्याऽनुमितिजनकत्वसाधनायाऽनुमानसम्भवादित्याहुः ।

अथवा करणव्यापारतया—करणव्यापारपदप्रतिपाद्यत्वेन, हेतौ तृतीया, तथाच परामर्शोऽनुमितिजनकतावान् करणव्यापारपदजन्यप्रतीतिविषयतावत्त्वादित्यनुमितिपरोऽयं ग्रन्थः । नचैवं सति करणव्यापारपदजन्यवह्निव्याप्यधूमवान्पर्वतो घटवांश्चेति समूहालम्बनज्ञानीयविषयतायाः घटादावपि सत्त्वेन तत्राऽनुमितिजनकत्वविरहाद् व्यभिचारः स्यादिति वाच्यम् । करणव्यापारपदप्रयोज्यायाः ज्ञानीयविषयताया एव हेतुत्वात् । तादृशसमूहालम्बनज्ञानीयघटत्वावच्छिन्नविषयतायां तादृशपदप्रयोज्यत्वविरहान्नोक्तदोषः । वस्तुतस्तु अनुमितिग्रन्थे अनुमानं प्रमाणं प्रमितिकरणतावच्छेदकरूपवत्त्वादित्यनुमानेनाऽनुमाने प्रामाण्यं साधितम्, तत्र प्रामाण्यं प्रमितिकरणत्वम्, करणत्वं व्यापारत्वं च निरुक्तमेव । तत्र परामर्शेऽप्यनुमितिजनकत्वस्य फलतः सिद्धतयाऽत्र पुनस्तत्साधने पौनरुक्त्यं स्यादतो नायं ग्रन्थोऽनुमानपरः, अपि तु करणव्यापारतयेत्यत्र तृतीयाप्रकारे तदर्थश्चाऽभेदः, सिद्धपदं क्लृप्तपरम्, तथाच करणव्यापारत्वप्रकारकज्ञानविषयीभूतो हेतुभावो यस्येत्यर्थकरणेन करणव्यापारत्वाभिन्नहेतुतावत्परामर्शजनकतावच्छेदकत्वं पक्षतायां क्लृप्तमिति फलितम्, तेन न सिद्धसाधनमिति ध्येयम् ।

व्यधिकरणबहुव्रीहेरसाधुत्वादाह—पक्षस्येति । धर्मविशेषः असाधारणधर्म इत्यर्थः, सन्देहविषयीभूतसाध्यवत्त्वमिति यावत्, न तु पर्वतत्वादिकम्, तस्य तत्पर्वतभेदविशिष्टत्वेनाऽसाधारणधर्मत्वाभावात् । असाधारणत्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमिति दिक् ।

मूले सन्दिग्धेति । सन्दिग्धः साध्यरूपो धर्मो यत्रेति व्युत्पत्त्या यद्विशेष्यकसंशयवि-

---

१. तत्पदं निरूपणपरम्, विषयत्वं सप्तम्यर्थः । तथाच निरूपणविषयीभूतं पक्षत्वं सन्दिग्धसाध्यधर्मत्वरूपं नेत्यर्थः ।

२. पक्षनिरूपिताधेयतावति पक्षत्वे पक्षधर्मताशब्दस्य योगरूढिरिति भावः । तेन न तत्पदात्साध्यहेत्वादीनामवगमः ।

दी– सन्दिग्धेति । यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्त्यो यः संशयस्तत्र स तादृशसम्बन्धेन साध्यानुमितौ पक्षता इत्यर्थः ।

---

वत्त्व[1]मर्थस्तदा विनष्टवह्न्यादेर्ह्रदादावनुमितिर्न स्यात्तत्र तादृशसाध्याभावेन पक्षताविरहादतः साध्यसंशयस्यैव पक्षतात्वमाह- यत्रेत्यादिना । यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत्संशयं प्रति निवर्त्तकत्वं स सन्देहस्तत्पक्षकतत्सम्बन्धावच्छिन्नतद्विधेयकानुमितौ हेतुभूता पक्षतेत्यर्थः ।

---

षयताविशिष्टसाध्यरूपधर्मवत्त्वं तन्निष्ठपक्षधर्मतेत्यर्थः । विषयतायाः ज्ञानसमानकालीनतया संशयकाले एव संशयविषयताविशिष्टसाध्यरूपधर्मत्वं पक्षेऽस्तीति संशयपक्षतावादिनां संशयकाले एवाऽनुमितिरिति भावः ।

विनष्टवह्न्यादेर्ह्रदादावनुमितिर्न स्यादिति । वह्न्यादेर्ह्रदादौ, विनष्टवह्न्यादेः पर्वतादावनुमितिर्न स्यादित्यर्थः । अथवा विनष्टस्य वह्न्यादेः केनापि सम्बन्धेन ह्रदादावनुमितिर्न स्यादित्यर्थः । विभिन्नकालीनयोर्विषयताविषयित्वातिरिक्तसम्बन्धेनाऽऽधाराऽऽधेयभावविरहात् । अत्र सन्देहविषयीभूतस्य वह्न्यादेः कालिकेन ह्रदादावनुमितिसम्भवादनुमितिर्न स्यादित्यसङ्गतमत उक्तम्–विनष्टेति । विनष्टस्य ज्ञानादेर्विषयतासम्बन्धेन ह्रदादावनुमितिसम्भवाद्–वह्न्यादेरिति । विनष्टवह्न्यादेरपि विषयितासम्बन्धेन विनष्टवह्निविषयकज्ञानेऽनुमितिर्भवत्येवेत्यत उक्तम्–ह्रदादाविति ।

दीधितौ–यत्रेति । यद्धर्मिणीत्यर्थः, सप्तम्यर्थो विशेष्यत्वम् , तस्य निरूपितत्वसम्बन्धेन साध्यस्येति षष्ठ्यन्तार्थसाध्यनिष्ठप्रकारतायामन्वयः, यत्रेति यत्पदं पक्षतावच्छेदकावच्छिन्नपरम् , साध्यपदं साध्यतावच्छेदकावच्छिन्नपरम् , साध्यस्य यादृशसम्बन्धावगाहित्वम्–साध्यनिष्ठयादृशसम्बन्धावच्छिन्नप्रकारतानिरूपकत्वम् , निर्णयनिवर्त्यत्वम्—निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वम् , तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशाली संशयः प्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताशाल्यनुमितौ हेतुभूता पक्षतेति यावत् ।

ननु विभक्त्यर्थे विभक्त्यर्थाऽन्वयस्याऽव्युत्पन्नतया षष्ठ्यर्थप्रकारतायां सप्तम्यर्थविशेष्यताया निरूपितत्वसम्बन्धेन कथमन्वय इति चेन्न । 'क्रयाच्चैत्रस्य धनमि'त्यत्र पञ्चम्यर्थप्रयोज्यत्वस्य षष्ठ्यर्थस्वामित्वेऽन्वयः प्रामाणिक इति व्युत्पत्तिवादे लिखितत्वान्नानुपपत्तिः ।

वस्तुतः साध्यतावच्छेदकावच्छिन्नप्रकारकत्वं निश्चयत्वं धर्मितावच्छेदकीकृत्य भासते, तादृशप्रकारकत्वनिश्चयत्वोभयधर्मं धर्मितावच्छेदकीकृत्य पक्षविशेष्यकत्वं भासते, एवं च

---

१. सन्दिग्धः साध्यः सन्दिग्धसाध्यः स धर्मो यस्येति व्युत्पत्त्या तादृशार्थलाभः, धर्मपदस्य वृत्तिमदर्थकत्वात्, तथाच विशेष्यतासम्बन्धेन तत्पुरुषीयतत्साध्यविधेयकानुमितिं प्रति तत्पुरुषीयसन्देहविषयसाध्यवत्त्वस्य साध्यतावच्छेदकसम्बन्धेन कारणत्वं बोध्यम्, तेन न कार्यकारणयोर्वैयधिकरण्यमिति ।

जा तेन वह्निधर्मिकघटादिनिर्णयात्मकस्य पक्षधर्मिकवह्निमत्त्वनिश्चयस्य निवर्तनीयोऽपि वह्नौ घटादिसन्देहो न पर्वतपक्षकवह्न्यनुमितौ पक्षता, तत्र वह्निमत्त्वनिश्चयत्वेनाऽप्रतिबन्धकत्वादिति भावः ॥६॥

---

सप्तम्यर्थविशेष्यकत्वस्य षष्ठ्यर्थप्रकारकत्वविशिष्टज्ञानेऽन्वयात्तयोरवच्छेद्यावच्छेदकभावेना-ऽर्थत एव प्रकारतायां विशेष्यतानिरूपितत्वस्य लाभ इति । न च समानाधिकरणैकज्ञानीयविषयतयोरवच्छेद्यावच्छेदकभावनियमेन विशेष्यकत्वं विशेष्यतानिरूपिताविशेष्यित्वम् , प्रकारकत्वं च प्रकारतानिरूपितप्रकारित्वम् , तादृशविशेष्यित्वप्रकारित्वयोरवच्छेद्यावच्छेदकभावः, तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविशेष्यित्वावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारितावन्निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतेत्याद्येवार्थो लभ्यते, तथाच कथं प्रकारतायां विशेष्यतानिरूपितत्वमिति वाच्यम् । ययोर्विषयतयोः परस्परं निरूप्यनिरूपकभावस्तन्निरूपितविषयितयोरवच्छेद्यावच्छेदकभाव इति नियमेन तादृशविषतयोर्निरूप्यनिरूपकभावसम्भवादिति ।

तेन—निवर्त्तकतायां निश्चयत्वावच्छिन्नत्वनिवेशेन, तथाच पर्वतो, वह्निमान् वह्निर्घटवानिति समूहालम्बननिश्चयनिष्ठघटत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावाच्छिन्नप्रतिबन्धकतामादाय वह्निर्घटवान्नवेति संशयेऽतिव्याप्तिवारणाय निश्चयत्वावच्छिन्नत्वनिवेशनम् , निश्चयत्वावच्छिन्नत्वनिवेशे तु साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वनिश्चयत्वैतद्धर्मद्वयावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यता पर्वतो वह्निमान्नवेति संशये एव, वह्निर्घटवान्नवेति संशये नास्तीति नातिव्याप्तिः । अग्रे प्रतिबध्यतायां साध्याविशेष्यकत्वावच्छिन्नत्वनिवेशस्यावश्यकत्वेन पर्वते घटादिसन्देहेऽतिव्याप्तिमुपेक्ष्य वह्नौ घटादिसन्देहेऽतिव्याप्तिर्दत्ता । न चोक्तसंशयस्य पक्षतात्वे न क्षतिः, तादृशसिद्ध्यात्मकपरामर्शोत्तरं ततोऽनुमित्यापत्तिस्तु न सम्भवति तादृशपरामर्शकारणत्वस्याऽक्लृप्तत्वादिति वाच्यम् । यत्र वह्निर्घटवान्नवेति सन्देहानन्तरं सिध्द्यात्मकापेक्षाबुध्द्यात्मकपरामर्शः ततः साध्यसन्देहः परामर्शेऽप्रामाण्यज्ञानं च ततोऽप्रामाण्यज्ञानधर्मिकाऽप्रामाण्यज्ञानं तदनन्तरं जायमानाया वह्न्यनुमितेः प्रथमाऽप्रामाण्यज्ञानसमये आपत्तिः, सामग्रीसत्त्वादिति ।

ननु तादृशप्रतिबध्यतायां वक्ष्यमाणसाक्षात्परंपरासाधारणपक्षतावच्छेकावच्छिन्नप्रकारतानिरूपितसाध्यविशेष्यकत्वसाध्याभावप्रकारित्वान्यतरावच्छिन्नत्वविरहादेव नातिव्याप्तिरिति । न च वह्नौ पक्षे वह्नेस्साध्यतायां वह्निर्घटवान्नवेतिसंशयेऽतिव्याप्तेः, तत्र वह्निघटवानित्येकत्र द्वयमिति रीत्या ज्ञाननिष्ठघटत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादिति वाच्यम् । साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभाववत्पक्षतावच्छेदकाववच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशात् तादृशप्रतिबन्धकतायां तादृशनिरूपितत्वाभाववत्तादृशविशेष्यत्वावच्छिन्नत्वविरहान्नतादृशप्रतिबन्धकतामादाय तादृशसंशयेऽतिव्याप्तिरिति ।

पर्वतो वह्निमानिति निश्चयस्य वह्न्यभाववानिति बुद्धिं प्रति यथा वह्नित्वावच्छिन्नप्रकारताविशिष्टपर्वतत्वावच्छिन्नविशेष्यत्वेन प्रतिबन्धकत्वम् , वै० स्वनिरूपितत्वस्वान्यप्रकारत्वानिरूपितत्वोभयसम्बन्धेन, तथा पक्षतावच्छेदकावच्छिन्नविशेष्यताविशिष्टसाध्यतावच्छेदकावच्छिन्नप्रकारत्वेनापि, वै० स्वनिरूपकत्वस्वनिरूपकनिष्ठभेदाप्रतियोगित्वोभयसम्बधेन

इति विशेष्यताया इव प्रकारताया अपि साक्षात्प्रतिबन्धकतावच्छेदकत्वं विनिगमनाविरहादिति ध्येयम् ।

अथाऽत्र साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशादेवातिव्याप्तिवारणसम्भवे किं गुरुतरतादृशनिरूपितत्वाभावघटिततादृशनिश्चयत्वनिवेशेनेति चेन्न । पर्वतो वह्निमानित्यादौ पर्वतो घटवान्नवेति संशयेऽतिव्याप्तिः, तत्र पर्वतो वह्निघटवानित्येकत्र द्वयमिति रीत्या ज्ञाने प्रकारताद्वयनिरूपिता विशेष्यता एकैवेति घटत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां तादृशावच्छेदकतानिरूपितत्वसत्त्वेन तत्संशयीयप्रतिबध्यतायां सत्त्वात्, निश्चयत्वोपादाने च तादृशप्रतिबन्धकतायां साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभाववत्पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वविरहेणाऽतिव्याप्तिविरहात् । न च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकताकप्रतिबन्धकताविवक्षणादेव निरुक्तातिव्याप्तिवारणं सम्भवतीति निश्चयत्वनिवेशो व्यर्थ इति वाच्यम् । तथा सति पर्वतो वह्निमानित्यादौ घटो वह्निमान्नवेति संशयेऽतिव्याप्तेः, तत्र पर्वतघटौ वह्निमन्तौ इति द्वयोरेकमिति रीत्या ज्ञानीयविशेष्यताद्वयनिरूपिता एकैव प्रकारतेति घटत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां तादृशप्रकारत्वनिष्ठावच्छेदकतानिरूपितत्वसत्त्वेन तन्निरूपितत्वस्य एवं विपर्ययत्वावच्छिन्नत्वस्य च तत्प्रतिबध्यतायां सत्त्वात् । न च तादृशातिप्रसङ्गभङ्गाय पक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितत्वे सति साध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितत्वं प्रतिबन्धकतायां वाच्यम्, तादृशप्रतिबन्धकतायां च पक्षतावच्छेदकीभूतपर्वतत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वविरहेणावच्छेदकताद्वयनिरूपितत्वविरहादिति वाच्यम् । पर्वतो वह्निमानित्यादौ वह्निः वह्निमत्पर्वतवान्नवेति संशयेऽतिव्याप्तेः, वह्निमत्पर्वतवान् वह्निरित्याकारकनिश्चयनिष्ठतत्प्रतिबन्धकताया[१] अपि वह्नित्वावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतया तन्निरूपितप्रतिबध्यतावत्त्वात् । न च निश्चयत्वोपादानेऽपि तत्रातिव्याप्तेरावश्यकतया पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वनिष्ठावच्छेदकताकप्रतिबन्धकता वाच्या, तावतैव तत्रातिव्याप्तिव्युदास इति वाच्यम् । तथा सति वह्निमत्पर्वतो भूतलवृत्तिर्नवेति संशयेऽतिव्याप्तेः । यदि च वक्ष्यमाणसाध्याभावप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नत्वविरहादेव न तत्रातिव्याप्तिरित्युच्यते, तदा वह्नौ पक्षे वह्नेः साध्यतायां वह्निमद्वह्निर्देशवृत्तिर्नवेति संशयेऽतिव्याप्तिः । न चावच्छेदकतानात्मकसाध्यतावच्छेदकावच्छिन्नप्रकारतानिवेशादेव तात्रातिव्याप्तिवारणं सम्भवतीति वाच्यम् । तथासति पर्वतो वह्निमानित्यादौ पर्वतो महानसीयवह्निमान्नवेति संशयेऽतिव्याप्तेः तत्संशयीयमहानसीयवह्निमान्पर्वत इति निश्चयनिष्ठमहानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः वह्नित्वावच्छिन्नप्रकारत्वनिष्ठावच्छेदकताकतया तन्निरूपितप्रतिबध्यतावत्त्वात् । न च साध्यतावच्छेदकनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रकारत्वनिष्ठावच्छेदकताकप्रतिबंधकतानिवेशादेवातिव्याप्तिवारणं सम्भवतीति वाच्यम् । तथासति महानसीयवह्निसाध्यकस्थले वह्निमान्नवेतिसंशयेऽतिव्याप्तेः, तत्र

१. वह्निमत्पर्वतत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबन्धकताया इत्यर्थः ।

वह्नित्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादिति ।[1]

१. ननु साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रकारत्वनिष्ठप्रकारतात्वावच्छिन्नावच्छेदकतानिरूपितत्वस्य प्रतिबन्धकतायां निवेशादेव तत्रातिव्याप्तिवारणं सम्भवति, तत्प्रतिबन्धकतायां वह्नित्वगतैकत्ववृत्तिप्रकारत्वनिष्ठावच्छेदकतानिरूपितत्वविरहात् । न च महानसीयवह्निमानितिनिर्णयदशायामपि वह्न्यभाववानिति प्रतीत्यनुदयाद् वह्न्यभावबुद्धिं प्रति महानसीयत्ववह्नित्वगतद्वित्ववृत्तिप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकताया वाच्यतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतामादाय महानसीयवह्निसाध्यकस्थले वह्निमान्नवेति संशयेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् । वह्न्यभावबुद्धिं प्रति महानसीयवह्निमान् चत्वरीयवह्निमानित्यादिनानाज्ञानानां नानारूपेण नानाप्रतिबन्धकताकल्पनामपेक्ष्य लाघवाद्वह्नित्वनिष्ठावच्छेदकताकप्रकारताशालिनिश्चयत्वेनैकरूपेण प्रतिबन्धकताकल्पनमुचितम्, तथाच सति स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकगतद्वित्ववृत्तिप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतामादाय निरुक्तसंशयेऽतिव्याप्तिविरहात् । न च द्वित्ववृत्तिप्रकारताया अपि वह्नित्वावच्छिन्नप्रकारतात्वेन प्रतिबन्धकतावच्छेदकतया रूपवृत्तित्वनिवेशेऽपि उक्तदोषतादवस्थ्यमिति वाच्यम् । स्वनिरूपितावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकगतरूपवृत्तिप्रकारतात्वावच्छेदकताविवक्षणादुक्तातिव्याप्तिविरहादिति । स्वपदं प्रकारतानिष्ठावच्छेदकतापरम् ।

[स्वनिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावाच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेत्यपि केचित् । तथाचोक्तसंशयीयमहानसीयवह्निमान्पर्वत इति निश्चयनिष्ठप्रतिबन्धकतानिरूपितवह्नित्वावच्छिन्नप्रकारतात्वाच्छिन्नावच्छेदकतायां तादृशरूपं यन्महानसीयत्ववह्नित्वगतद्वित्वं तद्वृत्तित्वविरहान्नातिव्याप्तिः ]
प्रकृतस्थले महानसीयवह्नित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकता न महानसीयवह्नित्वनिष्ठा तस्या अवच्छेदकतात्वनिष्ठावच्छेदकत्वानिरूपितत्वात् । तथाच भवन्मते निश्चयत्वदानेपि प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकतायां रूपवृत्तित्वनिवेशं विनोक्तस्थले निर्वाहविरहेण तद्विशेषणस्यावश्यकतया गौरवानवकाशादिति चेन्न । नीलपर्वतो वह्निमानित्यादौ पर्वतत्वावच्छेदेन वन्ह्यभावावगाहिपर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तेः, तत्र पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतासत्वात्, निश्चयत्वदाने च साध्यतावच्छेदकगतरूपवृत्तिप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकगतरूपवृत्तिविशेष्यत्वावच्छिन्नत्वस्य तादृशप्रतिबन्धकतायां विरहात्, पर्वतत्वावच्छेदेन वन्ह्यभावबुद्धौ नीलपर्वतो वह्निमान् पीतपर्वतो वह्निमानित्यादिनानाज्ञानसाधारणपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैकरूपेण प्रतिबन्धकत्वात् । न चेष्टापत्तिः । नीलपर्वतत्वावच्छेदेन वह्निनिश्चये पर्वतो वह्निमान्नवेति संशयसत्त्वे नीलपर्वतो वह्निमानित्यनुमित्यापत्तेः । न च विशेष्यतायां पक्षतावच्छेदकगतरूपवृत्तित्वनिवेशेनैव तादृशदोषवारणमिति वाच्यम् । शुद्धपर्वतत्वावच्छिन्नविशेष्यतात्वेन प्रतिबन्धकतावच्छेदकतयाऽतिव्याप्तेर्दुर्वारत्वात् । न च पक्षतावच्छेदकगतरूपवृत्तिविशेष्यतात्वावच्छिन्नावच्छेदकताकप्रतिबन्धकताविवक्षणादेवाऽतिव्याप्तिवारणसंभवे निश्चयत्वनिवेशनमनर्थकमेवेति वाच्यम् । पर्वतो वह्निमानित्यादौ पर्वतो वह्निघटोभयवान्नवेति संशयेऽतिव्याप्तिः स्यात् वह्निघटोभयाभाववानिति बुद्धिं प्रति वह्निघटवानित्येकत्र द्वयमितिरीत्या ज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकताया वाच्यतया वह्नित्वगतरूपवृत्तिवह्नित्वावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकताकपर्वतत्वावच्छिन्नविशेष्यतात्वावच्छिन्नावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वात् ।

ननु पक्षतावच्छेदकावच्छिन्नविशेष्यतात्वावच्छिन्नावच्छेदकतायां स्वनिरूपितप्रकारतात्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकगतरूपवृत्तित्वनिवेशादेव निरुक्तातिव्याप्तिवारणं सम्भवति वह्नित्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकतया निरुक्तसम्बन्धेन तादृशावच्छेदकताया[1] वह्नित्वगतैकत्ववृत्तित्वविरहात् । न च वह्निनिश्चयत्वस्य वह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभाववद्विशेष्यताशालिज्ञानत्वरूपतया पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबन्धकतावच्छेदकतानिरूपितत्वस्य साक्षाद्वह्नित्वावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतायां विरहेणाऽसम्भवात्तादृशावच्छेदकतायां साध्यतावच्छेदकगतरूपवृत्तित्वं निवेशयितुमशक्यम्, परंपरया तादृशावच्छेदकतानिरूपितत्वनिवेशेऽर्थतो निश्चयत्वलाभ इति वाच्यम्। विनिगमनाविरहाद्वह्निनिश्चयस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नाभावत्वावच्छिन्नप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेनापि प्रतिबन्धकतया पक्षतावच्छेदकावच्छिन्नविशेष्यतात्वावच्छिन्नावच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतायां प्रसिद्धत्वेन तादृशाविशेष्यतात्वावच्छिन्नावच्छेदकतायां साध्यतावच्छेदकगतरूपवृत्तित्वनिवेशसम्भवेन पूर्वोक्तदोषवारणसंभवात् । एवमग्रे विवक्षणीयस्य साध्याभावत्वावच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नत्वघटकपर्याप्तिनिवेशेनैव तद्वारणसंभवे निश्चयत्वनिवेशो व्यर्थ इति चेत् । अत्र केचित्–पर्वतो वह्निमानित्यनुमितौ भूतलं वह्निमान्नवेति संशयेऽतिव्याप्तिः साध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपिता सती पक्षविशेष्यत्वनिष्ठावच्छेदकताकप्रतिबन्धकतामध्ये पर्वतत्ववान् वह्निमान् पर्वतत्ववद्भूतलमिति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितत्वस्योक्तसंशयीयप्रतिबध्यतायां सत्त्वादितरवारकपर्याप्तिसहितसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वसत्त्वाच्चेति । निश्चयत्वविवेशे तु ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां निश्चयत्वव्यापकत्वविरहान्नातिव्याप्तिरित्याहुः । परे तु संशयत्वनिश्चयत्वयोर्जातिविशेषत्वमेव, न तु साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितत्वार्थकत्वम्, तथाच प्रकारत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वनिवेशस्यैव लघुत्वादित्याहुः ।

वस्तुतस्तु पर्वतो वह्निमानित्यनुमितौ अतिव्याप्त्यापत्तेः, तत्र तादृशानुमितिं प्रति सिद्धेर्विरोधितया पर्वतो वह्निमानितिसिद्धिनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वात् । न च निश्चयत्वनिवेशेपि वरणासम्भवः, तादृशसिद्धेस्तादृशानुमितिं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्धकत्वादिति वाच्यम्। तथासति निश्चयत्वनिवेशे साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावनिष्ठावच्छेदकताभिन्ना सती पक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती अप्राण्यज्ञानाभावनिष्ठावच्छेदकताभिन्ना सती बुद्धित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वाभावनिष्ठावच्छेदकतानिरूपिततादृशविशेष्यत्वनिष्ठावच्छेदकतानिरूपिताऽप्रामाण्यज्ञानाभावनिष्ठावच्छेदकतानिरूपितबुद्धित्वनिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशात् अनुमितिप्रतिबन्धकतावारणसम्भवात्, तत्र सिषाधयिषाविरहस्यावश्यावच्छेदकत्वात् । न चानुमितौ संशयत्वविरहादेव नातिव्याप्तिरिति वाच्यम्। संशयत्वस्य निश्चयाप्रतिबन्धकत्वार्थकतया तत्संभवात् । न वानुमितेरपि समानविषयकानुमितिं प्रति प्रतिबन्धकतया अनुमितौ तादृशनिश्चयाप्रतिबन्धकत्वरूपसंशयत्वविरह इति वाच्यम्। तथासति समानविषयकानुमितिं प्रति अनुमित्तेः अनुमितित्वेन प्रतिबध्यतया अनुमितौ साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षावच्छेकावच्छिन्नविशेष्यताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वरूपसंशयत्वस्या-

[1] पर्वतत्वावच्छिन्नविशेष्यतात्वावच्छिन्नाया प्रकारताद्वयनिरूपितविशेष्यतानिष्ठावच्छेदकताया इत्यर्थः ।

ऽक्षतत्वात् । यदि च संशयपक्षतावादिमते सिद्धित्वे संशयानुत्पादेनैवाऽनुमित्यनुत्पादात् सिद्धेरनुमितिविरोधित्वे मानाभावेन सिद्धिप्रतिबन्धकतामादाय निश्चयत्वव्यावृत्त्यसम्भव इत्युच्यते, तदा पर्वतो वह्निमानित्यादिशाब्दं प्रति समानविषयकशाब्दत्वेन प्रतिबन्धकत्वात् पर्वतो वह्निमानितिशाब्दत्वावच्छिन्नप्रतिबन्धकतामादाय तादृशशाब्दबोधेऽतिप्रसङ्गवारणाय निश्चयत्वप्रवेशात् , तथाच तस्य शाब्दत्वेन प्रतिबन्धकतया निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य शाब्दबोधे विरहादिति । न च तत्र संशयत्वविरहादेव नातिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वरूपसंशयत्वस्याक्षतत्वात् तस्य समानविषयकशाब्दत्वेन प्रतिबध्यप्रतिबन्धकभाव इति दिक् । न च तत्र ज्ञानत्वावच्छिन्नप्रतिबन्धकतानिवेशेनैव तादृशबोधेऽतिव्याप्तिवारणं सम्भवति तत्र च शाब्दत्वेन प्रतिबध्यप्रतिबन्धकभावात् , शाब्दत्वं च जातिविशेष इति वाच्यम् । शब्दजन्यज्ञानत्वं शाब्दत्वमिति मते ज्ञानत्वावच्छिन्नत्वस्य तादृशबोधनिष्ठप्रतिबन्धकताया मक्षततया तन्मत एव निश्चयत्वस्य व्यावृत्तिसम्भवात् । न च शाब्दज्ञानत्वेन प्रतिबध्यप्रतिबन्धकभावे साध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वरूपसंशयत्वविरह इति वाच्यम् । बाधनिश्चयकाले अनुमितीच्छादशायामनुमित्युत्पादात्तादृशेच्छाव्यक्तीनां विशिष्टबुद्धिं प्रति प्रतिबन्धकतायामुत्तेजकत्वे तादृशेच्छादशायां विशिष्टप्रत्यक्षानुदयेन व्यभिचारात् , अनुमितित्वावच्छिन्नप्रतिबन्धकतायां अनुमितीच्छाव्यक्तेरुत्तजकताया वाच्यतया विशिष्टबुद्धित्वावच्छिन्नप्रतिबध्यत्वाप्रसिद्ध्या संशयत्वशरीरे साध्यतावच्छेदकावच्छिन्नप्रकारताकबुद्धित्वावच्छिन्नप्रतिबन्धकतानिवेशासम्भवेनाऽनुमितित्वावच्छिन्नप्रतिबध्यतानिवेशस्यावश्यकतया तादृशशाब्दबोधे शब्दजन्यज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतासत्त्वेऽपि अनुमितित्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वस्याक्षतत्वात्–इति । शाब्दत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वनिवेशे पर्वतो वह्निमानित्यादौ पर्वतो वह्निमान्न वा वह्निघटोभयाभाववान्नवेतिसमूहालम्बनसंशयेऽव्याप्तिः स्यात् , वह्निघटवानितिशाब्दनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धतावच्छेदकविषयिताशून्यज्ञानत्वविरहात् , अस्माकन्तु अनुमितित्वावच्छिन्नप्रतिबध्यतानिवेशे वह्निघटवानित्येकत्र द्वयमिति ज्ञाने अनुमितित्वविरहात् इति ध्येयम् ।

वस्तुतस्तु प्रत्यक्षनिश्चयं प्रति ग्राह्यसंशयस्य प्रतिबन्धकतया पर्वतो वह्निमानिति प्रत्यक्षनिश्चयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वस्य पर्वतो वह्निमान्नवेति संशये विरहेण तत्राव्याप्त्या प्रतिबध्यतायां साध्यतावच्छेदकावच्छिन्नप्रकारत्वपक्षतावच्छेदकावच्छिन्नविशेष्यत्वयोः ज्ञानत्वस्य च इतरवारकपर्याप्तिनिवेशस्यावश्यकतया शाब्दबोधत्वावच्छिन्नप्रतिबध्यतायां ज्ञानत्वावच्छिन्नत्वेऽपि शाब्दजन्यत्वस्याधिकतया प्रतिबध्यतावच्छेदकत्वेन तादृशप्रकारत्वविशेष्यत्वज्ञानत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वविरहात्तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वस्य निरुक्तशाब्दबोधे सत्त्वादतिव्याप्तिवारणाय प्रतिबन्धकतायां निश्चयत्वनिवेश इति । तादृशनिश्चयत्वघटकसकलपदार्थानामितरवारकपर्याप्तिनिवेशाच्छब्दजन्यत्वावच्छिन्नप्रतिबन्धकतामादाय शाब्दबोधेऽतिव्याप्तिवारणसम्भवादिति कृतं पल्लवितेन ।

यत्तु कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति कामिनीजिज्ञासायाः कामिनीत्वप्रकारकज्ञानेच्छात्वेन प्रतिबन्धकतया विषयितासम्बन्धेन कामिनीत्वसाध्यकज्ञानपक्षकस्थले घटवान्नवेतिसंशयेऽतिव्याप्तिः, तत्र साध्यतावच्छेदकीभूतकामिनीत्वत्वावच्छिन्नप्रकारत्वनिष्ठावच्छेदकताकपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताकज्ञानत्वनिष्ठावच्छेदकताककामिनीज्ञानेच्छानिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादिति, अतो निश्चयत्वनिवेश इति । तत्तुच्छम् । विषयविषयकत्वमनिवेश्य कामिनीज्ञानान्यज्ञानसामान्यं प्रत्येव कामिनीजिज्ञासायाः प्रतिबन्धकतया प्रतिबध्यतायां वक्ष्यमाणसाध्यविशेष्यकत्वसाध्याभावप्रकारित्वान्यतरावच्छिन्नत्वविरहादिति । तथा च कामिनीजिज्ञासानिष्ठप्रतिबन्धकतानिरूपितकामिनीज्ञानान्यज्ञानत्वावच्छिन्ना सकलप्रतिबध्ये एकैव प्रतिबध्यता तदवच्छेदककोटौ प्रकारत्वयोर्न प्रवेश इति ध्येयम् ।

केचित्तु भिन्नविषयकप्रत्यक्षं प्रति अनुमितिसामग्र्याः प्रतिबन्धकतया पर्वतो वह्निमानित्यादौ भूतलं घटवन्नवेति संशयेऽतिव्याप्तिः, तत्र पर्वतो वह्निमान्नवेति संशयरूपानुमितिसामग्र्याः तत्प्रतिबन्धकतया तादृशसंशयनिष्ठप्रतिबन्धकतायाः साध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठावच्छेदकताकतया पक्षतावच्छेदकावच्छिन्नविशेष्यतानिष्ठावच्छेदकताकतया तत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावत्वादिति। न चाऽनुमितिसामग्र्याः येन रूपेणानुमितिं प्रति कारणत्वम् भिन्नविषयकप्रत्यक्षं प्रति तेन रूपेण तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वम्, एवं च पर्वतो वह्निमानित्यनुमितिं प्रति पक्षसाध्यविशेष्यकसंशयानामनुगतरूपेणैककारणतालाभाय साध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयनिवर्त्त्यसंशयत्वेन कारणताया वाच्यतया भिन्नविषयकप्रत्यक्षं प्रति तादृशसमाग्र्याः तादृशप्रतिबध्यतावत्संशयत्वेनैव प्रतिबन्धकता वाच्या, तथाच पर्वतो वह्निमान्नवेति संशयनिष्ठप्रतिबन्धकतायां साध्यतावच्छेदकत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वविरहादेव नातिव्याप्तिः, लक्षणघटकीभूतायाः साध्यतावच्छेदकावच्छिन्नप्रकारतायाः प्रतिबन्धकतावच्छेदकतावत्त्वमुपलक्षणविधया अनिवेश्य, विशेषणविधया तादृशप्रकारत्वनिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशादिति वाच्यम्। तथासति च यादृशस्थलविशेषे केवलं पर्वतो वह्निमान्नवेत्येकविधसंशयादेवानुमितिः तत्र तादृशसंशयस्य लाघवात् वह्नित्वावच्छिन्नप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिसंशयत्वेनैव कारणता, भिन्नविषयकप्रत्यक्षं प्रति तेनैव रूपेण प्रतिबन्धकतेति तत्स्थल एव तत्स्थलीयानुमितिसामग्रीप्रतिबन्धकतामादाय घटवान्नवेति संशयेऽतिव्याप्तिः। यत्रैकविधसंशयादेवानुमितिः तत्र पर्वतत्वावच्छिन्नविशेष्यकवह्न्यभावत्वावच्छिन्नप्रकारताकसंशयत्वेनैव कारणता तत्स्थले पक्षतालक्षण एवास्तीति यदि विभाव्यते, तदा तत्स्थलीयानुमितिसामग्रीप्रतिबन्धकतामादाय वह्न्यभावसाध्यकस्थले वह्न्यभावो घटावन्नवेति संशयेऽतिव्याप्तिः तादृशसामग्रीनिष्ठप्रतिबन्धकतायां साध्यतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वादिति। अथ भिन्नविषयकानुमितिसामग्र्या विनिगमनाविरहात्परामर्शविशिष्टपक्षतात्वेन पक्षताविशिष्टपरामर्शत्वेनापि प्रतिबन्धकतया निश्चयत्वनिवेशेपि वह्निव्याप्यधूमसाध्यकस्थले वह्निव्याप्यधूमवानित्याकारकतादृशस्थलीयानुमितिसामग्रीप्रतिबन्धकतायाः साध्यतावच्छेदकीभूतवह्निव्याप्यधूमत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नतया तमादाय वह्निव्याप्यधूमो घटवान्नवेतिसंशयेऽतिव्याप्तेर्दुर्वारतया तद्वारणाय प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्यावश्यकतया अनुमितिसामग्रीप्रतिबन्धकतामादाय नातिव्याप्तिः सम्भवति, तस्या एकविशिष्टापरत्वेन भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकतया ज्ञानवैशिष्ट्यानवच्छिन्नत्वविरहादिति चेत्, तर्हि तादृशाङ्कुरस्थले एव वह्निः, वह्निव्याप्यधूमवत्पर्वतवान्नवेति संशयेऽतिव्याप्तिः, तादृशप्रत्यक्षं प्रति वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्य विशेषणज्ञानमुद्रया कारणतया परामर्शविशिष्टपक्षतात्वेन प्रतिबन्धकताया कल्पयितुमशक्यतया तादृशप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वसत्त्वात्। अथाऽलौकिकसन्निकर्षप्रयोज्यविषयताशून्यानुमितित्यतिरिक्तज्ञानसामान्यं प्रति तादृशानुमितिसामग्र्याः प्रतिबन्धकतया विषयविषयकत्वस्य प्रतिबन्धकतावच्छेदककोटौ अप्रविष्टतया प्रतिबध्यतायां वक्ष्यमाणसाध्यविशेष्यकत्वसाध्याभावप्रकारित्वान्यतरावच्छिन्नत्वविरहादेवाऽतिव्याप्तिवारणं सम्भवतीति चेद्। सत्यम्। घटप्रत्यक्षेच्छासहकृतघटप्रत्यक्षसामग्रीदशायां भिन्नविषयकानुमितिसामग्रीसत्त्वे तादृशप्रत्यक्षोत्पादेन तादृशेच्छाव्यक्तीनामुत्तेजकताया आवश्यकतया घटप्रत्यक्षेच्छासहकृतपटप्रत्यक्षसामग्रीदशायां पटप्रत्यक्षसामग्रीदशायां घटप्रत्यक्षवारणाय विषयत्वनिवेशस्यावश्यकत्वादतिव्याप्तेर्दुर्वारत्वात्। नन्वेवमपि घटप्रत्यक्षेच्छाघटितघटप्रत्यक्षसामग्रीदशायां-घटशाब्देच्छाघटितघटशाब्दसाग्रीदशायाम् घटशाब्दानुदयेन घटप्रत्यक्षेच्छाविरहविशिष्टतादृशानुमितिसामग्र्याः घटप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकता वाच्या[1] ज्ञानत्वस्य प्रतिबन्धकतानवच्छेकतया प्रतिबध्यतायां ज्ञानत्वावच्छिन्नत्वनिवेशादेवाऽतिव्याप्तिवारणं सम्भवतीति। न च प्रत्यक्षत्वस्य इन्द्रियजन्यज्ञानत्वरूपतया प्रतिबध्यतायां ज्ञानत्वावच्छिन्नत्वमबाधितमिति वाच्यम्। ज्ञानयमानलिङ्गस्य कारणतामते

१. एवं घटशाब्देच्छाविरहविशिष्टतादृशानुमितिसामग्र्याः घटविषयकशाब्दं प्रति प्रतिबन्धकत्वम्।

इन्द्रियहेतुकानुमितावपि इन्द्रियजन्यज्ञानत्वसत्त्वेन प्रत्यक्षत्वापत्तिरतो जातिविशेषस्यैव प्रत्यक्षत्वात् । अथवा इन्द्रियजन्यज्ञानत्वानवच्छिन्नत्वं प्रतिबध्यतायां प्रवेश्यादतिव्याप्तिवारणादिति चेन्न । प्रत्यक्षेच्छाघटितप्रत्यक्षसामग्र्या एव समानविषयकशाब्दबुद्धिं प्रति प्रतिबन्धकत्वं प्रकल्प्य प्रत्यक्षेच्छाघटितप्रत्यक्षसामग्रीकाले समानविषयकशाब्दबोधवारणसम्भवात् प्रत्यक्षत्वावच्छिन्नं प्रति भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वे मानाभावात् ज्ञानत्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेऽतिव्याप्तेर्दुर्वारत्वादतो निश्चयत्वनिवेश इत्याहुः । तदसत् । पक्षतावच्छेदकावच्छिन्नविशेष्यतात्वावच्छिन्नावच्छेदकतायां रूपवृत्तित्वनिवेशादेवाऽतिव्याप्तिवारणं सम्भवति, पर्वतो वह्निमान्न वेत्याकारकानुमितिसामग्र्याः वह्नित्वावच्छिन्नप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिसंशयत्वेन प्रतिबन्धकतया तादृशविशेष्यतात्वावच्छिन्नावच्छेदकताया वह्नित्वगतैकत्ववृत्तित्वाभावात् ।

अथ निश्चयत्वनिवेशेऽपि वह्निघटोभयसाध्यकस्थले वह्निघटोभयवान्न वेतिसंशयेऽतिव्याप्तिः, वह्निघटोभयाभावबुद्धिं प्रति वह्निघटवानित्येकत्र द्वयमितिरीत्या ज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्निघटनिश्चयत्वेन प्रतिबन्धकताया वाच्यतया साध्यतावच्छेदकीभूतवह्निघटोभयत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्वविरहादिति चेत् । सत्यम् । संशयातिरिक्तज्ञाने मुख्यविशेष्यांशे एकत्र द्वयमिति रीत्या भानानभ्युपगन्तृमतेन लक्षणकरणात् ।

अथ पर्वतो वह्निमानित्यादौ पर्वतो महानसीयवह्निमान्न वेतिसंशयेऽतव्याप्तिः, तत्र महानसीयवह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावस्यापि साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावाक्रान्ततया महानसीयवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादिति चेन्न। साध्यतावच्छेदकनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नअवच्छेदकत्वानिरूपितअवच्छेदकत्वनिष्टावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितपरम्परया निरूपितत्वसम्बन्धावच्छिन्नाच्छेदकताकप्रतियोगिताकाभाववद्विशेष्यताकज्ञानत्वावच्छिन्नप्रतिबन्धकतेत्यादेर्निवेश्यत्वात् । महानसीयवह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावस्य साध्यतावच्छेदकनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेकताभिन्नमहानसीयत्वनिष्ठावच्छेदकत्वानिरूपितप्रतियोगिताकत्वविरहात् । ननु तथापि पर्वतो महानसीयवह्निमानित्यादौ पर्वतो वह्निमान्नवेत्याकारकसंशयेतिऽव्याप्तिर्दुर्वारैव, वह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावस्यापि साध्यतावच्छेदकमहानसीयवह्नित्वनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादिति । न च साध्यतावच्छेदकगतरूपवृत्तिप्रकारत्वान्यप्रकारतानिरूपितत्वं नास्तीत्यभावस्य निवेशात् महानसीयत्ववह्नित्वगतरूपवृत्तिप्रकारत्वान्यप्रकारतानिरूपितत्वाभावस्यैव निवेशाक्रान्ततया तस्य प्रतिबन्धकतानवच्छेदकत्वात् । वह्न्यभाववत्ताबुद्धिं प्रति महानसीयवह्निमानित्यादिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वनिष्ठावच्छेदकताकप्रकारताकनिश्चयत्वेन प्रतिबन्धकताया वाच्यत्वान्नातिव्याप्तिरिति वाच्यम् । तथासत्यसम्भवापत्तेः, रूपवृत्तिप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतायाः कुत्राप्यसम्भवात् । न च तादृशसंशयनिष्ठप्रतिबध्यतायां वक्ष्यमाणसाध्यविशेष्यकत्वसाध्याभावप्रकारित्वान्यतरावच्छिन्नत्वविरहादेव तादृशसंशये नातिव्याप्तिरिति वाच्यम् । वह्निपक्षकमहानसीयवह्निसाध्यकस्थले महानसीयवह्निर्वह्निमान्नवेति संशयेऽतिव्याप्तिरिति चेन्न स्वनिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदताकप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेतकत्वसम्बन्धेन साध्यतावच्छेदकगतरूपवृत्त्यवच्छेगकतात्वावच्छिन्नावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकाभावनिवेशाद्वह्निमान्नवेतिसंशयनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितपरम्परानिरूपितसाध्यतावच्छेदकनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकगतरूपवृत्तित्वविरहात् , स्वनिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य वह्नित्वगतैकत्वे सत्त्वादिति दिक् । अथात्र तादृशनिश्चयनिष्ठवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन पर्वतत्ववद्भूतलमितिनिश्चयकालीनपर्वतत्ववान्

वह्निमानित्याकारकनिश्चयदशायां भूतलं वह्न्यभाववत् इति ज्ञानानुदयेन भूतलविशेष्यकवह्न्यभाववुद्धिं प्रति पर्वतत्ववद्भूतलमित्याकारकनिश्चयकालीनपर्वतत्ववान् वह्निमान् इत्याकारकनिश्चयस्यापि तादृशनिश्चयविशिष्टवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकताया वाच्यतया तादृशनिश्चयविशिष्टवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय पर्वतो वह्निमानित्यादौ भूतलं वह्निमान्नवेतिसंशयेऽतिव्याप्तिरिति चेन्मैवम्। प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशात्। अथवा साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावनिष्ठावच्छेदकताभिन्ना सती पक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकत्वभिन्ना सती ज्ञानत्वनिष्ठावच्छेदकत्वभिन्ना सती यत्किञ्चित्प्रतिबन्धकतावच्छेदकीभूताभावनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशावच्छेदकतानिरूपितेत्यादिरित्या इतरवारकन्यूनवारकपर्याप्तिनिवेशात्तादृशप्रतिबन्धकतायामितरतादृशनिश्चयवैशिष्ट्यनिष्ठावच्छेदकतानिरूपिततया धारणाऽसम्भवादिति।

नन्वेवमपि गगनाभाववदभाववत्कालीनगगनाभावसाध्यकघटपक्षकस्थले घटस्तादृशगगनाभाववान्नवेति संशयेऽव्याप्तिः, घटस्तादृशगगनाभाववानिति निश्चयस्य घटस्तादृशगगनवानिति बुद्धिं प्रति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकतायाः वाच्यतया तत्र ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताविरहात्, इतरज्ञानवैशिष्ट्यनिष्ठावच्छेदकत्वानिरूपितत्वविरहाच्चेति चेन्न। अभाववति गगनाभावोऽव्याप्यवृत्तिरिति व्यापकांशेऽव्याप्यवृत्तित्वज्ञानकालीनगगनाभाववदभाववत्कालीनगगनाभाववान् घट इति निश्चयदशायां घटो गगनवानिति बुद्ध्युदयेन तादृशाव्याप्यवृत्तित्वज्ञानस्योत्तेजकताया वाच्यतया घटो गगनाभाववानितिवद् घटस्तादृशगगनवानिति बुद्ध्युत्पादापत्तेः ज्ञानवैशिष्ट्यानवच्छिन्नायाः प्रतिबन्धकतायास्तत्रावश्यं वक्तव्यतया तादृशवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतामादाय निरुक्तस्थले लक्षणगमनात्। अथ तथापि गगनाभाववदभाववत्कालीनघटो गगनाभाववानित्यत्र तादृशघटो गगनाभाववान्नवेतिसंशयेऽव्याप्तिर्दुर्वारैव ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायां मानाभावात्। न चोक्तरीत्या अभाववति गगनाभावोऽव्याप्यवृत्तिरिति ज्ञानकालीनगगनाभाववान् तादृशघटः, घटत्वावच्छेदेनाभावावगाहि अभाववान् गगनाभाववान् अभाववान् घट इति समूहालम्बननिश्चयदशायां घटत्वसामानाधिकरण्येन घटो गगनवानितिबुद्ध्युदयेन तादृशाव्याप्यवृत्तित्वज्ञानस्योत्तेजकतया तादृशघटो गगनवानितिबुद्ध्युत्पादापत्तेः अवश्यं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वं स्वीकार्यम् तादृशप्रतिबन्धकतायां व्यापकांशेऽव्याप्यवृत्तित्वज्ञानस्यानुत्तेजकत्वान्नापत्तिरिति वाच्यम्। निरुक्तसमूहालंबननिश्चये अभाववान् गगनाभाववानिति निश्चयविशिष्टाभाववत्तादृशघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना एका प्रतिबन्धकता, एका चाऽभाववान् गगनाभाववानितिनिश्चयविशिष्टघटत्वावच्छेदेनाभाववद्घटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना तथा च घटत्वावच्छेदेनाभाववद्घटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां तादृशाव्याप्यवृत्तित्वज्ञानस्योत्तेजकतयैवापत्तिवारणसम्भवे ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वान्तरकल्पनासम्भवात्।

अथ तथापि गगनाभाववदभाववत्कालीनघटो गगनाभाववानिदं ज्ञानं गगनाभावाभाववति गगनाभावप्रकारकमित्याकारकाऽप्रामाण्यज्ञानदशायां तादृशघटो गगनवानिति बुद्ध्युत्पादने गगनाभावाभाववन्निष्ठविशेष्यतानिरूपितगगनाभावप्रकारताकाप्रामाण्यज्ञानस्य तादृशप्रतिबन्धकतायामुत्तेजकता वाच्या, एवं तादृशघटो घटाभाववानिदं ज्ञानं घटाभावाभाववति घटाभावप्रकारताकमित्याद्यप्रामाण्यज्ञानस्यानुगतरूपेणोत्तेजकता वाच्या, तथासति तादृशघटो गगनाभाववानिदं ज्ञानं घटाभाववति घटप्रकारताकमित्यप्रामाण्यज्ञानकालीनबाधनिश्चयदशायां तादृशघटो गगवानितिबुद्ध्युत्पादापत्त्याऽवश्यं ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतास्वीकारः, तथा च गगनाभावाभाववन्निष्ठविशेष्यतानिरूपितगगनाभावप्रकारकाऽप्रामाण्यज्ञानस्य तादृशघटत्वावच्छिन्नविशेष्यतानिरूपितगगनाभावत्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबन्धकतायां घटाभावाभाववन्निष्ठविशेष्यतानिरूपितघटाभावत्वावच्छिन्नप्रकारताकाऽप्रामाण्यज्ञानस्य तादृशघटत्वावच्छिन्नविशेष्यतानिरूपितघटाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावाच्छन्नप्रतिबन्धकतायामेव घटाभावाभाववन्निष्ठविशेष्यताकपटाभावप्रकारताकाप्रामाण्यज्ञानस्य तादृशघटत्वावच्छिन्नपटाभावप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां वाच्यतया आपत्ति-

केचित्तु पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्निकालीनघटवान्नवेति संशयेऽतिव्याप्तिः, वह्निमान् वह्निकालीनघटाभाववानितिनिश्चयविशिष्टस्य वह्निमान्पर्वत इति निश्चयस्य तादृशसंशयं प्रति प्रतिबन्धकत्वात्, तत्प्रतिवन्धकतायाश्च पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारत्वावच्छिन्नत्वादतस्तादृशनिश्चयत्वव्यापकत्वं प्रतिवन्धकतायां निवेशनीयम्, तथा च निरुक्तसंशयप्रतिवन्धकतायाः वह्निमान् तादृशघटाभाववानिति ज्ञानासमानकालीनपर्वतो वह्निमानिति निश्चयेऽसत्त्वेन निरुक्तनिश्चयत्वव्यापकत्वविरहान्नातिव्याप्तिः। एवं च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकप्रतिवन्धकतानिरूपितप्रतिवध्यताशालिसंशयः पक्षतेति पर्यवसितार्थे निश्चयत्वानुपादाने पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वस्य संशयसाधारणतया तत्र च प्रतिवन्धकताया अभावेन व्यापकत्वविरहादसंभवः स्यादतो निश्चयत्वनिवेश इति प्राहुः[1]।

---

विरहः। एवं च साध्यतावच्छेदकीभूतगगनाभावत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकीभूततादृशघटत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नज्ञानवैशिष्ट्यानवच्छिन्नप्रतिवन्धकताप्रसिध्द्या तादृशघटो गगनवान्नवेति संशये लक्षणसमन्वयसम्भवादिति चेद्। सत्यम्। अप्रामाण्यज्ञानस्य तत्तद्व्यक्तित्वेनोत्तेजकत्वात्, तादृशघटो गगनाभाववानिदं ज्ञानं घटाभावाभाववति घटाभावप्रकारकमित्युदासीनाऽप्रामाण्यव्यक्तेरुत्तेजककोटावप्रवेशादेवापत्तिविरहात् ज्ञानवैशिष्ट्यानवच्छिन्ननानाप्रतिवन्धकताकल्पने मानाभावादिति चेन्न। यन्मते अप्रामाण्यज्ञानस्यानुगतरूपेणोत्तेजकता ज्ञानवैशिष्ट्यानवच्छिन्ना नानाप्रतिवन्धकता च तन्मते एव लक्षणकरणादिति संक्षेपः।

१. न च प्रतिवन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेनैवोक्तदोषवारणसम्भवाद् व्यापकत्वनिवेशो व्यर्थ इति वाच्यम्। तथासति गगनाभाववदभाववत्कालीनघटो गगनाभाववानित्यनुमितौ तादृशघटो गगनवान्नवेति संशयेऽव्याप्तेः, तादृशसंशयं प्रति तादृशनिश्चयस्य अभाववान् गगनाभाववानितिनिश्चयविशिष्ट अभाववान् तादृशो घट इति निश्चयत्वेनैव प्रतिवन्धकत्वात्। न च व्यापकत्वनिवेशेऽपि वह्निकालीनघटाभाववद्वह्निमत्कालीनपर्वतो वह्निमानित्यनुमितौ तादृशपर्वतो घटाभाववान्नवेति संशयेऽतिव्याप्तिर्दुर्वारैव, तत्प्रतिवन्धकताया ज्ञानविशिष्टज्ञानात्मकपक्षधर्मिकसाध्यवत्तानिश्चयव्यापकत्वादिति वाच्यम्। वस्तुतस्त्वित्यादिना साध्याभावप्रकारकत्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नत्वस्य प्रतिवध्यतायां निवेशनीयतयोक्तदोषवारणात्। न च वह्न्यभाववद्घटाभाववद्वह्निमत्कालीनपर्वतो वह्निमानित्यत्र तादृशपर्वतो घटवान्नवेति संशयेऽतिव्याप्तिरिति वाच्यम्। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारकत्वावच्छिन्नत्वस्य निवेशात्। न चैवं सति तादृशनिश्चयत्वव्यापकत्वनिवेशनं व्यर्थम्। वह्निकालीनघटवान्नवेति संशयीयप्रतिबध्यताया निरुक्तसाध्याभावत्वावच्छिन्नप्रकारकत्वावच्छिन्नत्वाभावादिति वाच्यम्। एवमपि पर्वतो वह्निमानित्यत्र पर्वतो वन्ह्यभाववत्पर्वतवान्नवेति संशयस्य पर्वतत्वसामानाधिकरण्येन वन्ह्यभावावगाहिनो वारयितुमशक्यत्वात्, तथाहि–वह्निमान् वन्ह्यभाववत्पर्वताभाववानिति निश्चयविशिष्टस्य पर्वतत्वसामानाधिकरण्येन वह्निमत्तानिश्चयस्य तादृशसंशयविरोधित्वात्। न च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारकत्वावच्छिन्नत्वस्य निवेशेनैव नोक्तदोष इति वाच्यम्। तस्य लक्षणान्तरत्वात्। मन्मते व्यापकत्वनिवेशेनैव दोषाभावात्। एवं पर्वतत्ववद्भूतलमितिनिश्चयविशिष्टपर्वतत्ववान् वह्निमानितिनिश्चयत्वावच्छिन्नप्रतिवन्धकताया वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकत्वविरहेण पर्वतो वह्निमानित्यादौ भूतले वह्निमन्नवेति संशये नातिव्याप्तिः। अनुमितावपि वह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वसत्त्वेन शाब्दत्वावच्छिन्नप्रतिवन्धकतामादाय शाब्दे नातिव्याप्तिः। महानसीयवह्निसाध्यकस्थले वह्निमान्नवेति संशयेऽतिव्याप्तिस्तु तत्र प्रतिबन्धकतायां साध्यतावच्छेदकगतरूपवृत्तित्वनिवेशादेव

अत्र पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्तनीयत्वमात्रं बाधनिश्चयेऽतिव्याप्तम्, अतः संशयपदम्। न च बाधनिश्चयस्य पक्षतात्वेपि न क्षतिः, विशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य विरोधित्वादेव तत्राऽनुमित्यसम्भवादिति वाच्यम्। सन्दिग्धाऽप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकादपि परामर्शाद्वह्न्यनुमित्यापत्तेः, तादृशबाधनिश्चस्य विशिष्टबुद्ध्यप्रतिबन्धकत्वात्।

---

अत्रेति। तथाच संशयपदानुपादाने पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यो यः इत्येतावन्मात्रोक्तौ बाधनिश्चयस्य पक्षतात्वापत्तिः, तस्याऽपि पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यत्वादिति भावः।

बाधनिश्चयानन्तरं अलौकिकप्रत्यक्षाऽनुमितिशाब्दानामनुत्पादेन तत्तद्रूपेण प्रतिबन्धकत्वकल्पने गौरवाल्लाघवाद्विशिष्टबुद्धित्वस्यैव प्रतिबध्यतावच्छेदकत्वं वाच्यमित्याह—विशिष्टबुद्धिसामान्यं प्रत्येवेति। अनुमित्यसम्भवादिति। अनुमितेरपि विशिष्टबुद्धित्वत्, तथाच बाधनिश्चयस्य स्वातन्त्र्येण विरोधितयाऽनुमित्यापत्तिर्न संभवतीति भावः।

अथ विशिष्टबुद्धित्वावच्छिन्नं प्रति बाधनिश्चयस्य विरोधित्वे बाधनिश्चयकाले विशिष्टबुद्धित्वावच्छिन्नस्याऽपत्तिर्माभूत्, अनुमितित्वावच्छिन्नस्याऽऽपत्तिः कुतो न बाधकविरहादिति चेन्न। विशिष्टबुद्धित्वस्याऽनुमितित्वव्यापकतया 'व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्यसामग्री सहकारिणी'ति नियमानुरोधेन अनुमितित्वावच्छिन्नकार्योत्पत्तौ बाधनिश्चयाभावरूपविशिष्टबुद्धिसामग्र्याः सहकारितया बाधनिश्चयकाले सहकारिविरहादनुमितित्वावच्छिन्नस्याऽऽपत्त्यसम्भवादिति ध्येयम्[1]।

सन्दिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे इति। पर्वतो वह्न्यभाववानिदं ज्ञानमप्रमा न वेति बाधनिश्चयधर्मिकाऽप्रामाण्यसंशयदशायामित्यर्थः। तथाचैतादृशबाधनिश्चयसत्त्वे 'वह्निव्याप्यधूमवान्पर्वतो वह्निमानि'त्याकारकसिद्ध्यात्मकपरामर्शसत्त्वेऽनुमितिवारणाय संशयपदमिति भावः। नन्वत्र गृहीताऽऽप्रामाण्यकेत्यपहाय सन्दिग्धाऽप्रामाण्यकेत्युक्तिः सन्दर्भविरुद्धा, सन्दिग्धाऽप्रामाण्यकबाधनिश्चयवत् निश्चिताऽऽप्रामाण्यकबाधनिश्चयस्याऽप्यनुमित्यप्रतिबन्धकत्वेनोभयविधाऽप्रामाण्यज्ञानस्यैव बाधनिश्चयप्रतिबन्धकताविघटकत्वेनाऽनुमित्यापत्तिसम्भवादिति चेन्न। परामर्शकारणतायां यथाऽप्रामाण्यज्ञानस्योत्तेजकत्वम्[2], तथा संशय(पक्षता)कारणतायामपि तस्योत्तेकत्वे यत्र पर्वतो

---

वारणीया। सामग्रीप्रतिबन्धकतायां साध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकत्वविरहाद् वन्ह्यभावसाध्यकस्थले पर्वतो वह्निमानित्यनुमितिसामग्रीप्रतिबन्धकतामादाय वन्ह्यभावो वह्निव्याप्यपर्वतवान्नवेति संशये नातिव्याप्तिरिति प्राहुः।

१. केचित्तु बाधनिश्चयकाले अनुमितिर्जायतामितीच्छादशायामनुमित्युत्पादेन तदिच्छाव्यक्तेरुत्तेजकतया तदिच्छाव्यक्तिदशायां प्रत्यक्षादिवारणायाऽनुमितित्वावच्छिन्नं प्रत्येव तदिच्छाव्यक्तेरुत्तेजकताया वाच्यतायां अनुमितित्वावच्छिन्नं प्रत्यपि बाधनिश्चयस्य विरोधितया बाधनिश्चयकालेऽनुमितित्वावच्छिन्नस्याऽऽपत्त्यसम्भवादिति प्राहुः।

२. यस्य निश्चयत्वेन कारणत्वं तद्धर्मिकसंशयनिश्चयसाधारणद्विविधाऽप्रामाण्यज्ञानत्वेनैवोत्तेजकत्वम्, निश्चयधर्मिकोभयविधाऽप्रामाण्यज्ञानस्यैव निश्चयत्वव्याघातकत्वात्। यस्य तु संशयत्वेन ज्ञानत्वेन वा कारणत्वं तत्र अप्रामाण्यनिश्चयत्वेनोत्तेजकत्वम्, संशयधर्मिकाऽप्रामाण्यसंशयस्याऽव्याघातकत्वादिति निश्चिताऽप्रामाण्यकबाधनिश्चयसत्त्वे कारणत्वाऽसम्भव इति ध्येयम्।

वह्निमान्न वेति संशयः, इदं ज्ञानमप्रमा नवेत्यप्रमाण्यसंशयश्च वर्त्तते तत्रानुमितिर्न स्यात्[1]; अतः संशयकारणतायामप्रामाण्यनिश्चयत्वेनैवोत्तेजकता वाच्या, एवं चाप्रामाण्यनिश्चयानास्कन्दितस्यैव साध्यवत्तानिश्चयप्रतिबध्यसंशयस्य कारणत्वं फलितम्; तथा च संशयपदानुपादानेऽपि निश्चिताप्रामाण्यकबाधनिश्चयस्य साध्यवत्तानिश्चयप्रतिबध्यत्वेऽपि अप्रामाण्यनिश्चयानास्कन्दितत्वविरहेण निश्चिताऽप्रामाण्यकबाधनिश्चयस्य पक्षताघटकत्वासंभवादुक्तम्–सन्दिग्धेति[2]।

ननु प्रामाण्यसंशयमपहायाप्रामाण्यसंशयानुधावनं गौरवग्रस्तमिति चेन्न। प्रामाण्यस्य तद्वति तत्प्रकारकत्वरूपतया अप्रामाण्यस्य च तदभाववति तत्प्रकारकत्वरूपतया वह्न्यभाववति वह्न्यभावप्रकारकं न वेति प्रामाण्यसंशयाऽपेक्षया वह्निमति वह्न्यभावप्रकारकं न वेत्यप्रामाण्यसंशयस्याभावाघटितत्वेन लघुशरीरत्वात्।

ननु इदानीन्तनपरामर्शादतीतानागताद्यनुमितिवारणाय तत्तदनुमितिं प्रति तत्तत्परामर्शव्यक्तेर्विशिष्य हेतुता वाच्या, एवं च सन्दिग्धाप्रामाण्यकबाधनिश्चयकालेऽनुमितिः प्रसिद्धा चेदापत्तिः सम्भवति, यादृशं च फलं क्वचित्प्रसिद्ध्यति तस्यैवापत्तिः सम्भवति क्लृप्तसामग्रीबलाद्, यादृशं च फलं सर्वथैवाप्रसिद्धम्, तस्यापादकाभावादापत्तिरशक्यैवेति सन्दिग्धाप्रामाण्यकबाधनिश्चयस्थलीयसिद्ध्यात्मकपरामर्शव्यक्तेरनुमितिहेतुत्वास्वीकारादेव नोक्तापत्तिः। न च सन्दिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकपरामर्शः ततः संशयस्तदुत्तरानुमितेः संशयोत्पत्तिक्षणे आपत्तिरिति वाच्यम्। संशयं प्रति परामर्शस्य प्रतिबन्धकतया तदुत्तरं संशयोत्पत्त्यभावेन तदुत्तरमनुमित्यसंभवादिति[3] चेन्न। प्रथमं सन्दिग्धाप्रामाण्यकबाधनिश्चयः ततोऽपेक्षाबुद्ध्यात्मकसिद्ध्यात्मकपरामर्शः–ततः सिद्ध्यंशेऽ-

---

१. संशयधर्मिकाऽप्रामाण्यसंशयसत्त्वेऽनुमितिर्भवति, संशयधर्मिकाऽप्रामाण्यनिश्चयसत्त्वेऽनुमितिर्न भवतीति।

२. न च यद्यदप्रामाण्यज्ञानव्यक्तिसत्त्वे पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यसत्त्वे अनुमितिर्न जायते तत्तदप्रामाण्यग्रहाभावकूटविशिष्टसाध्यवत्तानिश्चयप्रतिबध्यत्वेनैव कारणत्वं वाच्यं तथाच नोक्तापत्तिरिति वाच्यम्। अप्रामाण्यज्ञानव्यक्तीनामनन्तानां तत्तद्व्यक्तिनोत्तेजकत्वेऽतिगौरवान्निश्चयव्यक्तीनामेवोत्तेजकत्वं वाच्यम्, न तु संशयव्यक्तीनामिति।

३. यत्तु यत्रादौ सन्दिग्धाऽप्रामाण्यकबाधनिश्चयः—ततोऽपेक्षाबुध्यात्मकसिध्यात्मकपरामर्शः–ततः साध्यांशेऽव्याप्यवृत्तित्वज्ञानं—ततः साध्यसंशयः—ततोऽनुमितिः तस्या अव्याप्यवृत्तित्वग्रहकाले आपत्तिरिति। तन्न। तदभावव्याप्यवत्तानिश्चयस्य तद्वत्ताबुद्धिं प्रति प्रतिबन्धकतायां व्यापकांशेऽव्याप्यवृत्तित्वज्ञानस्यैवोत्तेजकतया उक्तस्थले साध्यांशेऽव्याप्यवृत्तित्वग्रहसत्त्वे साध्यसंशयाऽसम्भवात, संशयं प्रति कोट्यंशेऽव्याप्यवृत्तित्वग्रहस्य प्रतिबन्धकत्वात एतस्य च सत्प्रतिपक्षग्रन्थे भट्टाचार्येणोक्तत्वात, तादृशस्थले समुच्चयस्यैवोपगमात, तथाचाऽव्याप्यवृत्तित्वज्ञानाभावविरहादेव संशयाऽसम्भवेन तदुत्तरानुमितेस्तत्क्षणे आपत्त्यसम्भवात। न च यत्र प्रथमं सन्दिग्धाऽप्रामाण्यकबाधनिश्चयः ततः पर्वतत्वसामानाधिकरण्येन सिध्यात्मकपरामर्शः ततः पर्वतत्वसामानाधिकरण्येन वह्न्यभावावगाहिसंशयः ततोऽनुमितिः तस्याः संशयक्षणेत्यापत्तिरिति वाच्यम्। संशयपक्षतावादिनये पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्य संशयस्यैव हेतुतया सामानाधिकण्येन तादृशसंशयस्याऽहेतुत्वात, अवच्छेदकावच्छेदेनवह्निसाध्यकस्थले च अवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्यैव हेतुतया तद्विरहादेवाऽनुमितिसम्भवादिति।

यद्यपि निर्वह्निः पर्वतो रूपवान्न वेत्यादिसन्देहात्मकस्य बाधनिश्चयस्य पर्वतधर्मिकवह्निमत्तानिश्चयनिवर्त्यत्वं संशयत्वं चास्तीति वह्निसाध्यक

प्रामाण्यज्ञानं ततः साध्यसंशयः पूर्वाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानं च[1] ततोऽनुमितिः तस्याः सिद्धिधर्मिकाप्रामाण्यज्ञानक्षणे आपत्तिः, तत्र सन्दिग्धाप्रामाण्यकबाधनिश्चयरूपपक्षतासत्त्वादिति।

यद्यपीति। नन्वत्र सन्दिग्धाऽप्रामाण्यकबाधनिश्चये एवाऽतिव्याप्तिसम्भवे स्थलान्तरानुधावनमनुचितमिति चेन्न। पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वे सति पक्षतावच्छेदकावच्छिन्नविशेष्यता—साध्यतावच्छेदकावच्छिन्नविशेष्यता—एतदन्यतरनिरूपितकोटितावत्त्वमेव संशयत्वं वक्तव्यम्, तथा च[2] प्रकारताविशिष्टपक्षसाध्यान्यतरविशेष्यतावत्त्वं साध्यवत्तानिश्चयप्रतिबध्यसंशये फलितम्, वै० स्वनिरूपितत्व स्वान्यप्रकारतानिरूपितत्वोभयसम्बन्धेन, एवं च सन्दिग्धाप्रामाण्यकबाधनिश्चयीयाप्रामाण्याप्रामाण्याभावकोटितायां निरुक्तान्यतरनिरूपितत्वविरहेणोक्तदोषाभावात्, निर्वह्निः पर्वतो रूपवान्नवेति संशयीयरूपाभावकोटितायां चान्यतरघटकपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वसत्त्वेन भवति तत्राऽतिव्याप्तिः[3]।

१. नचाऽप्रामाण्यज्ञानधर्मिकाऽप्रामाण्यज्ञानं संशयश्च नैकदोत्पत्तुमर्हति, सिद्धेः परामर्शस्य स्वांशेऽप्रामाण्यग्रहाभावविशिष्टं यदप्रामाण्यज्ञानं तदभावविशिष्टस्य कार्यकालवृत्तितया प्रतिबन्धकत्वादिति वाच्यम्। एवमपि उत्पत्तिक्षणावच्छिन्नो घटो गन्धाभाववानित्यत्र प्रथमं सन्दिग्धाप्रामाण्यकबाधनिश्चयः—ततः तादृशघटो गन्धाभाववान् गन्धाभावव्याप्यावांश्चेति सिष्याात्मकापेक्षाबुद्ध्यात्मकपरामर्शः—ततः सिष्यंशेऽप्रामाण्यज्ञानं—ततः साध्यसंशयः–ततोऽनुमितिः तस्यास्तृतीयक्षणे आपत्तेः, उत्पत्तिकालावच्छिन्नो घटो गन्धवानिति बुद्धौ तादृशघटो गन्धभावव्याप्यवानितिनिश्चयस्याऽप्रतिबन्धकत्वस्य सत्प्रतिपक्षग्रन्थे भट्टाचार्येणोक्तत्वादिति ध्येयम्।

चन्द्रनारायणभट्टाचार्यास्तु भाविसंशयधर्मिकाऽप्रामाण्यज्ञानात्मकापेक्षाबुद्ध्यात्मकसन्दिग्धाऽप्रामाण्यकबाधनिश्चयः—ततोऽपेक्षाबुद्ध्यात्मकसाध्यसंशयः—ततः सिष्याात्मकपरामर्शः—तदुत्तरक्षणेऽनुमितिर्न भवति, तत्तृतीयक्षणे चानुमितिरुत्पद्यते तस्याः परामर्शोत्तरक्षणे आपत्तिः। अथवा सन्दिग्धाऽप्रामाण्यकबाधनिश्चयोत्तरक्षणे वह्निव्याप्यधूमवान् पर्वतो वह्निमान् द्रव्यव्याप्यधूमवांश्चेति वह्निसाध्यकसिष्याात्मकद्रव्यसाध्यकसिद्ध्यनात्मकसमूहालम्बनपरामर्शाद् द्रव्यानुमितौ वह्नित्वावच्छिन्नविधेयकत्वापत्तेः, तत्प्रयोजकपक्षतापरामर्शसत्त्वात्। न च वह्न्यनुमित्यापत्तिरिति लेखनमसङ्गतमिति वाच्यम्। वह्न्यनुमित्यापत्तिपदस्य वह्निविधेयकानुमित्यापत्तिपरत्वात् कार्यकारणभावे व्यभिचारो दुर्वारः अतः संशयपदमिति प्राहुरिति संक्षेपः।

२. यद्वा पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यताव छेदिका या संशयत्वानिरूपका विशेष्यता तद्वत्त्वनिवेशादेवोक्तबाधनिश्चयवारणसम्भवात्। प्रकारकवादिनिष्ठा या संशयत्वनिरूपकविषयता सा न प्रतिबध्यतावच्छेदिका, निर्वह्निः पर्वतो रूपवान्न वेतिसंशयीयपर्वतत्वावच्छिन्नविशेष्यतायाः प्रतिबध्यतावच्छेदकत्वम्, अन्तराभासमानविषयतयोरैक्यादिति ध्येयम्। संशयत्वं चात्र प्रकारताविशिष्टविशेष्यताकत्वम्, वै० स्वनिरूपितत्वस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बधेन। तथा च सन्दिग्धप्रामाण्यकबाधनिश्चयीयपर्वतत्वावच्छिन्नविशेष्यतायां प्रकारताविशिष्टत्वविरहहेणाऽतिव्याप्तिविरहात्, निर्वह्निः पर्वतो रूपवान्न वेतिसंशयीयपर्वतत्वावच्छिन्नविशेष्यतायां च रूपत्वावच्छिन्नप्रकारताविशिष्टत्वेनातिव्याप्तिसम्भवादिति ध्येयम्।

३. न च ज्ञानं वह्निमदित्यत्र बाधनिश्चयधर्मिकाऽप्रामाण्यसंशयीयाऽप्रामाण्यतदभावकोटितायां

पक्षतालक्षणस्य तत्राऽतिव्याप्तिः, पक्षे साध्यसंशयत्वोक्तौ च नानुगमवार्त्ताऽपि ।

तथापि संशयत्वमत्र तादृशनिश्चयाऽप्रतिप्रबन्धकत्वम्, तथाच पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्त्यत्वे सति तादृशनिश्चयप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वं फलितार्थः, तेन गृहीताप्रामाण्यकबाधनिश्चयस्य पक्षधर्मिकसाध्यवत्ताज्ञाननिवर्त्तकत्वाभावेऽपि तन्निवर्त्तकतावच्छेदकविषयिताकत्वादेव व्युदासः ।

---

न च तथापि निर्वह्निः पर्वतो रूपवान्नवेति लघुसंशयमपहाय गुरुसंशयानुधावनं व्यर्थमिति वाच्यम् । रूपं नवेति संशयस्य रूपत्वाभावकोटिकतया तस्य रूपत्वत्वावच्छिन्नप्रतियोगिताकतया गुरुशरीरत्वात्, रूपाभावस्य च रूपत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकत्वेन लघुशरीरत्वात् । न च रूपत्वरूपत्ववच्छेदकोटिक एव तादृशसंशयः सम्भवतीति वाच्यम् । स्व–स्ववच्छेदकोटिकसंशयानुपगमात् ।

अथ तादृशप्रतिबध्यतावच्छेदकीभूतकोटिताख्यविषयतावत्त्वरूपसंशयत्वनिवेशादेव निर्वह्निः पर्वतो रूपवान्न वेति संशये रूपरूपाभावनिष्ठकोटिताख्यविषयतायाः तादृशप्रतिबध्यतावच्छेदकत्वविरहेणाऽतिव्याप्तिवारणसम्भवे तादृशनिश्चयाप्रतिबन्धकत्वरूपसंशयत्वनिवेशनं व्यर्थमिति चेन्न । संशये उभयप्रकारतानिरूपितैकविशेष्यताभ्युपगन्तृजगदीशमते कोटिताख्यविलक्षणविषयताया अनभ्युपगमात्, समुच्चये च उभयप्रकारतानिरूपितविशेष्यताद्वयाभ्युपगमादिति दिक् ।

पक्षे साध्यसंशयोक्ताविति । वन्ह्यभाववत्पर्वतकालीनभूतलं वह्निमान्नवेतिवसंशयेऽतिप्रसंगवारणाय पक्षनिवेशः । निर्वह्निः पर्वतो रूपवान्न वेतिसंशयेऽतिव्याप्तिवारणाय साध्येति । साध्यनिष्ठप्रकारताविशिष्टपक्षनिष्ठविशेष्यताकज्ञानत्वं तत् । वै० स्वनिरूपितत्व–स्वविशिष्टप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वोभयसं० । स्ववै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकावच्छिन्नत्वोभयसं० । नानुगमवार्त्तापीति । संशयस्य तादृप्येण हेतुत्वे साध्यविशेष्यकसंशयाद्यसंग्रहापत्तिः, तस्यापि हेतुत्वेऽननुगमतादवस्थ्यात् । इदमुपलक्षणम्—परस्परजन्यानुमितौ व्यभिचारोऽपि बोध्यः, प्रकारान्तरेण तन्निवारणे गौरवमिति ध्येयम् ।

तथापीति । तेन—तादृशप्रतिबन्धकतावच्छेदकविषयिताशून्यत्वनिवेशेन । निवर्तकत्वाभावेऽपि—पक्षधर्मिकसाध्यवत्तानिश्चयाऽप्रतिबन्धकत्वेऽपि । समानाकारक[1] ज्ञानीयविष-

---

तादृशान्यतरघटकपक्षविशेष्यतानिरूपितत्वसत्त्वात्तत्र बाधनिश्चयेऽतिव्याप्तिः सम्भवतीति वाच्यम् । स्थलान्तरानुधावनस्याऽवश्यकत्वे निर्वह्निः पर्वतो रूपवान्न वेति संशयानुधावने क्षतिविरहात् । अथवा पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यताघटितान्यतरनिरूपितत्वं कोटितायां निवेशनीयम्, रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथा च तादृशसंशयीयकोटितायां तद्रूपवृत्तिविशेष्यतानिरूपितत्वविरहेणाऽतिव्याप्तिविरहात्स्थलान्तरानुधावनमिति मन्तव्यम् ।

१. अत्र ज्ञाननिष्ठं समानाकारकत्वं च स्वीयमुख्यविशेष्यतावृत्तित्वम्, वृत्तित्वं च स्वीयमुख्यविशेष्यतावत्त्वसम्बन्धेन । एवं समानीकारकत्वेनाऽभिमतं ज्ञानम् । मुख्यविशेष्यतावत्त्वं च स्वसमनिय-

यिताया ऐक्येन अप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयविषयितायाः अप्रामाण्यज्ञानास्कन्दितबाधनिश्चयविषयितायाश्चैक्यतया तस्या अपि प्रतिबन्धकतावच्छेदकत्वादुक्तनिश्चयव्युदास इति भावः।

अत्र सत्यन्तदलानुपादाने घटवान्नवेतिसंशयेऽतिव्याप्तिः, तत्र पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वसत्त्वात्। विशेष्यदलानुपादाने सन्दिग्धाप्रामाण्यकबाधनिश्चयेऽतिव्याप्तिः, तस्यापि पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वात्। तथा च पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वे सति साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वमिति फलितम्।

ननु तथापि विशेष्यदले यत्किञ्चिज्ज्ञानप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वमेवोच्यतां किं तादृशनिश्चयपर्यन्तानुधावनेनेति चेन्न। घटाभाववान् पर्वतो वह्निमान्नवेति संशयेऽव्याप्तेः, तत्र पर्वतो घटवानिति ज्ञाननिरूपितप्रतिबन्धकतावच्छेदकविषयितासत्वात्।

ननु तथापि तादृशज्ञानप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वमेवोच्यतां किं निश्चयत्वनिवेशेन, एवं निश्चयत्वस्य प्रतिबध्यतानवच्छेदकतया निश्चयत्वावच्छिन्नप्रतिबध्यताया अप्रसिद्ध्या तन्निवेशोऽशक्यश्चेति चेद्। सत्यम्। तादृशनिश्चयत्वस्य सकृदेव निवेशात्। तथाहि—स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्वसमानाधिकरणपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वएतदुभयसम्बन्धेन पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वविशिष्टज्ञानत्वमेव पक्षतात्वम्, अत्र निरुक्तोभयसम्बन्धस्यैकप्रतियोगिकत्वलाभार्थमेव निश्चयत्वोपादानम्[1]।

तत्वस्वनिरूपितविषयतात्वावच्छिन्नप्रतियोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन। रूपवृत्तित्वं च स्वनिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। अत्र घटत्वेनैकघटावगाहिज्ञान–घटत्वेन नानाघटावगाहिज्ञानयोः समानाकारकत्ववारणाय समनियतत्वनिवेशः। पटत्वेन नानाघटावगाहिज्ञानयोः समानाकारकत्ववारणाय समनियतत्वनिवेशः। पटत्वेन घटावगाहि–घटत्वेन घटावगाहिज्ञानयोः समानाकारकत्ववारणाय स्वनिरूपितेत्यादिद्वितीयसम्बन्धनिवेशः। वह्न्यभाववान् ह्रद इति वह्न्यभाववद्ह्रदवान्देश इति ज्ञानयोः समानाकारकत्ववारणाय मुख्यत्वनिवेश इति ध्येयम्।

१. तादृशज्ञानत्वावच्छिन्नप्रतिबध्यावच्छेदकत्वस्य तादृशनिश्चयत्वेऽपि सत्त्वेन नाऽसम्भवः, पर्याप्त्यनिवेशादिति कश्चित्।

अपरे तु निश्चयत्वप्रवेशो ग्रन्थलाघवायैव, अन्यथा तादृशज्ञानाऽप्रतिबन्धकत्वमित्यादिलेखने पक्षविशेष्यकत्वसाध्यप्रकारकत्वादीनां निवेशे गौरवं स्यात्। अत एव व्याप्तिपञ्चके 'तत्प्रतियोगित्वं 'चे'त्यग्रिमग्रन्थलाघवानुरोधेन हेत्वभावोपीत्येव लिखितम्, न तु साध्याभावोपीति वदन्ति।

नव्यास्तु निश्चयत्वाऽप्रवेशे पर्वतो वह्निमानित्यादौ पर्वतो वह्निमान्न वा वह्निघटोभयाभाववांश्चेत्याकारकसमूहालम्बनसंशयेऽव्याप्तिः। पर्वतो वह्निघटवानित्येकत्र द्वयमिति रीत्या वह्नित्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताका या

अथ तादृशनिश्चयप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वनिवेशेनैवोपपत्तौ ज्ञानपदमनर्थकम् । न च पर्वतो वह्निमानित्यनुमितौ पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिज्ञानं जायतामितीच्छायामतिव्याप्तिः, तस्याः पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यतावत्त्वात् तादृशनिश्चयप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वाच्च, ज्ञानं जायतामितीच्छां प्रति ज्ञानत्वेनैव प्रतिबन्धकत्वम्, ननु निश्चयत्वेनेति तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यत्वरूपविशेषणदलाभावेनातिव्याप्तिविरहेऽपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयो जायतामितीच्छायामतिव्याप्तिः, तस्या अपि तादृशत्वादिति वाच्यम् । अग्रे विवक्षणीयस्य पक्षविषयताबहिर्भूतसाध्यविषयताघटितधर्मावच्छिन्नत्वस्य तदिच्छीयप्रतिबध्यतायां विरहात्, तत्र वह्नित्वावच्छिन्नप्रकारतात्वावच्छिन्नप्रकारतानिरूपिता या पर्वतत्वावच्छिन्नविशेष्यतात्वावच्छिन्नविशेष्यता तद्भिन्नप्रकारतानिरूपितनिश्चयत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वमेव वर्त्तते न तु साध्यीभूतवह्निविषयत्वावच्छिन्नत्वमिति तद्वारणात् । न च तन्निवेशो न सिद्धान्तसिद्धः, एवं प्रकारतायां वह्नित्वावच्छिन्नप्रकारतात्वावच्छिन्नत्वं वह्नित्वनिष्ठावच्छेदकतानिरूपितत्वप्रकारतात्वोभयधर्मावच्छिन्नत्वमेव, तथा च तादृशेच्छीयप्रतिबध्यतायां साध्यविषयताघटितधर्मावच्छिन्नत्वसत्त्वात्तद्दोषतादवस्थ्यं चेति वाच्यम् । एवमपि प्रतिबध्यतायां वक्ष्यमाणसाध्याभावप्रकारकत्वं विहाय साध्यविशेष्यकत्वसाध्यप्रकारित्वान्यतरावच्छिन्नत्वविशेषणेनैव तादृशेच्छायामति-

---

ज्ञाननिष्ठा प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकविषयितायाः एव समूहालम्बने सत्त्वात् । निश्चयत्वनिवेशे तु यज्जातीयं ज्ञानं निश्चयरूपं तज्जातीयानुमित्यादिविशेषलाभाद्, अनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वं लभ्यते, तथा च वह्निघटवान्पर्वत इत्येकत्र द्वयमिति रीत्या ज्ञानेऽनुमितित्वविरहेण तत्प्रतिबध्यतामादाय निरुक्तसंशयेऽव्याप्तिविरहात् । एवं ज्ञानत्वनिवेशेऽनाहार्यत्वादिनिवेशे गौरवमपि । अथवा प्रतिबध्यतायां स्वरूपसम्बन्धरूपसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्ननिवेशः, तथा च तादृशप्रतिबध्यतायां साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वरूपसाध्यनिश्चयत्वावच्छिन्नत्वविरहेण तादृशप्रतिबध्यतामादायाऽव्याप्तिविरहात् ।

ननु निश्चयत्वनिवेशेऽपि पर्वतत्वावच्छेदेन वह्नेः साध्यतायां पर्वतत्वसामानाधिकरण्येन वह्न्यवगाही पर्वतत्वावच्छेदेन वह्न्यभावावगाही पर्वतो वह्निमान्न वेति संशयः पर्वतत्वसामानाधिकरण्येन वह्न्यभाववान्पर्वत इति बाधनिश्चयात्मकः, तत्राऽव्याप्तिर्दुर्वारैव, तत्र साध्यनिश्चयप्रतिबध्यत्वसत्त्वेऽपि साध्यनिश्चयप्रतिबन्धकतावच्छेकीभूता या पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्पर्वतविषयिता तच्छून्यत्वविरहादिति चेन्न ।

पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती तादृशप्रतिबन्धकतावच्छेदिका या विषयिता तद्वज्ज्ञानत्वस्य विवक्षितत्वात् उक्तसंशयीया या पर्वतत्वावच्छेदेन वह्न्यभावकोटिता तस्यां प्रतिबध्यतावच्छेदकत्वप्रतिबन्धकतानवच्छेदकत्वयोः सत्त्वेन लक्षणसमन्वयात् तादृशप्रतिबन्धकतानवच्छेदकविषयितायाः तादृशप्रतिबध्यतावच्छेदकत्वनिवेशात्पर्वतो वह्न्यभाववान् घटवद्भूतलमिति समूहालम्बने नाऽतिव्याप्तिरिति वदन्ति ।

तच्चिन्त्यम्, एवं निवेशे पर्वतो वह्निमान्न वा वह्निघटोभयाभाववांश्चेति संशये तादृशप्रतिबध्यतावच्छेदकीभूतनिरुक्तप्रतिबन्धकतानवच्छेदकीभूतसंशयीयवह्न्यभावत्वावच्छिन्नविषयितावत्त्वेनाऽव्याप्तिवारणसम्भवे नव्यमते निश्चयत्वनिवेशो व्यर्थ एव स्यात् । वस्तुतस्तु संशयनिश्चयीयविषयतान्यावृत्तये तादृशविषयताशालिज्ञानं प्रति संशयसामग्र्याः प्रतिबन्धकत्वस्य सत्प्रतिपक्षग्रन्थे भट्टाचार्येणोक्ततया तादृशनिश्चयात्मकसंशयस्यैवाऽनुपपत्तेरित्यस्मद्गुरुचरणाः ।

व्याप्तिवारणात्, तादृशेच्छीयप्रतिबध्यतायां वह्नित्वावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वनिष्ठप्रकारतानिरूपितनिश्चयत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वस्य सत्त्वात्, न तु वह्निविषयत्वावच्छिन्नत्वमिति । न चात्मपक्षकनिश्चयसाध्यकस्थले "आत्मा निश्चयवानित्यनुमितौ" निश्चयत्वावच्छिन्नप्रकारतानिरूपितात्मत्वावच्छिन्नविशेष्यताशालिनिश्चयो जायतामितीच्छायामितिव्याप्तिः, तादृशेच्छीयप्रतिबध्यतायां निश्चयत्वावच्छिन्नप्रकारतात्वावच्छिन्नप्रकारतानिरूपितात्मत्वावच्छिन्नविशेष्यतात्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपितनिश्चयत्वावच्छिन्नत्वसत्त्वेन प्रतिबध्यतावच्छेदकाक्रान्त [साध्यीभूत] निश्चयनिष्ठविशेष्यत्वावच्छिन्नत्वादिति वाच्यम् । पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितत्वस्याऽन्यतरावच्छिन्नत्वघटकसाध्यतावच्छेदकावच्छिन्नविशेष्यतायां निवेशात्, तत्प्रतिबध्यतायामात्मत्वावच्छिन्नविषयतानिरूपितसाध्यविशेष्यत्वावच्छिन्नत्वविरहादेवाऽतिव्याप्तिवारणादिति चेन्न ।

विशेष्यतापक्षकनिश्चयसाध्यकस्थले निश्चयत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नविशेष्यताशालिनिश्चयो जायतामितीच्छायामतिव्याप्तेः, तादृशेच्छीयप्रतिबध्यतायां निश्चयत्वावच्छिन्नप्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वनिष्ठविशेष्यत्वाभिन्नप्रकारतानिरूपितनिश्चयत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वसत्त्वेन विशेष्यातारूपपक्षविषयतानिरूपितनिश्चयनिष्ठविशेष्यत्वावच्छिन्नत्वसत्त्वात्, विशेष्यतात्वावच्छिन्नप्रकारतानिरूपितनिश्चयनिष्ठविशेष्यतायाः प्रतिबध्यतावच्छेदकतया साध्यविशेष्यकत्वावच्छिन्नत्वस्य चाऽक्षतत्वादतो ज्ञानपदमिति [1] ।

ननु तथापि पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती सामान्यतः प्रतिबन्धकतानवच्छेदिका या विषयिता तद्वज्ज्ञानत्वमेव निवेश्यतां किं प्रतिबन्धकतायां पक्षधर्मिकसाध्यनिश्चयनिष्ठप्रतिबध्यतानिरूपितत्वनिवेशेन । निर्वह्निः पर्वतो रूपवान्न वेति संशयस्य न सङ्ग्रहः, साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकं यद्वन्ह्यभावत्वावच्छिन्नविषयित्वं, तस्य प्रतिबन्धकतानवच्छेदकत्वविरहादिति चेन्न ।

---

१. न च तत्राऽतिव्याप्तिवारणाय पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयतानिरूपितसाध्यविशेष्यकत्वावच्छिन्नत्वमेवाऽन्यतरघटकतया प्रतिबध्यतायां निवेशनीयम्, विषयतायां रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवं तादृशरूपं विशेष्यतात्वगतैकत्वं तद्वृत्तिविषयतानिरूपितत्वस्य साध्यीभूतनिश्चयत्वावच्छिन्नविषयतायां विरहात् तत्र विशेष्यतात्वावच्छिन्नत्वविशेष्यतात्वगत.द्वत्ववृत्तिविषयतानिरूपितत्वस्यैव सत्त्वान्नातिव्याप्तिरिति वाच्यम् । तथासति ज्ञानत्वपक्षकज्ञानसाध्यकानुमितौ ज्ञानत्वे ज्ञाननिश्चयो जायतामितीच्छीयामतिव्याप्तिः, तत्र पक्षतावच्छेदकगतरूपवृत्तिज्ञानत्वनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितपरम्परया ज्ञानत्वावच्छिन्नसाध्यविशेष्यकत्वावच्छिन्नत्वसत्त्वात् ।

वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेति संशयेऽव्याप्त्या साध्यविशेष्यतायां साक्षात्पक्षविषयतानिरूपितत्वस्य पक्षविषयतायां अवच्छेदकतानात्मकत्वस्य निष्ठत्वसम्बन्धावच्छिन्नत्वस्य वा निवेशासम्भवादिति ध्येयम् ।

केचित्तु पर्याप्तिनिवेशाऽपेक्षया लाघवेन ज्ञानत्वनिवेशस्यैवौचित्यादित्याहुः ।

नीलपर्वतो महानसानुयोगिकसंयोगेन महानसीयवह्निमानित्यादौ नीलपर्वतो महानसीयवह्निमान्न वेतिसंशयेऽव्याप्तेः, तत्र महानसीयवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितनीलपर्वतत्वावच्छिन्नविशेष्यतायाः नीलाभाववान्पर्वत इति निश्चयप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वेन महानसीयवह्निप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतायाः प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकमहानसीयवह्न्यभाववान् अभाव इति निश्चयप्रतिबन्धकतावच्छेदकत्वेन महानसीयत्वप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यतायाश्च वह्निर्महानसीयत्वाभाववानिति निश्चयप्रतिबन्धकतावच्छेदकत्वेन सामान्यतः प्रतिबन्धकतानवच्छेदकविषयितावत्त्वविरहात्'।

---

१. न च पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकविषयतावत्त्वनिवेशादेवोक्तस्थले तादृशप्रतिबन्धकतावच्छेदकवह्नित्वावच्छिन्नविषयतावत्वसत्त्वेनाऽव्याप्तिवारणात, अवच्छेदकत्वं चाऽवच्छेदकतावच्छेदकसाधारणम्, नाऽतो बाधनिश्चयेऽतिव्याप्तिः। अथवा पक्षतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकताकप्रतिबन्धकतैव वाच्येति वाच्यम्। तथासति पर्वते वह्निसंशयो जायतामितीच्छां प्रति वह्निसंशयस्य विरोधितया वह्निसंशयीयविषयताया अपि तादृशेच्छाप्रतिबन्धकतावच्छेदकत्वेन सामान्यतः प्रतिबन्धकतानवच्छेदकत्वविरहात वह्निमान् धूमादित्यादौ वह्निमान्नवेति संशयेऽव्याप्तेः।

अथ तदव्याप्तिवारणाय ज्ञाननिरूपितपतिबन्धकताऽनवच्छेदकविषयितावत्त्वमेव निवेश्यम्। न चैवं पुनस्तत्रैवाऽव्याप्तिः, तत्र वह्न्यभावत्वावच्छिन्नविषयितायां तादृशप्रतिबध्यतावच्छेदकत्वसत्त्वेऽपि प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववानभाव इति ज्ञाननिरूपितप्रतिबन्धकतावच्छेदकत्वस्यैव सत्त्वेनाऽनवच्छेदकत्वविरहादिति वाच्यम्। पर्वतत्वावच्छिन्नविषयितायामेव तादृशप्रतिबध्यतावच्छेदकत्वस्यैव सत्त्वेनाऽनवच्छेदकत्वविरहादिति वाच्यम्। पर्वतत्वावच्छिन्नविषतितायामेव तादृशप्रतिबध्यतावच्छेदकत्वसामान्यतो ज्ञाननिरूपितप्रतिबन्धकतानवच्छेदकत्वयोः सत्त्वेन लक्षणसमन्वयादिति चेत।

सत्यम्, प्रत्यक्षं प्रति ग्राह्यसंशयस्य प्रतिबन्धकत्वमते संशयीयविषयितामात्रस्यैव प्रतिबन्धकतावच्छेदकत्वादसम्भवापत्तेः। न च ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वनिवेशेनैव तद्वारणं, प्रत्यक्षनिष्ठप्रतिबध्यतायाः ज्ञानत्वानवच्छिन्नत्वादिति वाच्यम्। तथासति पर्वतो घटवानित्याकारकभिन्नविषयकाऽनुमित्यतिरिक्तज्ञानं प्रति पर्वतो वह्निमान्नवेति संशयघटितपर्वतो वह्निमानित्यनुमितिसामग्र्याः प्रतिबन्धकतया तादृशसंशयीयविषयतायाः भिन्नविषयकानुमित्यतिरिक्तज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपिततादृशप्रतिबन्धकतावच्छेदकत्वेन ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वविरुद्धेण वह्निमान्नवेतिसंशयेऽव्याप्त्या साध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिवेशस्याऽवश्यकत्वात।

एवं वह्निमान् घट इति भिन्नविषयकाऽनुमित्यतिरिक्तज्ञानं प्रति पर्वतो वह्निमान्न वेति संशघटितपर्वतो वह्निमानित्यनुमितिसामग्र्याः प्रतिबन्धकतया तादृशसंशयीयविषयतायाः तथाविधज्ञानप्रतिबन्धकतावच्छेदकत्वेन साध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वविरहात, पर्वतो वह्निमान्नवेति संशयेऽव्याप्त्या तादृशप्रतिबध्यतायां पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वस्य निवेशः, तथा च साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनोऽनुमित्यतिरिक्तज्ञानस्याऽनुमितिसमानविषयकतया तं प्रति अनुमितिसामग्र्याः अविरोधित्वकल्पनात।

न चाऽनुमितिनिष्ठप्रतिबध्यतानिवेशेनैवोपपत्तौ साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वप्रवेशे प्रयोजनविरह इति वाच्यम्। तथासति शाब्देच्छाघटित–पर्वतो वह्निमानिति–शब्दसामग्रीकाले घटवान्पर्वत इत्यनुमित्यनुदयेन इच्छाघटिततादृशशाब्दसामग्र्यां तादृशभिन्नविषयकानुमितिप्रतिबंधकत्वस्य क्लृप्ततया तादृशभिन्नविषयकानुमितिनिष्ठप्रतिबध्यतामादाय वह्निमान्न वेतिसंशयेऽव्याप्तेः। न च शाब्दसामग्र्याः योग्यताज्ञानविधया वह्नित्वावच्छिन्न-

**यद्यपि चैवमपि वह्निव्याप्यसाध्यकानुमितौ पर्वतो वह्निमान्नवेति संशयः पक्षता स्यात् , तस्याऽपि पक्षधर्मिकवह्निव्याप्यवत्त्वरूपसाध्यनिर्णयनिवर्त्य-**

यद्यपीति । एवमपि—एतादृशसंशयत्वानिवेशेपीत्यर्थः । वह्निव्याप्यसाध्यकानुमितौ—**पर्वतो वह्निव्याप्यवानित्यनुमितौ ।** पक्षता स्यादिति । तथाच वह्निव्याप्यसाध्यकानुमिति-

विषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतात्वेन प्रतिबन्धकत्वेऽपि वह्न्यभावत्वावच्छिन्नविषयतायां तादृशप्रतिबन्धकतानवच्छेदकत्वमबाधितमेवेति वाच्यम् । पर्वतो वह्निमान्न वेति संशयस्य योग्यताज्ञान-विधया वह्न्यभावविषयकबोधजनकतया तदीयवह्न्यभावविषयताया अपि इच्छाघटिततया विभिन्नविषयकानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात् । अभावत्वावच्छेदेन प्रतियोगिता-सम्बन्धेन वह्निविशिष्टाभावपक्षकवह्निसाध्यकस्थले वह्निमदभावो वह्निमान्नवेति संशयेऽव्याप्तेः, तदीयवह्नि-विषयताया अपि प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावोऽभाववानिति प्रतियोगितासम्बन्धे-नाऽभावप्रकारताशाल्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकतयानवच्छेदकत्वविरहात् , प्रयिबध्यतायां साध्यतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नत्वनिवेशस्याऽऽवश्यकत्वात् । प्रतिबन्धकत्व-स्याऽनुमितिकारणीभूताभावप्रतियोगित्वरूपतयाऽननुगतत्वेन प्रतिबन्धकत्वं नास्तीति सामान्याभाव-निवेशाऽसम्भवादिति दिक् ।

न च तदीयवह्न्यभावत्वावच्छिन्नविशेष्यतायाः प्रतिबन्धकतावच्छेदकत्वेऽपि वह्न्यभावत्वावच्छिन्नप्रकार-ताया अनवच्छेदकत्वेनाऽनवच्छेदकीभूततत्प्रकारतामादाय लक्षणगमनं सम्भवतीति वाच्यम् । एकज्ञानी-यसमानाधिकरणविषयताद्वयोरभेदेन वह्न्यभावत्वावच्छिन्नविशेष्यतायाः प्रतिबन्धकतावच्छेदकतयातदी-यवह्न्यभावत्वावच्छिन्नप्रकारताया अपि प्रतिबन्धकतावच्छेदकत्वाऽक्षतेः । न च साध्यतावच्छेदकावच्छि-न्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबध्यतानिवेशेऽपि समानविषयकानु-मितिं प्रति समानविषयकशब्दसामग्र्याः प्रतिबन्धकतया तदीयविषयतायां तादृशप्रतिबन्धकत ऽनवच्छे-दकत्वविरहणाऽव्याप्त्या तादृशप्रतिबन्धकतायां सामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपित-त्वनिवेशस्याऽवश्यकतया तादृशसामग्रींनिष्ठभिन्नविषयकज्ञानप्रतिबन्धकतामादायाऽव्याप्तिवारणसम्भवे साध्यतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नत्वनिवेशनमनर्थकमेवेति वाच्यम् । वह्निमान्न वेति संशयस्य योग्यताज्ञानविधया वह्नित्वावच्छिन्नविषयताशालिज्ञानत्वेन कारणतया समानविषयकानुमितिं प्रति तेन रूपेण प्रतिबन्धकतया तदीयवह्न्यभावष्वावच्छिन्नविषयतायां प्रतिबन्धकताऽनवच्छेदकत्वस्याक्षतत्वादिति चेदत्रोच्यते । वह्न्यभावनिश्चयं प्रति वह्निसंशयसामग्र्याः प्रतिबन्धकतया तादृशबाधनिश्चयात्मकसंशयाऽ-सम्भवेन तादृशनिश्चयात्मकसंशयेऽव्याप्तिविरहेण प्रतिबध्यतावच्छेदकीभूतनिरुक्तप्रविबन्धकतानवच्छेद-कीभूतविषयितावत्त्वनिवेशे प्रयोजनविरहात्, एवं च पर्वतो वह्निमान्न वा वह्निघटोभयाभाववांश्चेति समूहा-लम्बनसंशयेऽव्याप्तिवारणार्थमेव निश्चयत्वोपादानमिति ।

वस्तुतो निश्चयत्वस्य सकृदेव प्रवेशः, तथाहि—पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यता-वच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वविशिष्टविषयताशालिज्ञानत्वम् । वै० स्वावच्छिन्नप्रतिबन्धकता-निरूपितप्रतिबध्यतान च्छेदकत्व-स्वसमानाधिकरणज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतान-वच्छेदकत्वोभयसम्बन्धेन । एतेन साध्यतावच्छेदकगतरूपवृत्तिप्रकारताकपक्षतावच्छेदकावच्छिन्नविशेष्य-तात्वावच्छिन्नावच्छेदकताकप्रतिबन्धकतानिवेशात् तादृशप्रतिबध्यतावच्छेदकीभूतनिरुक्तप्रतिबन्धकतान-वच्छेदकीभूतविषयितावत्त्वनिवेशाद्वा वह्निमान्न वा वह्निघटोभयाभाववांश्चेति संशयेऽव्याप्तिवारणसम्भवे निश्चयत्वनिवेशनमनर्थकमेवेति परास्तम् ।

केचित्तु साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वाभावविशिष्टविषयितावज्ज्ञानत्वं पक्षतात्वम् । वै० स्वाश्रयीभूतपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्य-तावच्छेदकत्वम्-स्वाश्रयीभूतविशेष्यत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वोभयसंबंधे-न, एतादृशानुगमलाभायैव तथाभिधानादिति प्राहुः ।

त्वात्। न चेष्टापत्तिः, पर्वतो वह्निमान्नवेति संशयोत्तरं पर्वतो वह्निव्याप्यवानित्येवं साध्यनिर्णयेऽपि वह्निव्याप्यसाध्यकानुमित्यापत्तेः।

तथापि प्रकृतपक्षविषयतावहिर्भूतप्रकृतसाध्यविषयताघटितधर्मावच्छिन्नं यत्प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्तानिश्चयनिवर्त्यत्वं तन्निवेशितमित्यदोषः। पर्वतो वह्निमान्नवेति संशयस्य च वह्निव्याप्यवत्तानिश्चयनिवर्त्यत्वेऽपि तादृशनिवर्त्यतायाः पर्वतधर्मिकवह्न्यभावप्रकारत्वेनैवावच्छेद्यतया वह्निव्याप्यवत्त्वरूपसाध्यवत्त्वविषयत्वानवच्छेद्यत्वात्।

---

हेतुभूतपक्षतालक्षणस्य तादृशसंशयेऽतिव्याप्तिरिति भावः। तस्याऽपि—पर्वतो वह्निमान्नवेतिसंशयस्यापि, निवर्त्यत्वात्–प्रतिबध्यत्वात्। तादृशसंशयघटकवह्न्यभावबुद्धेः तदभावव्याप्यवत्तासुद्रया तादृशसाध्यनिश्चयप्रतिबध्यत्वादित्यर्थः। साध्यविषयताघटितेति। घटितपदं पर्याप्त्यनिवेशसूचनाय, अन्यथा साक्षात्परम्परासाधारणाऽवच्छेदकत्वोपगमेन साध्यविषयत्वपर्याप्तावच्छेदकताकप्रतिबध्यत्वाप्रसिद्धिः स्यात्[1] तथाच साध्यविषयिता-

---

१. तथाच घटितपदमितरवारकपर्याप्त्यनिवेशलाभार्थकम्, अन्यथा साध्यतावच्छेदकावच्छिन्नविषयतामात्रानिष्ठावच्छेदकताकत्वनिवेशे वह्निमान्नवेति संशयादावसम्भवः स्यात्, संशयीप्रतिबध्यतावच्छेदककोटौ पक्षविशेष्यत्वस्य आहार्यभेदस्य च निवेशनीयतया तत्प्रतिबध्यतायां साध्यविषयतामात्रनिष्ठावच्छेदकतानिरूपकत्वाभावदिति तत्त्वम्।

वस्तुतस्तु वन्ह्यभाववानितिबुद्धेर्लाघवादवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यत्वाऽभिन्नप्रकातानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वेन प्रतिबध्यतायाः साध्यवत्तानिश्चयनिरूपितायाः वक्तव्यतया साध्यतावच्छेदकाविच्छिन्नविषतायाः प्रतिबध्यतावच्छेदकत्वेन साध्यतावच्छेदकावच्छिन्नप्रतिबध्यत्वाप्रसिद्ध्याऽसम्भवापत्तिरतः साध्यविषयाघटितपर्यन्तनिवेशः। न च तादृशरूपेण प्रतिबध्यत्वेऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्ववदभाववानितिज्ञानस्यापि पर्वतो वह्निमानितिनिश्चयप्रतिबध्यत्वापत्तिरिपि वाच्यम्। अवच्छिन्नप्रतियोगिकत्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपिताभावत्वाऽवच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यत्वेनैव प्रतिबध्यत्वस्य वाच्यतयोक्तज्ञाने वह्नित्वनिष्ठनिरवच्छिन्नप्रकारत्वविरहात्, वन्ह्यभाववानितिज्ञाने च वह्नित्वनिष्ठप्रकारतायाः निरवच्छिन्नत्वात्। न च घटितत्वनिवेशेऽपिसाध्यविषयताघटितधर्मावच्छिन्नत्वविरहेण तद्दोषतादवस्थ्यमिति वाच्यम्। घटितत्वनिवेशेन पक्षविषयितावहिर्भूतसाध्यतावच्छेदकावच्छिन्नविषयताव्याप्यत्वस्य प्रतिबध्यतायां लाभात्, तादृशविषयत्वावच्छिन्नप्रतिबध्यत्वाऽप्रसिद्धावपि तादृशविषयताव्याप्यत्वस्य प्रतिबध्यतायां निराबाधादिति।

न चैवं पक्षविषयतावहिर्भूतसाध्यतावच्छेदकनिष्ठविषयत्वावच्छिन्नत्वमेव लाघवात्प्रवेश्यताम्, सर्वत्र साध्यतावच्छेदकनिष्ठावच्छेदकताख्यविषयताघटितधर्मावच्छिन्नप्रतिबध्यतामादाय लक्षणसमन्वये साध्यतावच्छेदकावच्छिन्नविषयतापर्यन्तमनर्थकमिति वाच्यम्। वह्निव्याप्यो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्योवह्निव्याप्यवान्नवेति संशयेऽव्याप्तेः, वह्निव्याप्यत्वनिष्ठविषयतायां पक्षतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारताभिन्नत्वस्य पक्षविषयतावहिर्भूतत्वस्यासत्वात्, साध्यविषयतानिवेशे तु वह्निव्याप्यनिष्ठमुख्यविशेष्यतामादायैव लक्षणसमन्वयात्। न च वह्निव्याप्यत्वनिष्ठावच्छेदकत्वमेव तादृशावच्छेदकताभिन्नमिति वाच्यम्। वह्निव्याप्यसाध्यकस्थले वह्न्यभावत्वेन वह्निव्याप्यत्वावगाहिवह्निमान्नवेतिसंशयेऽतिव्याप्तिः तत्संशयीयप्रतिबध्यतायां साध्यतावच्छेकवह्निव्याप्यत्वनिष्ठविषयत्वावच्छिन्नत्वसत्त्वात्। न च भवन्मतेसाध्यतावच्छेदकावच्छिन्नविषयताव्याप्यत्वं प्रतिबध्यतायां निवेश्यम्, मन्मतेऽपि साध्यतावच्छेदकविषयताव्याप्यत्वं निवे-

घटितधर्मावच्छिन्ना या पक्षधर्मिकसाध्यवत्तानिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यता तच्छाली संशयः पक्षतेति। पर्वतो वह्निमान्नवेति संशयनिष्ठा या पर्वतो वह्निव्याप्यवानितिनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यता सा न साध्यीभूतवह्निव्याप्यविषयताघटितधर्मावच्छिन्ना किन्तु वह्न्यभावविषयिताघटितो यो धर्मो वह्न्यभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वरूपस्तदवच्छिन्नेति नातिव्याप्तिः। तदेवाह—तादृशनिवर्त्यतायाः इति। वह्निव्याप्यवत्तानिश्चयप्रतिबध्यताया इत्यर्थः। साध्यविषयितायां पक्षविषयितावह्नि-

त्यम्, एवं च वह्निव्याप्यत्वनिष्ठविषयत्वाभाववति वह्निव्याप्यत्वानवगाहिवह्न्यभावत्वेन वह्न्यभावावगाहि पर्वतोवह्निमान्नवेतिसंशये प्रतिबध्यताया वृत्तित्वेन व्याप्यत्वविरहान्नातिव्याप्तिः, अथवा साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयत्वावच्छिन्नत्वं प्रतिबध्यतायां निवेशनीयम्, रूपवृत्तित्वं च स्वात्मकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन, निरुक्तप्रतिबध्यताया वह्न्यभावत्वनिष्ठावच्छेदकताकतया वारणादिति वाच्यम्। पर्वतस्य पक्षत्वे व्याप्यतासम्बन्धेन वह्निविशिष्टस्य संयोगेन साध्यतायां संयोगेन पर्वतो वह्निमान्नवेतिसंशयेऽतिव्याप्तिः, वह्न्यभाववत्ताबुद्धौ यथा वह्निव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वम्, तथा वह्निव्याप्यवत्तासाधारणस्य व्याप्यतासंबन्धेन वह्निविशिष्टवत्तानिश्चयस्यापीति, उक्तसंशयीयप्रतिबध्यतायां पक्षविषयतावह्निर्भूतसाध्यतावच्छेदकविषयताव्याप्यत्वसत्त्वात् वह्निनिष्ठप्रकारतावच्छेदकतायाः साध्यतावच्छेदक गनरूपावच्छिन्नानुयोगिताकपर्याप्तिकतया तादृशावच्छेदकतात्मकविषयताघटितधर्मावच्छिन्नत्वसत्त्वाच्च। साध्यतायच्छेदकावच्छिन्नविषयत्वावच्छिन्नत्वनिवेशे तत्प्रतिध्यातायां वह्न्यवच्छिन्नविषयत्वावच्छिन्नत्वविरलेणाऽतिव्याप्तिविरहात्। यदि च व्याप्यतासम्बन्धेन वह्निविशिष्टवातिनिश्चयस्य संयोगेन वह्न्यभाववत्ताबुद्धेर्विरोधित्वमनुभवविरुद्धं, तदा पर्वते संयोगेन वह्निविशिष्टस्य तादात्म्येन साध्यतायां संयोगेन वह्निमान्नवेति संशयेतिव्याप्तिः, तत्प्रतिबध्यतायां तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वस्य तादृशसाध्यतावच्छेदकविषयत्वावच्छिन्नत्वस्य च सत्त्वात्, तादात्म्येन वह्निविशिष्टवानितिनिश्चयस्य संयोगेन वह्न्यभाववत्ताबुद्धिविरोधिताया अनुभवसिद्धत्वात्, साध्यतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नत्वनिवेशे तु तस्यां साध्यातावच्छेदकवह्न्यवच्छिन्नत्वविरहेणातिव्याप्तिविरहात्। न च साध्यतावच्छेदकावच्छिन्नविषयताव्याप्यत्वनिवेशेऽपि तद्दोषतादवस्थ्यम्, तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकवह्नित्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठावच्छेदकताख्यविषयताघटितधर्मावच्छिन्नप्रतिबध्यतासत्त्वादिति वाच्यम्। साध्यविषयतानिवेशेन स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन साध्यतावच्छेदकगतरूपवृत्तिविषयतानिवेशलाभान्नातिव्याप्तिः, वह्नित्वनिष्ठावच्छेदकताकवह्निनिष्ठावच्छेदकताख्यविषतायां तादृशसम्बन्धेन रूपवृत्तित्वविरहात्। न च साध्यतावच्छेदकावच्छिन्नत्वं साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वम्, एवं चोक्तसंशयीयप्रतिबध्यतायां साध्यतावच्छेदकवह्निनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताभावनिष्ठविषयत्वावच्छिन्नत्वसत्त्वादुक्तदोषतादवस्थ्यम्, साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितविषयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तु वह्निः पर्वते न वेतिसंशयेऽव्याप्तिः, वह्नित्वावच्छिन्नविशेष्यतायाः सम्बन्धानवच्छिन्नत्वादिति वाच्यम्। साध्यवच्छेदनिष्ठावच्छेदकतानिरूपितविषयतायां साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य, साध्यतावच्छेदकनिष्ठावच्छेदकतायां वा साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशे नैवोक्तदोषवारणात्, प्रतियोगित्वसम्बन्धावच्छिन्नवह्निनिष्ठावच्छेदकताख्यविषयतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वविरहात्। न चैवं मन्मतेऽपि साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठविषयत्वावच्छिन्नत्वनिवेशेनैवोक्तदोषवारणसम्भवे साध्यतावच्छेदकवच्छिन्नविषयतानिवेशो व्यर्थ इति वाच्यम्। साध्यपदस्य साध्यतावच्छेदकताघटकसम्बन्धावाच्छिन्नावच्छेदकत्वलाभार्थकत्वात्, साध्यपदं साध्यातावच्छेकतावटकसम्बन्धलाभार्थमिति ग्रन्थकृताऽन्यत्राभिधानादिति ध्येयम्।

न च तथापि वह्निर्भूतान्तदलं व्यर्थमिति वाच्यम् । वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति संशयस्य तादृशपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यसाध्यकानुमितौ पक्षतात्वव्युदासकत्वात् ।

र्भूतत्वविशेषणं किमर्थमित्याशङ्क्ते—नचेति । उत्तरयति—वह्निव्याप्यवत्सधर्मा पर्वत इत्यादिना तथाच वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिः तादृशसाध्यनिश्चयनिष्ठप्रतिबन्धकतानिरूपिता या संशयनिष्ठा तादृशपक्षविशेष्यकवह्न्यभावप्रकारताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता तस्याः पक्षान्तर्गतसाध्यविषयित्वावच्छिन्नत्वात्, तद्विशेषणे तु साध्यविषयितायाः पक्षविषयिताबहिर्भूतत्वाभावान्नातिव्याप्तिरिति भावः ।

अथाऽत्र किं तावत्पक्षविषयिताबहिर्भूतत्वम्? यदि पक्षविषयिताभिन्नत्वं, तदा वह्निव्याप्यसाध्यकस्थले वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तिर्दुर्वारैव, पक्षतावच्छेदकीभूतवह्निव्याप्यविषयितायां पक्षविषयिताभिन्नत्वसत्त्वात्, पक्षतावच्छेदकविषयिताभिन्नत्वनिवेशेऽपि निरुक्ताऽतिव्याप्तिर्दुर्वारैव, वह्निव्याप्यत्वेन घटावगाहिवह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति संशये वह्निव्याप्यत्वावच्छिन्नघटनिष्ठविषयतायां पक्षतावच्छेदकीभूतवह्निव्याप्यविषयताभिन्नत्वसत्त्वात्, तद्घटितधर्मावच्छिन्नप्रतिबध्यतासत्त्वात् । न च घटविषयताया भिन्नत्वेऽपि तदाश्रयस्य साध्यताविरहान्नातिव्याप्तिरिति वाच्यम् । साध्यपदस्य साध्यतावच्छेदकावच्छिन्नपरत्वात्, यदि च पक्षतावच्छेदकघटकविषयताभिन्नत्वं पक्षविषयताबहिर्भूतत्वम्, तदा वह्निव्याप्यो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्यो वह्निमान्नवेति संशयेऽतिव्याप्तिः, साध्यविषयतायां पक्षतावच्छेदकघटकविषयताभिन्नत्वसत्त्वात् । न च पक्षतावच्छेदकघटकविषयताभिन्ना सती पक्षविषयताभिन्ना या साध्यविषयता तदवच्छिन्नत्वमेव निवेश्यम्, तथाचोक्तस्थले पक्षविषयताभिन्नत्वविरहान्नातिव्याप्तिरिति वाच्यम् । एवमपि तादृशस्थले वह्निव्याप्यो वह्निव्याप्यवान्नवेति संशयेऽव्याप्तिः, प्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नविषयतायां पक्षविषयताभिन्नत्वाऽसत्त्वादिति चेद्[1] ।

---

१. एवं पक्षतावच्छेदकघटकविषयिताभिन्नत्वमपि यदि पक्षतावच्छेदकविषयिताव्यापकविषयतावद्यद् तन्निष्ठविषयिताभिन्नत्वं, तदा वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यत्र तादृशपर्वतो वह्निव्याप्यवान्नवेतिसंशयेऽव्याप्तिः, प्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यात्वावच्छिन्नप्रकारताया अपि पक्षताघटकवह्निव्याप्यनिष्ठत्वात् । न च पक्षतावच्छेदकावच्छिन्नविषयित्वाऽव्यापिका या साध्यविषयिता तदवच्छिन्नत्वमेव प्रतिबध्यतायां निवेश्यम्, एवं च तादृशाऽव्यापकीभूतसंशयीयप्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्याविषयित्वावच्छिन्नत्वस्य संशयीयप्रतिबध्यतायां सत्त्वान्नोक्तदोषावकाश इति वाच्यम् । तादृशविपयित्वाव्यापकत्वं हि तादृशविषयित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्, एवं च तदधिकरणं वह्निव्याप्यवत्सधर्मा घट इति ज्ञानमपि तत्र पक्षतावच्छेदकावच्छिन्नविषयितायाः सत्त्वात्, तत्र च वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति ज्ञानीयवह्निव्याप्यत्वावच्छिन्नविषयिताव्यक्तिमान्नेति भेदसत्त्वेन तत्प्रतियोगितावच्छेदकपक्षघटकसाध्यविषयित्वा वच्छिन्नत्वस्य तत्प्रतिवध्यतायां सत्त्वेनोक्तातिव्याप्तेर्दुर्वारत्वात् । न च पक्षतावच्छेदकावच्छिन्नविषयित्वसमानाधिकरणभेदीयप्रतियोगितावच्छेदकता किञ्चिद्धर्मावाच्छिन्नसाध्यविषयितात्वावच्छिन्ना वाच्या न तु तत्तद्व्यक्तित्वावच्छिन्ना, तादृशसाध्यविषयित्वावच्छिन्नत्वं प्रतिबध्यतायां निवेशनीयम्, एवं च नोक्तदोष इति वाच्यम् । वह्निव्याप्यत्वावच्छिन्नविषयितात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य वह्निव्याप्यविपयकज्ञानेऽसत्त्वेन वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यत्र तादृशपर्वतो वह्निव्याप्यवान्नवेति संशयेऽव्याप्तेः । न च किञ्चित्सम्बन्धावच्छिन्नकिञ्चिद्धर्मावच्छिन्नविषयितात्वावच्छिन्नं तादृशभेदप्रतियोगितावच्छेदकत्वं वाच्यम्, प्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नविपयितात्वाव-

च्छिन्नावच्छेदकताकप्रतियोगिताकभेदमादाय तत्र लक्षणसमन्वयात्, एवं तादृशविषयित्वाव्यापकीभूतप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यविषयित्वावच्छिन्नत्वस्य तादृशपर्वतो वह्निमान्नवेति संशयीयप्रतिबध्यतायां विरहान्नातिव्याप्तिरिति वाच्यम्। एवमपि वह्निव्याप्याभाववत्सधर्मा पर्वतो वह्निव्याप्यवानित्यनुमितौ तादृशपर्वतो वह्निव्याप्यवान्नवेतिसंशयेऽव्याप्तेः, पर्वतो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्यः पर्वतवान्नवेतिसंशयेऽव्याप्तेश्च, तत्प्रतिबध्यतायां किञ्चित्सम्बन्धावच्छिन्नसाध्यविषयित्वावच्छिन्नत्वाभावात्। न च पक्षतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वमेव साध्यविषयितायां, पक्षविषयितावहिर्भूतत्वं वाच्यम्, साक्षात्परम्परसाधारणं चाऽवच्छेदकत्वं ग्राह्यम्, तथाचोक्तप्रतिबध्यतायां तद्विषयित्वानवच्छिन्नत्वान्न दोष इति वाच्यम्। तथासति पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्निमान्नवेति संशयेऽव्याप्तिः, वह्नित्वावच्छिन्नविषयितानिरूपिताऽभावत्वावच्छिन्नविषयितानिरूपितपर्वतत्वावच्छिन्नविषयितावान्नेति भेदप्रतियोगितावच्छेदकत्वस्य निखिलवह्निविषयितायां सत्त्वात्। न च पक्षतावच्छेदकेतरवृत्तिविषयित्वानिरूपिता सती पक्षतावच्छेदकनिष्ठविषयितानिरूपिता या पक्षविषयिता तदवच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वं विवक्षणीयम्, तथाच तादृशभेदप्रतियोगितावच्छेदकपर्वतविषयितायां पक्षतावच्छेदकेतराऽभावविषयितानिरूपितत्वसत्त्वात् शुद्धपर्वतत्वावच्छिन्नविषयितावान्नेतिभेदप्रतियोगितानवच्छेदकत्वस्य साध्यविषयितायां सत्त्वायोक्तदोष इति वाच्यम्। एवं सति वह्निव्याप्यो वह्निव्याप्यवानित्यत्र वह्निव्याप्यो वह्निमान्नवेतिसंशयेऽतिव्याप्तेः, इतरविषयित्वानिरूपिता या वह्निव्याप्यत्वावच्छिन्नविषयिता सा संशयीयवह्न्यभावप्रकारतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयिता न भवति, अपि तु वह्निव्याप्य इति पक्षमात्रविषयकज्ञानीयविषयितैव तदवच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य संशयीयवह्निव्याप्यविषयितायां सत्त्वात्। एवं वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यत्र तादृशपर्वतो वह्निमान्नवेतिसंशयेऽतिव्याप्तेश्च, तादृशविषयिता पक्षमात्रविषयकज्ञानीयैव तदवच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य तत्संशयीयवह्निव्याप्यविषयितायां सत्त्वात्। न च पक्षतावच्छेदकनिष्ठविषयितानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता सती पक्षतावच्छेदकविषयितानिष्ठावच्छेदकतानिरूपिता या पक्षविषयितात्वावच्छिन्नावच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वमेव साध्यविषयतायां प्रवेश्यम्, तथाच तादृशपर्वतत्वावच्छिन्नविषयितावान्नेतिभेदस्यैव तादृशभेदान्तर्गततया तत्प्रतियोगितावच्छेदकत्वस्य सकलतादृशपर्वतघटकविषयितायां सत्त्वेपि अनवच्छेदकत्वं प्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नविषयितायामेवेति तदवच्छिन्नत्वस्य तादृशपर्वतो वह्निमान्नवेति संशयीयप्रतिबध्यतायां विरहान्नोक्तदोष इति वाच्यम्। एवं सति वह्निव्याप्यो वह्निव्याप्यवानित्यत्र वह्निव्याप्यो वह्निव्याप्यवान्नवेतिसंशयेऽव्याप्तेः, प्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नविषयिताया अपि तादृशभेदप्रतियोगितावच्छेदकत्वात्। न च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वमेव निवेश्यम्, तस्य च प्रकारत्वाख्यसाध्यविषयतायां सत्त्वान्नोक्तदोष इति वाच्यम्। एवं सति वह्निव्याप्यो वह्निव्याप्यवानित्यत्र वह्निव्याप्यवह्निर्नवेतिसंशयेऽतिव्याप्तेः, तत्प्रतिबध्यतायाः वह्निव्याप्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकवह्निव्याप्यप्रकारत्वावच्छिन्नत्वात्। न च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकसाध्यविषयत्वावच्छिन्नत्वे सति पक्षतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकसाध्यविषयत्वावच्छिन्नत्वं निवेश्यम्, तथाचोक्तसंशयीयप्रतिबध्यतायां सत्यन्तदलसत्त्वेऽपि विशेष्यदलाभावान्नातिव्याप्तिः। अथवा पक्षतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वम्, पक्षतावच्छेदकावच्छिन्नविषयिताशालिनिश्चयत्वसमनियतकारणतानवच्छेदकत्वमेव वा निवेश्यम्, एवं च नोक्तातिव्याप्तिरिति वाच्यम्। एवंसति वह्निव्याप्यो वह्निव्याप्यवानित्यत्र वह्निव्याप्यो वह्निव्याप्यवान्नवेतिसंशयेऽव्याप्तेः। न च पक्षतावच्छेदकावच्छिन्नमुख्यप्रकारत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वं निवेश्यम्, वह्निव्याप्यवान्नवेति संशये च वह्निव्याप्यं न मुख्यप्रकारः, अपि तु

अत्रोच्यते पक्षतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वं पक्षविषयितावहिर्भूतत्वम् । अवच्छेदकत्वं चावच्छेदकतावच्छेदकसाधारणम् , तथाच नोक्तदोषः, तथाहि—वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतानिरूपितपर्वतत्वावच्छिन्नविषयित्वावच्छिन्नप्रतियोगिताकस्य वह्निव्याप्य-साधर्म्य-पर्वतत्वैतत्त्रितयधर्मावच्छिन्नविषयितानिष्ठाच्छेदकताकप्रतियोगिताकस्य वह्निव्याप्यत्वसधर्मापर्वतविषयितावान्नेति भेदस्य निवेशाक्रान्ततया वह्निव्याप्यविषयितायास्तादृशभेदप्रतियोगितानवच्छेदकत्वविरहेण वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तिविरहात् । न चैवं वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवान्नवेति संशयेऽव्याप्तिः, तदीयप्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नविषयिताया अपि पक्षतावच्छेदकीभूतवह्निव्याप्यत्वावच्छिन्नविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वेन तदनवच्छेदकत्वरूपपक्षविषयितावहिर्भूतत्वविरहादिति वाच्यम् । पक्षतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितावान्नेति भेदनिवेशात् । न च वह्निव्याप्यवत्सधर्मापर्वतत्वावच्छिन्नविषयिताया वह्निव्याप्यत्वनिष्ठावच्छेदकताकतया वह्निव्याप्यत्वनिष्ठावच्छेदकताकविषयितावान्नेतिभेदस्यापि तादृशनिवेशाक्रान्ततया वह्निव्याप्यत्वनिष्ठावच्छेदकताकविषयितामात्रस्यैव भेदप्रतियोगितावच्छेदकतया प्रतियोगित्वसम्बन्धवच्छिन्नवह्निव्याप्यत्वावच्छिन्नविषयिताया अपि अवच्छेदकत्वेन वह्निव्याप्यवान्नवेति संशयेऽव्याप्तिरिति वाच्यम् । पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपावच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगितावच्छेदकत्वानिरूपितविषयित्वाऽवृत्तित्वे सति पक्षतावच्छेदकगतरूपवृत्तिविषयीतावृत्तिर्याऽवच्छेदकता तन्निरूपकप्रतियोगिताकभेदनिवेशात् , वह्निव्याप्यत्वनिष्ठावच्छेदकताकविषयितावान्नेति भेदीयप्रतियोगितावच्छेदकतायां पक्षतावच्छेदकगतरूपवृत्तिविषयतावृत्तित्वेऽपि तादृशावच्छेदकत्वानिरूपितवह्निव्याप्यत्वमात्रावच्छिन्नविषयतावृत्तित्वेन तादृशावच्छेदकत्वानिरूपितविषयत्वावृत्तित्वविरहात् । रूपवृत्तिविषयतावृत्तित्वनिवेशाद् वह्निपक्षकमहानसीयवह्निसाध्यकस्थले महानसीयवह्नित्वावच्छिन्नविषयतावान्नेति भेदीयप्रतियोगितावच्छेदकतायास्तादृशावच्छेदकत्वानिरूपितविषत्वावृत्तितया महानसीयवह्नित्वावच्छिन्नविषयतायास्तादृशभेदीयप्रतियोगितावच्छेदकत्वेऽपि वह्निर्महानसीयवह्निमान्नवेतिसंशयेऽव्याप्तिः, तत्तद्भेदीयप्रतियोगितावच्छेदकतायाः पक्षतावच्छेदकीभूतवह्नित्वगतैकत्ववृत्तिविषयतावृत्तित्वविरहादिति । न च तथापि वह्नित्वनिष्ठावच्छेदकताकविषयतावान्नेतिभेदीयप्रतियोगितावच्छेदकतायां तादृशावच्छेदकत्वाऽनिरूपितविषयत्वावृत्तितादृशरूपविषयतावृत्तितया महासीयवह्नित्वावच्छिन्नविषयताया अपि वह्नित्वनिष्ठावच्छेदकताकविषयतात्वेन तद्भेदीयप्रतियोगितावच्छेदकतया अनवच्छेकत्वरूपपक्षविषयितावहिर्भूतत्वविरहेण वह्निर्महानसीयवह्निमान्नवेतिसंशयेऽव्याप्तिर्दुर्वारैवेति वाच्यम् । तथासति पक्षतावच्छेदकगतरूपावृत्तिविषयत्वावृत्तिअवच्छेदकतावत्प्रतियोगिताकभेदनिवेशेनाऽव्याप्तिविरहात् । रूपावृत्तित्वघटकरूपवृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, वह्नित्वमात्रावच्छिन्नविषयतावान्नेति भेदस्यैव निवेशाक्रान्ततया महानसी-

---

अभाव एवेति वाच्यम् । एवंसति वह्निव्याप्याभावो वह्निव्याप्यवानित्यत्र वह्निव्याप्याभावो वह्निर्नवेति संशयेऽतिव्याप्तेरिति दिक् ।

यवह्नित्वावच्छिन्नविषतायां तदनवच्छेदकत्वसत्त्वादिति[१]।

१. अथवा पक्षतावच्छेदकगतरूपवृत्तित्वमपि निवेश्य तादृशरूपवृत्तिविषयतावान्नेति भेदो निवेश्यः, वन्हित्वनिष्ठावच्छेदकताकविषयतावान्नेति भेदस्य वस्तुगत्या पक्षतावच्छेदकगतरूपवृत्तिविषयतानिष्ठावच्छेदकत्वेऽपि रूपवृत्तित्वनिष्ठावच्छेदकताकत्वविरहात्, वन्हित्वगतैकत्ववृत्तिविषयतावान्नेति भेदस्य निवेशाक्रान्ततया महानसीयवन्हित्वावच्छिन्नविषयतायां तदनवच्छेदकत्वेनाऽव्याप्तिविरहात्, वन्हिव्याप्यवत्सधर्मा पर्वतो वन्हिव्याप्यवानित्यादौ वन्हिव्याप्यत्वावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतानिरूपितपर्वतत्वावच्छिन्नविषयत्वावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकगतरूपवृत्तिविषयतावान्नेति भेदस्यापि निवेशाक्रान्ततया साधर्म्यविषयतानिरूपितवन्हिव्याप्यत्वावच्छिन्नविषयतायास्तद्भेदप्रतियोगितावच्छेदकत्वेन वन्हिव्याप्यवत्सधर्मा पर्वतो वन्हिमान्नवेतिसंशयेऽतिव्याप्तिविरहात्।

नन्वेवमपि पर्वतो वन्हिमानित्यादौ वन्हित्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपितपर्वतत्वगतैकत्ववृत्तिविषयतावान्नेतिभेदस्यापि प्राप्ततया अभावत्वावच्छिन्नविषयतानिरूपितवन्हित्वावच्छिन्नविषयताया अपि तत्प्रतियोगितावच्छेदकतया वन्हिमान्नवेतिसंशयेऽव्याप्तिरिति चेन्न।

तादृशरूपवृत्तिविषयतात्वव्यापकावच्छेदकताकप्रतियोगिताकभेदनिवेशात्, तादृशविषयतात्वस्य घटत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयतासाधारणतया तादृशावच्छेदकतायास्तादृशरूपवृत्तिविषयतात्वव्यापकत्वविरहात्। वह्निव्याप्यवत्सधर्मापर्वतपक्षकस्थले तु पक्षतावच्छेदकगतरूपवृत्तिविषयतात्वस्य तादृशावच्छेद्यावच्छेदकभावापन्नविषयतामात्रसाधारणतया वन्हिव्याप्यत्वावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतानिरूपितपर्वतत्वावच्छिन्नविषयत्वावच्छिन्नपक्षतावच्छेदकगतरूपवृत्तिविषयतावान्नेतिभेदीयप्रतियोगितावच्छेदकतायां तादृशविषयतात्वव्यापकत्वसत्त्वात्। न च तथापि विषयतानिरूपितविषयतानिरूपितविषयतावान्नेतिभेदप्रतियोगितावच्छेदकताया अपि तादृशरूपवृत्तिविषयतात्वव्यापकतया विषयतानिरूपितविषयतानिरूपितविषयतायास्तत्प्रतियोगितावच्छेदकत्वेन पर्वतत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितवन्हित्वावच्छिन्नविषयताया अपि प्रतियोगितावच्छेदकत्वाद्वन्हिमान्नवेतिसंशयेऽव्याप्तिर्दुर्वारैवेति वाच्यम्। तथासति विषयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितविषयतानिष्ठावच्छेदकतानिरूपिता या विषयतानिष्ठावच्छेदकता तदनिरूपिततादृशविषयतात्वव्यापकावच्छेदकताकप्रतियोगिताकभेदनिवेशात्, तादृशभेदस्य तादृशावच्छेदकत्वानिरूपितावच्छेदकताकप्रतियोगिताकत्वविरहात्, वन्हिव्याप्यवत्सधर्मापर्वतपक्षकस्थले तु विषयतात्वनिष्ठावच्छेदकताभिन्नवन्हिव्याप्यत्वावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितविषयतानिष्ठावच्छेदकतानिरूपितरूपवृत्तिविषयतात्वव्यापकावच्छेदकतायास्तादृशावच्छेदकत्वानिरूपिततया तन्निरूपितप्रतियोगिताकभेदमादायातिव्याप्तिवारणसम्भवात्। न च तथापि अवच्छिन्नविषयतानिरूपितविषयतानिरूपितविषयतावान्नेतिभेदस्य तादृशतयाऽव्याप्तिर्दुर्वारैवेति वाच्यम्। नीलपर्वत इति ज्ञानीयनिरवच्छिन्ननीलत्वप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयतायामपि रूपवृत्तिविषयतात्वसत्त्वेन तद्भेदीयप्रतियोगितावच्छेदकताया व्यापकत्वविरहात्। न चैवमपि धर्मनिष्ठविषयतानिरूपितविषयतानिरूपितविषयतावान्नेतिभेदमादायाऽव्याप्तिरिति वाच्यम्। निष्ठत्वसम्बन्धानवच्छिन्नविषयतात्वनिष्ठावच्छेदकताभिन्नाऽवच्छेदकत्वाऽनिरूपितेत्यादि निवेशात्, तादृशावच्छेदकताभिन्नधर्मनिष्ठावच्छेदकतानिरूपितत्वेऽपि भिन्नावच्छेदकतायां निष्ठत्वसम्बन्धानवच्छिन्नत्वविरहात्। वन्हिव्याप्यवत्सधर्मापर्वतपक्षकस्थले च वन्हिव्याप्यत्वावच्छिन्नत्वनिष्ठस्वरूपसम्बन्धावच्छिन्नभिन्नावच्छेदकतानिरूपितत्वेन तद्भेदमादायाऽतिव्याप्तिवारणसम्भवादिति।

अथैवमपि वन्हिव्याप्याभावपक्षकवन्हिसाध्यकस्थले वन्हिव्याप्यत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयत्वावच्छिन्नाभावत्वोभयधर्मावच्छिन्नविषयतावान्नेतिभेदस्य पक्षतावच्छेदकरूपवृत्तिविषयतात्वव्यापकावच्छेदकताकप्रतियोगिताकतया वन्हिव्याप्यत्वावच्छिन्नविषयतायामपि प्रतियोगितावच्छेदकत्वेनाऽवच्छेदकत्वविरहात् वन्हिव्याप्याभावो वन्हिव्याप्यवान्नवेति संशयेऽव्याप्तिर्दुर्वारैवेति चेन्न।

प्रतियोग्यंशे यद्विशेषणं तदेव प्रतियोगितावच्छेदकं न तु प्रतियोगितावच्छेदके यद्विशेषणं तदपि, तत्प्रतियोगितावच्छेदकतावच्छेदकमिति विभाव्यते, तदा पक्षविषयितावहिर्भूतत्वं पक्षतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वम्, एवं च वह्निव्याप्यवत्सधर्मा पर्वतो घटवानित्याकारकानुभवं प्रति वह्निव्याप्यवत्सधर्मा पर्वतवान्देश इत्याकारकानुभवं प्रति च वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिज्ञानत्वेनेव विनिगमनाविरहात् पर्वतत्वावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयताशालिज्ञानत्वेनापि विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणताया वक्तव्यतया साक्षादेव वह्निव्याप्यत्वावच्छिन्नविषयतायां पक्षतावच्छेदकविशिष्टवैशिष्ट्यावगाहि अनुभवत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वसत्त्वेन वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्नवेतिसंशये नातिव्याप्तिः। न चैवमुक्तस्थले वह्निव्याप्याभाववान्देश इत्याकारकवह्निव्याप्यविशिष्टवैशिष्ट्यावगाह्यनुभवं प्रति वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपिताऽभावत्वावच्छिन्नविषयताशालिज्ञानत्वेनेवाऽभावत्वावच्छिन्नविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयताशालिज्ञानत्वेनाऽपि कारणताया वाच्यतया अभावत्वावच्छिन्नविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयतायामपि पक्षतावच्छेदकीभूतवह्निव्याप्यविशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वसत्त्वाद्वह्निव्याप्यवान्नवेति संशयेऽव्याप्तिरिति वाच्यम्। पक्षतावच्छेदकगतरूपवृत्तिविषयित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वस्य साध्यविषयितायां निवेशात्, तथा च वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयत्वावच्छिन्नजन्यतायाः रूपवृत्तिविषयत्वावच्छिन्नत्वविरहेण वह्निव्याप्यत्वावच्छिन्नविषयत्व अभावत्वावच्छिन्नविषयत्वोभयधर्मावच्छिन्नजन्यतानिरूपितजनकतामादायाऽव्याप्तिनिरासात्। न च वह्निव्याप्याभावपक्षकवह्निव्याप्यसाध्यकस्थले वह्निव्याप्यत्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतायाः पक्षतावच्छेदकगतरूपवृत्तितादृशोभयधर्मावच्छिन्नविषयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेन वह्निव्याप्याभावो वह्निव्याप्यवान्नवेतिसंशयेऽव्याप्तिरिति वाच्यम्। पक्षतावच्छेदकगतरूपवृत्तिविषयतानिरूपितविषयत्वानिरूपितत्वतादृशजन्यतानिरूपितजनकतावच्छेदकत्वोभयाभावनिवेशान्नाव्याप्तिः, तादृशवह्निव्याप्यसाध्यकस्थले

---

पक्षतावच्छेदकगतरूपवृत्तिविषयतानिरूपितविषयत्वानिरूपितत्वतादृशभेदप्रतियोगितावच्छेदकत्वोभयाभावस्य साध्यतावच्छेदकावच्छिन्नविषयतायां निवेशात्, अभावत्वावच्छिन्नविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नविषयतायाः पक्षतावच्छेदकरूपवृत्तिउभयधर्मावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितत्वेन तादृशविषयत्वानिरूपितत्वप्रयुक्तोभयाभावसत्त्वात्। न च वन्हिव्याप्यवत्छसधर्मापर्वतपक्षकस्थले पक्षघटकवन्हिव्याप्यत्वावच्छिन्नविषयतायां तत्पर्वतत्वावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतानिरूपितत्वसत्त्वेन तदीयपर्वतत्वावच्छिन्नविषयतायाः त्रितयधर्मावच्छिन्नरूपवृत्तिविषयतायाश्चाभेदेन त्रितयधर्मावच्छिन्नविषयतानिरूपितसाधर्म्यविषयतासत्त्वेनोभयाभावसत्त्वात्तन्नातिव्याप्तेर्दुर्वारत्वमेवेति वाच्यम्। तथासति तादृशविषयताद्वयोरभेदेपि तदीयसाधर्म्यविषयतायां पर्वतत्वावच्छिन्नविषयतायाः शुद्धपर्वतत्वावच्छिन्नविषयतात्वेन साधर्म्यविषयतात्वेन निरूप्यनिरूपकभावो न तु त्रितयधर्मावच्छिन्नविषयतात्वेन, एवं च पक्षतावच्छेदकगतरूपवृत्तिविषयतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावद्विषयत्वानिरूपितत्वघटितोभयाभावानिवेशान्न कोपि दोष इति।

साध्यीभूतवह्निव्याप्यत्वावच्छिन्नविषयतायां तादृशविषयतानिरूपितत्वविरहेण तद्घटितोभयाभावसत्त्वादिति[1]।

अथ साध्यविषयताघटितधर्मावच्छिन्नत्वमित्यस्य साध्यविषयताघटितधर्मावच्छिन्नत्वार्थकत्वे वन्हेरपि वह्निव्याप्यतया पर्वतपक्षकवह्निव्याप्यसाधकस्थले पर्वतो वह्निमान्नवेतिसंशयेऽतिव्याप्तिर्दुर्वारैव, साध्यतावच्छेदकनिष्ठविषयताघटितधर्मावच्छिन्नत्वार्थकत्वे च वह्न्यभावत्वेन वह्निव्याप्यत्वावगाहिवह्निवह्न्यभाववान्वा पर्वत इति संशयेऽतिव्याप्तिः, तत्र वह्निव्याप्यत्वनिष्ठविषयताघटितधर्मावच्छिन्नप्रतिबध्यतासत्त्वात्।

अत्र ब्रूमः—साध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नत्वार्थकत्वान्नातिव्याप्तिः, वन्हिव्याप्यत्वावच्छिन्नविषयताघटितधर्मावच्छिन्नत्वस्य प्रतिबध्यतायामसत्त्वात्। न च वह्निव्याप्यत्वस्य वह्न्यभाववद्वृत्तित्वरूपतया वह्न्यभावत्वस्याऽपि साध्यतावच्छेदकत्वेन पर्वतो वह्निमान्नवेतिसंशये साध्यतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबध्यतासत्त्वादतिव्याप्तिस्तदवस्थैवेति वाच्यम्। साध्यतावच्छेदकगतरूपवृत्तिविषयताघटितधर्मावच्छिन्नत्वस्योक्तत्वात्।

अथ प्रकारावच्छिन्नत्वमते वह्नित्वेन वह्निव्याप्यत्वावगाहिसंशये साध्यतावच्छेदकीभूतवह्निव्याप्यत्वावच्छिन्नाऽभावनिष्ठविषयताघटितधर्मावच्छिन्नप्रतिबध्यतासत्त्वादतिव्याप्तिर्दुर्वारैवेति चेन्न। तादृशविषयतायाः स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्नित्ववह्निव्याप्यत्वाभावत्वैतद्गतसमुदायत्वे सत्त्वेन साध्यतावच्छेदकगतरूपवृत्तित्वविरहात्। अथवा प्रतियोगित्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नरूपवृत्तिविषयतानिवेशेनाऽतिव्याप्तिविरहात्, अभावनिष्ठविषयतायाः स्वरूपसम्बन्धावच्छिन्नत्वेन प्रतियोगित्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वविरहादिति ध्येयम्।

नन्वेवमपि प्रतियोगितासम्बन्धेन वह्निमत्पक्षकसंयोगसम्बन्धावच्छिन्नवह्न्यभावसाध्यक-

---

१. श्रीचरणास्तु पक्षतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारताभिन्नत्वम्, पक्षतावच्छेदकप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकप्रकारताभिन्नत्वं वा पक्षविषयिताबहिर्भूतत्वम्, वह्निव्याप्यो वह्निव्याप्यवानित्यत्र च वह्निव्याप्यो वन्हिव्याप्यवान्नवेतिसंशयीयवन्हिव्याप्यत्वावच्छिन्नविशेष्यतायास्तादृशत्वान्नाव्याप्तिः। न चैवमुक्तयुक्त्या उक्तस्थले वह्निव्याप्यो वह्निमान्नवेतिसंशयेऽतिव्याप्तिः, वह्निव्याप्यत्वावच्छिन्नविशेष्यतायास्तादृशत्वादिति वाच्यम्। तादृशप्रकारताभिन्ना सती पक्षतावच्छेदकावच्छिन्नविषयिताविशिष्टा या साध्यविषयिता तदवच्छिन्नत्वस्य प्रतिबध्यतायां निवेशात्। वै० स्वभिन्नत्वस्वनिरूपकज्ञानीयत्वोभयसम्बन्धेन, तथाच वन्हिव्याप्यो वह्निमान्नवेतिसंशयीयवह्निव्याप्यत्वावच्छिन्नविशेष्यतायां तादृशप्रकारताभिन्नत्वसत्त्वेऽपि पक्षविषयिताविशिष्टत्वविरहान्नातिव्याप्तिः। न च तथापि वन्हिव्याप्यो वन्हिमान्नवा वन्हिव्याप्यघटवांश्चेति समूहालम्बनज्ञानीयघटत्वावच्छिन्नप्रकारतानिरूपितवन्हिव्याप्यत्वावच्छिन्नविशेष्यत्वात्मकपक्षविषयता - वैशिष्ट्यस्य संशयीयवन्हिव्याप्यत्वावच्छिन्नविशेष्यतायां सत्त्वात् उक्तस्थले वन्हिव्याप्यो वन्हिमान्नवेति संशयवारणमशक्यमेवेति वाच्यम्। निरुक्तप्रकारताभिन्ना या पक्षविषयिताविशिष्टसाध्यविषयिता तद्व्याप्यत्वस्यैव प्रतिबध्यतायां निवेशात्। वै० उक्तोभयसम्बन्धेन। उक्तस्थले च पक्षविषयिताविशिष्टा या समूहालम्बनज्ञानीयवन्हिव्याप्यत्वावच्छिन्नविशेष्यता तदभाववति समूहालम्बनात्मकवन्हिव्याप्यो वन्हिमान्नवेतिसंशये निरुक्तप्रतिबध्यतायाः सत्त्वेन व्याप्यत्वविरहान्नोक्तदोष इति प्राहुः।

स्थले अभावो वह्निमान्वेति संशयेऽतिव्याप्तिः, प्रतियोगितासम्बन्धेन वह्निमान् वह्न्यभाववान् वह्निमांश्चाऽभाव इति निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः पक्षधर्मिकसाध्यनिश्चयत्वव्यापकत्वात्, तादृशविषयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वस्य तत्संशयीयप्रतिबध्यतायां सत्त्वात्। प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे तु गगनाभाववद्भाववत्कालीनघटो गगनाभाववानित्यादौ तादृशघटो गगनवान्नवेति संशयेऽव्याप्तिः, साध्यवत्तानिश्चयनिष्ठज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितत्वस्य तत्संशयीयप्रतिबध्यतायां विरहात्। न च तत्र पक्षविषयितावहिर्भूतसाध्यविषयितावच्छिन्नत्वविरहादेव नातिव्याप्तिः, अन्यथा तादृशघटो गगनवान्नवेति संशयेऽव्याप्तिभिया ज्ञानवैशिष्ट्यानवच्छिन्नत्वं प्रतिबन्धकतायां न निवेशनीयम्, अपि तु साध्यविषयतावहिर्भूतपक्षविषयत्वावच्छिन्नत्वमेव, एवं च वह्निमत्पक्षकस्थले उक्तसंशयीयप्रतिबध्यतायास्तद्बहिर्भूतवह्न्यवच्छिन्नविषयत्वावच्छिन्नत्वाभावान्नातिव्याप्तिः। न च पक्षविषयत्वावच्छिन्नत्वमात्रनिवेशेनैव तद्वारणसम्भवे किं साध्यविषयतावहिर्भूतत्वनिवेशेनेति वाच्यम्। वह्निव्याप्यवत्पर्वतकालीनवह्निव्याप्यसाध्यकस्थले तादृशवह्निव्याप्यो वह्निमान्नवेति संशयेऽतिव्याप्तेः, तत्संशयीयप्रतिबध्यतायां पक्षविषयत्वावच्छिन्नत्वस्य सत्त्वात्, अतः साध्यविषयतावहिर्भूतत्वदलम्। एवं च तत्संशयीयप्रतिबध्यतायां साध्यविषयतावहिर्भूतपक्षविषयत्वावच्छिन्नत्वविरहान्न दोष इति वाच्यम्; एवमपि जलकालीनवह्न्यभाववज्जलवत्कालीनह्रदो जलवानित्यादौ तादृशह्रदो जलकालीनवह्न्यभाववान्नवेति संशयेऽतिव्याप्तिः, तत्र पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नप्रतिबन्धकतान्तर्गतजलवान् जलकालीनवह्न्यभाववानिति निश्चयविशिष्टजलवान् तादृशह्रद इति निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वस्य तत्प्रतिबध्यतायां सत्त्वात्, एवं तादृशप्रतिबध्यतायाः पक्षविषयतावहिर्भूतसाध्यविषयताघटितधर्मावच्छिन्नत्वसाध्यविषयतावहिर्भूतपक्षविषयत्वावच्छिन्नत्वयोः सत्त्वाच्चेति चेन्न।

वस्तुतस्त्वित्याद्विकल्पेनैव तद्वारणात्। तत्कल्पे चोक्तसंशयीयप्रतिबध्यतायां साध्याभावप्रकारकत्वसाध्यविशेष्यकत्वाऽन्यतरानवच्छिन्नत्वान्न दोष इति(१)।

---

(१) नव्यास्तु पक्षधर्मिकसाध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वे सति साध्यवत्ताज्ञानधर्मितावच्छेदका ये ये धर्माः तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकाविषयितावच्छेदकधर्मावच्छिन्नविषयतावज्ज्ञानत्वं पक्षतात्वम्, तथा चायमनुगमः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतावैशिष्ट्यविषयितावज्ज्ञानत्वं पक्षतात्वम्। वै० स्वनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्वावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नत्वोभयसम्बन्धेन, कूटत्वावच्छिन्नवत्ता च स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन, प्रतिबध्यतावत्ता च स्वावच्छेदकप्रकारतावच्छेदकधर्मावच्छिन्नत्वसम्बन्धेन, तथाच नोक्तसंशयादावतिव्याप्तिशङ्का।

न च पर्वतो वह्निमान्नवेतिसंशयादावसम्भवः, वह्न्यभावत्वावच्छिन्नविषयितायां संयोगसम्बन्धावच्छिन्नप्रकारतावैशिष्ट्यविरहात्, तत्र स्वनिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्य सत्त्वेऽपि स्वनिरूपितवह्न्यभाववत्पर्वतत्वावच्छिन्नविशेष्यतावच्छेदककूटत्वस्य विरहात्।

ननु पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयता-निरूपितसाध्यविषयतावच्छिन्नत्वमेव प्रतिबध्यतायां निवेश्यतां किं पक्षविषयताबहिर्भूतत्वनिवेशेन, वह्निव्याप्यवत्तद्धर्मा पर्वतो वह्निमानवेति संशयीयप्रतिबध्यतायां तादृशरूपवृत्तिविशेष्यतानिरूपितसाध्यविषयत्वावच्छिन्नत्वविरहादिति चेन्न ।

पर्वतो वह्निमानवेति संशयस्याऽसंग्रहापत्तेः । प्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नविषयताया एव प्रतिबध्यतावच्छेदकतया तत्र पक्षविषयतानिरूपितत्वविरहात्, तत्संशयीयप्रतिबध्यतावच्छेदककोटौ तादृशरूपवृत्तिपर्वतत्वावच्छिन्नविशेष्यतात्वेन तत्सम्बन्धावच्छिन्नसाध्यविषयतात्वेन च निरूप्यनिरूपकभावविरहात् । यदि च तादृशरूपवृत्तिविशेष्यतानिरूपितत्वं साक्षात्परम्परासाधारणमित्युच्यते, तदा तद्दोषवारणेऽपि वह्निव्याप्याभावपक्षकवह्निव्याप्यसाध्यकस्थले साध्याभावधर्मिताऽऽधेयतासम्बन्धेन पक्षवानवेति संशयस्याऽलक्ष्यत्वेन तत्राऽतिव्याप्तिः स्यादिति(१) ।

---

त्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयस्य आहार्यतया तत्प्रतिबन्धकत्वाप्रसिद्धेरिति वाच्यम् । स्वावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतायां निरवच्छिन्नत्वस्य निवेशात् । न च तथापि पर्वतो द्रव्यत्वाभाववान् द्रव्यत्र पर्वतो द्रव्यत्वाभाववान्नवेति संशयेऽव्याप्तिः, द्रव्यं पर्वतो द्रव्यत्वाभाववानितिज्ञानीयप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकतावद्द्रव्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपितद्रव्यत्वाभावत्वावच्छिन्नप्रकारताशालिनिश्चयस्य आहार्यत्वादिति वाच्यम् । स्वावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतायामनाहार्यज्ञानीयत्वस्य निवेशात् उक्तज्ञानीयद्रव्यपर्वतत्वावच्छिन्नविशेष्यतायामनाहार्यज्ञानीयत्वविरहान्न दोष इति प्राहुः ।

पक्षे साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वे सति पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापिका भवति यद्रूपावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारता तद्रूपावच्छेदेन तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावज्ज्ञानत्वं पक्षतात्वम्, तथाच जलकालीनवह्न्यभावजलवत्कालीनह्रदत्वावच्छिन्नविशेष्यतानिरूपितजलत्वावच्छिन्नप्रकारता तादृशनिश्चयत्वव्यापिका भवति तादृशह्रदत्वावच्छेदेन जलत्वावच्छिन्नप्रकारताशालिज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिरूपितत्वस्य तत्संशयीयप्रतिबध्यतायां विरहान्न दोषः । एवं प्रतियोगितया वह्निमत्पक्षकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावसाध्यकस्थलेऽभावो वह्निमान्नवेतिसंशयेऽपि नातिव्याप्तिः, अथ च गगनाभाववदभाववत्कालीनघटो गगनाभाववानित्यत्र तादृशघटो गगनाभाववान्नवेति संशयेपि न दोषः, तादृशघटत्वावच्छिन्नविशेष्यतानिरूपितगगनाभावाभावत्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति शुद्धघटत्वावच्छेदेन गगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयस्य प्रतिबन्धकत्वादित्यस्मद्गुरुचरणाः ।

(१) नन्वत्र धर्मितावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वनिवेशेनैव वह्निव्याप्यवत्तद्धर्मा पर्वतो वह्निव्याप्यवानित्यनुमितौ तादृशपर्वतो वह्निमान्नवेति संशयस्य पक्षतात्ववारणसम्भवे पक्षविषयताबहिर्भूतत्वदलं व्यर्थमिति चेन्न ।

तत्रैव वह्न्यभाववत्तादृशपर्वतवान्नवेति संशयस्य पक्षतात्वापत्तेः, तत्र धर्मितावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वसत्त्वात् । न चावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वनिवेशादेव न तत्रातिव्याप्तिः, तत्र साध्याभावत्वावच्छिन्नप्रकारताभिन्नप्रकारतावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वमेव प्रतिबध्यतायां निवेश्यम्, तावतैव वह्न्यभावत्वावच्छिन्नप्रकारताभिन्नप्रकारतावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वस्य पर्वतो वह्निमान्नवेतिसंशयीयप्रतिबध्यतायां सत्त्वान्न तस्य पक्षतात्वहानिरिति वाच्यम् । वह्निव्याप्याभाववत्तद्धर्मा

पर्वतो वह्निव्याप्यवानित्यनुमितौ तादृशपर्वतो वह्निमान्नवेतिसंशयस्य पक्षतात्वापत्तेः, तत्संशयीयप्रतिबध्यतायां वह्निव्याप्याभाववत्त्वावच्छिन्नप्रकारताभिन्नप्रकारतावच्छेदकतानात्मकप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यविषयत्वावच्छिन्नत्वसत्त्वात् ।

नन्वेवमपि पक्षघटकप्रतियोगित्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नविषयतायां साध्याभावत्वावच्छिन्नप्रकारताभिन्नसाधर्म्यप्रकारतावच्छेदकतात्मकत्वेनावच्छेदकतानात्मकत्वविरहान्नोक्तदोष इति चेन्न । साध्याभावत्वावच्छिन्नत्वपदेन साध्याभावत्वनिष्ठावच्छेदकतानिरूपितत्वं विवक्षणीयम्, तथाचोक्तस्थले साधर्म्यप्रकारतायामपि वह्निव्याप्याभावत्वनिष्ठावच्छेदकतानिरूपितत्वसत्त्वात्तत्प्रकारतापि न भिन्ना, अपि तु घटादिप्रकारतैव तदवच्छेदकतानात्मकत्वस्य प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यविषयितायां सत्त्वात्पुनरुक्तस्थले तादृशपर्वतो वह्निमान्नवेतिसंशयस्य पक्षतात्वापत्तिरतः साध्याभावत्वावच्छिन्नत्वपदेन साध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितसाध्यनिष्ठावच्छेदकताभिन्ना सती अभावत्वनिष्ठावच्छेदकतानिरूपिता याऽवच्छेदकता तन्निरूपितत्वं प्रकारतायां निवेश्यम्, तथाच साधर्म्यप्रकारता न साध्याभावत्वावच्छिन्ना तादृशावच्छेदकताभिन्नसाधर्म्यत्वनिष्ठावच्छेदकतानिरूपितत्वात्, भवति च वह्निव्याप्याभावत्वावच्छिन्नैव तद्भिन्नसाधर्म्यप्रकारतावच्छेदकतात्मकत्वस्यैव सत्त्वेनाऽनात्मकत्वस्य पक्षघटकसाध्यविषयतायां विरहान्नातिव्याप्तिः । न चैवमपि पर्वतो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्याभाववत्पर्वतो वह्निमान्नवेतिसंशयस्य पक्षतात्वापत्तिः, तदीयप्रतिबध्यतायां वह्निव्याप्याभावत्वावच्छिन्नप्रकारताभिन्नप्रकारतावच्छेदकतानात्मकप्रतियोगित्वसम्बन्धाव च्छिन्नसाध्यविषयित्वावच्छिन्नत्वसत्त्वादतः पक्षविषयताबहिर्भूतत्वनिवेश इति वाच्यम् । वह्निव्याप्याभाववत्पक्षकवह्निव्याप्यसाध्यकस्थले वह्निव्याप्याभाववान् वह्निमान्नवेतिसंशयस्य पक्षतात्वापत्तेः, साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्नप्रकारतावच्छेदकतानात्मकसाध्यविषयित्वावच्छिन्नत्वस्योक्तसंशयीयप्रतिबध्यतायां सत्त्वात् । न च तथापि साध्याभावत्वावच्छिन्नप्रकारताभिन्नविषयतावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वं निवेश्यम्, तथाचोक्तस्थले तादृशप्रकारताभिन्नविशेष्यतावच्छेदकतात्मकत्वस्यैव साध्यविषयतायां सत्त्वान्न दोष इति वाच्यम् । तत्रैव वह्न्यभावो वह्निव्याप्याभाववान्नवेति संशयादावतिव्याप्त्यापत्तेः, तदीयप्रतिबध्यतायां तादृशावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वसत्त्वात् । न च स्वरूपसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्नविषयतावच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वं निवेश्यम्, तथाच तत्संशयीयप्रतिबध्यतायां तादृशप्रकारताभिन्नस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नविषयतावच्छेदकतात्मकसाध्यविषयत्वावच्छिन्नत्वस्यैव सत्त्वान्न तत्रातिव्याप्तिरिति वाच्यम् । पर्वतपक्षकवह्न्यभावसाध्यकस्थले पर्वतो वह्न्यभाववान्नवेति संशयादावव्याप्त्यापत्तेः, तदीयप्रतिबध्यतावच्छेदकवह्न्यभावत्वावच्छिन्नविषयतायां स्वरूपसम्बन्धावच्छिन्नतादृशप्रकारताभिन्नसंयोगसम्बन्धावच्छिन्नवह्न्यभावाभावत्वावच्छिन्नप्रकारतावच्छेदकतात्मकत्वेनाऽवच्छेदकतानात्मकत्वविरहात् । न च साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्नेत्यादि निवेश्यम्, तथाच संयोगसम्बन्धावच्छिन्नवह्न्यभावाभावत्वावच्छिन्नप्रकारता न तादृशसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्ना, अपि तु घटादिप्रकारतैव तदवच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वस्योक्तसंशयीयप्रतिबध्यतायां सत्त्वान्नोक्ताव्याप्तिरिति वाच्यम् । पूर्वोक्तस्थले वह्न्यभावो वह्निव्याप्याभावो नवेति संशयादावतिव्याप्तितादवस्थ्यात्, आधेयतासम्बन्धस्यापि तादृशबुद्धिविरोधिताघटकतया तत्सम्बन्धावच्छिन्नप्रकारता न तादृशसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्ना, अपि तु अन्यप्रकारतैव तदवच्छेदकतानात्मकसाध्यविषयत्वावच्छिन्नत्वस्योक्तसंशयीयप्रतिबध्यतायां सत्त्वात्, अतः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्नेत्यादिनिवेशः, तथाच तादृशसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्नत्वस्याधेयतासम्बन्धावच्छिन्नवह्निव्याप्याभावप्रकारतायां सत्त्वेन तदवच्छेदकतानात्मकत्वस्य तत्संशयीयप्रतिबध्यतावच्छेदकसाध्यविषयतायां विरहान्न तत्रातिव्याप्तिरिति । किं पक्षविषयताबहिर्भूतत्वनिवेशेन । न च वह्निव्याप्यपक्षकवह्निव्याप्यसाध्यकस्थले वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिः, तदीयप्रतिबध्यतायामुक्तसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नप्रकारताभिन्नविषयतावच्छेदकतानात्मकसाध्य-

वस्तुतस्तु पक्षविषयताबहिर्भूतत्वाद्यपहाय साध्याभावत्वाद्यवच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नमेव साध्यनिश्चयनिवर्त्यत्वं वाच्यम्, तेन वह्नौ पक्षे वह्नेः साध्यतायां वह्निर्वह्निमान्नवेति संशयस्य पक्षविषयिताबहिर्भावेण साध्यविषयित्वाऽप्रसिद्धावपि न तत्राऽव्याप्तिः ।

वस्तुतस्त्विवाति । एवं च व्याप्यसाध्यकस्थले वह्निमान्नवेतिसंशयस्य न पक्षतात्वापत्तिः, तन्निष्ठायाः साध्यवत्तानिश्चयप्रतिबध्यतायाः तद्धर्माभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वेन साध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वविरहात् साध्यविशेष्यकत्वावच्छिन्नत्वविरहाच्च । पर्वतो वह्निमान्नवेति संशयसङ्ग्रहाय प्रतिबध्यतायां साध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वनिवेशः । वह्निः पर्वते नवेत्यादिसंशयसङ्ग्रहाय पक्षविशेष्यकत्वावच्छिन्नत्वनिवेशः । अभावव्याप्यसाध्यकस्थलेऽभाववान्नवेति संशयेऽतिप्रसङ्गवारणाय साध्याभावत्वावच्छिन्नेति, अभावाभाववृत्तिप्रकारतायाः अभावव्याप्याभावनिष्ठत्वेऽपि साध्याभावत्वानवच्छिन्नत्वात् । वस्तुतस्तु वह्नित्वेन घटाववाह्नि-अभावत्वेन घटाववाह्नि-वह्निमान्नवेति संशयेऽव्याप्तिवारणाय साध्याभावप्रकारकत्वपदेन साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्ना याऽभावत्वावच्छिन्ना प्रकारता तत्कत्वावच्छिन्नत्वमर्थो बोध्यः । अन्यथा वस्तुगत्या साध्याभाववृत्तिप्रकारत्वावच्छिन्नत्वानिवेशे उक्तसंशयेऽव्याप्तिः स्यादिति ।

नन्वत्र साध्यप्रकारकत्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नत्वमेव प्रतिबध्यतायां निवेश्यतां किमभावपदोपादानेन, विनिगमनाविरहादभावत्वावच्छिन्नविशेष्यतानिरूपितसाध्यप्रकारताया अपि प्रतिबध्यतावच्छेदकत्वात् ।

न च वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यनुमितौ तादृशपर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तिः, तत्प्रतिबध्यताया अपि पक्षतावच्छेदकघटकसाध्यप्रकारकत्वावच्छिन्नत्वादिति वाच्यम् । प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यप्रकारताकत्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशनीयत्वादिति चेन्न ।

वह्निव्याप्याभावो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्याभावो वह्निमान्नवेतिसंशयेऽतिव्याप्तिः, पक्षात्मकाऽभावांशे प्रतियोगितासम्बन्धेन साध्यप्रकारकत्वाद(१) तोऽभावपदम्,

विषयत्वावच्छिन्नत्वसत्त्वादिति वाच्यम् । साध्यविषयत्वावच्छिन्नत्वपदेन पक्षविषयताविशिष्टतादृशसाध्यविषयत्वावच्छिन्नत्वस्य विवक्षितत्वात् । वै० स्वभिन्नत्वस्वनिरूपकज्ञानीयत्वोभयसम्बन्धेन. तथा च तत्संशयीयवह्निव्याप्यविषयतायां वह्निव्याप्यविषयतावैशिष्ट्यविरहात्, स्वनिरूपकज्ञानीयत्वसत्त्वेऽपि स्वभिन्नत्वाभावान्न कोऽपि दोष इति ।

तदसत् । एतादृशगुरुनिवेशापेक्षया लाघवेन पक्षविषयताबहिर्भूतत्वनिवेशस्यैवौचित्यादिति ध्येयम् ।

(१) न च धर्मितावच्छेदकतानात्मकतादृशसंबन्धावच्छिन्नतादृशप्रकारित्वावच्छिन्नत्वं निवेश्यम्, तथा च तत्प्रतिबध्यताया तादृशावच्छेदकतानात्मकप्रकारित्वावच्छिन्नत्वविरहान्नातिव्याप्तिरिति वाच्यम् । वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यत्र वह्निर्वह्निव्याप्यवत्सधर्मा पर्वते नवेतिसंशयेऽतिव्याप्तेः । तत्प्रतिबध्यताया धर्मितावच्छेदकतानात्मकसाध्यप्रकारित्वावच्छिन्नत्वसत्त्वात् । न चावच्छेदकतानात्मकसाध्यप्रकारित्वावच्छिन्नत्वनिवेशादेव नोक्तातिव्याप्तिः, उक्तसंशयप्रतिबध्यतावच्छेदकीभूतसाध्यविषयतायाः प्रकारतावच्छेदकतात्मकत्वादिति वाच्यम् । पर्वतो वह्निमान्नवेत्यादिसंशयस्याऽसंग्रहापत्तेः । तत्प्रतिबध्यतावच्छेदकवह्निविषयताविशिष्टप्रकारताया अवच्छेदकतानात्मकत्वविरहादित्यरूचिमुपास्य ।

तथाच साध्याभावप्रकारित्वावच्छिन्नत्वविरहान्न दोषः । न चाऽभावपदोपादानेऽपि वह्निव्याप्याभाववत्त्वधर्मो पर्वतो वह्निव्याप्यवानित्यनुमितौ तादृशपर्वतो वह्निमान्नवेतिसंशयेऽतिव्याप्तिः, तत्प्रतिबध्यतायां अपि साध्याभावत्वावच्छिन्नप्रकारकत्वादिति वाच्यम् । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्याभावप्रकारतायाः प्रवेश्यत्वात् अवच्छते च प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतायां पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वविरहेण तादृशनिवेशाऽसम्भवात् । न चैवमपि वह्निव्याप्याभावपक्षकवह्निव्याप्यसाध्यकस्थले वह्निव्याप्याभाव आधेयतासम्बन्धेन पक्षणानवेतिसंशयेऽतिव्याप्तिः, तत्प्रतिबध्यतायाः पक्षविशेष्यतानिरूपितसाध्याभावप्रकारित्वावच्छिन्नत्वादिति वाच्यम् । साध्याभावत्वावच्छिन्नप्रकारितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावत्वस्य साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वस्य विवेक्षणीयत्वादिति ध्येयम् ।

ननु तथापि वह्निव्याप्याभावो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्यो वह्निमान्नवेति संशयेऽतिव्याप्तिः, तत्प्रतिबध्यतायाः साध्यविशेष्यकत्वावच्छिन्नत्वादिति चेन्न । साक्षात्परम्परासाधारण(१)पक्षतावच्छेदकावच्छिन्नप्रकारतानिरूपितसाध्यविशेष्यकत्वावच्छिन्नत्वस्य प्रतिबध्यतायां विवक्षणीयत्वात्, वह्निव्याप्यो वह्निमान्नवेतिसंशयीयप्रतिबध्यतायां साध्यविशेष्यकत्वावच्छिन्नत्वसत्त्वेऽपि पक्षप्रकारतानिरूपितसाध्यविशेष्यकत्वावच्छिन्नत्वविरहेणाऽदोषात्(२) ।

---

(१) वह्निः पर्वते नवेतिसंशये साक्षात्, वह्निः पर्वतनिष्ठाभावप्रतियोगी नवेतिसंशये परंपरया पक्षनिष्ठप्रकारतानिरूपितत्वस्य साध्यविशेष्यतायां सत्त्वादुभयोः संग्रहः ।

(२) न च तथापि वह्निव्याप्यो वह्निव्याप्यवानित्यत्र वह्निव्याप्यवद्वह्निव्याप्यो वह्निमान्नवेतिसंशयेऽतिव्याप्तिः, तदीयप्रतिबध्यतायां तादृशपक्षप्रकारतानिरूपितसाध्यविशेष्यकत्वावच्छिन्नत्वसत्त्वादिति वाच्यम् । पक्षतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकतानिरूपितसाध्यविशेष्यतात्वावच्छिन्नावच्छेदकताकप्रतिबध्यतानिवेशेनाऽतिव्याप्तिविरहात् । न चैवमुक्तस्थले वह्न्यभावो वह्निव्याप्यनिष्ठाभावप्रतियोगी नवेतिसंशयेऽतिव्याप्तिः, साध्यीभूतवह्निव्याप्यत्वस्य वह्न्यभाववद्वृत्तित्वात्मकत्वेन तद्घटकवह्न्यभावत्वस्यापि साध्यतावच्छेदकत्वात् पक्षतावच्छेदकीभूतवह्निव्याप्यत्वावच्छिन्नविषयतानिरूपितसाध्यतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्नविशेष्यतात्वावच्छिन्नावच्छेदकताकप्रतिबध्यतासत्त्वादिति वाच्यम् । पक्षतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकतानिरूपितसाध्यतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविशेष्यतात्वावच्छिन्नावच्छेदकताकप्रतिबध्यतानिवेशात्, वह्न्यभावत्वावच्छिन्नविशेष्यतायास्तादृशावच्छेदकत्वविरहेणाऽतिव्याप्तिविरहात् ।

न च तथापि वह्निव्याप्यात्मकवह्न्यभावो वह्निव्याप्यनिष्ठाभावप्रतियोगी नवेतिसंशयेऽतिव्याप्तिः, तत्र तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकवह्निव्याप्यत्ववह्न्यभावत्वोभयधर्मावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताकप्रतिबध्यतासत्त्वादिति वाच्यम् । पक्षतावच्छेदकावच्छिन्नविषयत्वनिष्ठावच्छेदकतानिरूपितसाध्यतावच्छेदकगतरूपवृत्तिविशेष्यत्वनिष्ठावच्छेदकताकप्रतिबध्यतानिवेशान्न दोषः । तादृशोभयधर्मावच्छिन्नविषयताया वह्न्यभावत्वावच्छिन्नविशेष्यतात्वेन प्रतिबध्यतावच्छेदकत्वेऽपि तादृशोभयधर्मावच्छिन्नविशेष्यतायाः साध्यतावच्छेदकगतरूपवृत्तित्वविरहादिति ।

न च वह्निव्याप्यो वह्निमान्नवेति संशये पक्षतावच्छेदकवह्न्यभावत्वावच्छिन्नविषयतानिरूपितसाध्यतावच्छेदकगतरूपवृत्तिवह्निव्याप्यत्वावच्छिन्नविशेष्यतात्वावच्छिन्नप्रतिबध्यतासत्त्वादतिव्याप्तितादवस्थ्यमिति वाच्यम् । तथासति पक्षतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतानिरूपितताद्दृ-

अथ वह्निव्याप्यसाध्यकस्थले वह्निमान्नवेतिसंशयेऽतिव्याप्तिर्दुर्वारैव वह्नेरपि वह्निव्याप्य-तया वह्निमान्नवेतिसंशये साध्यप्रतियोगिकाभावप्रकारित्वावच्छिन्नप्रतिबध्यतासत्त्वादिति चेन्न ।

साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतानिवे-शेन तत्रातिव्याप्तिविरहात् । न च वह्नित्वस्यापि साध्यतावच्छेदकतया तद्दोषतादवस्थ्यमिति वाच्यम् । तथासति साध्यतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियो गिताकाभावत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यताया निवेशनीयतया वह्नित्वावच्छिन्नप्रतियो गितायां तादृशावच्छेदकताकत्वविरहेणाऽतिव्याप्तिविरहात् ।

अथ वह्निव्याप्याभावपक्षकवह्निव्याप्यसाध्यकस्थले वह्न्यभावो वह्निव्याप्याभावनिष्ठाभाव प्रतियोगी नवेतिसंशये वह्निव्याप्याभावरूपसाध्याभावप्रकारित्वावच्छिन्नप्रतिबध्यतासत्त्वादति-व्याप्तिरिति चेन्न ।

साध्याभावप्रकारितायां पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वं प्रक्षिप्याऽतिप्रसङ्ग वारणसम्भवात् । न च वह्न्यभावत्वस्यापि पक्षतावच्छेदकतया वह्न्यभावत्वावच्छिन्नविशे ष्यतानिरूपितवह्निव्याप्याभावरूपसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतासत्त्वेन त द्दोषतादवस्थ्यमिति वाच्यम् । पक्षतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकता कविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतानिवेशात्(१) ।

---

साध्यविशेष्यकत्वावच्छिन्नप्रतिबध्यतानिवेशेनादोषात्, वन्ह्यभावत्वावच्छिन्नविषयतायाः तादृशरूपावच्छि न्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वविरहात् ।

केचित्तु पक्षनिष्ठाभावप्रतियोगित्वप्रकारता—पक्षवृत्तित्वाभावप्रकारता—आधेयत्वसम्बन्धावच्छिन्नप्रतियो-गिताकपक्षाभावप्रकारता—एतदन्यतमप्रकारतानिरूपितसाध्यविशेष्यकत्वावच्छिन्नत्वनिवेशान्न दोषः । एतन्मते साक्षात्परंपरासाधारणनिरूप्यनिरूपकभावानभ्युपगमः । एतेन साक्षात्परंपरासाधारणपक्षविषयतानिरूपि तसाध्यविशेष्यत्वावच्छिन्नप्रतिबध्यतानिवेशेनैव सर्वदोषवारणसंभवे तादृशान्यतरावच्छिन्नत्वनिवेशो व्यर्थ इति निरस्तम् ।

(१) न च तथापि वन्हिव्याप्यात्मकवन्ह्यभावो वन्हिव्याप्याभावनिष्ठाभावप्रतियोगित्वाभाववानितिज्ञा-नीयोभयधर्मावच्छिन्नविशेष्यतायास्तादृशावच्छेदकतया तादृशविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारि-त्वावच्छिन्नप्रतिबध्यतासत्त्वेन तद्दोषतादवस्थ्यमिति वाच्यम् । पक्षतावच्छेदकगतरूपवृत्तिविशे-ष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतानिवेशात्, तादृशोभयधर्मावच्छिन्नविशे-ष्यतायाः पक्षतावच्छेदकगतरूपवृत्तित्वविरहादेव तादृशविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारित्वाव-च्छिन्नप्रतिबध्यतामादायाऽतिव्याप्तिव्युदासात् ।

अथ पक्षतावच्छेदकगतरूपवृत्तिविशेष्यतानिरूपितसाध्यप्रकारित्वावच्छिन्नप्रतिबध्यतानिवेशेनैव सामं-जस्ये साध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वपर्यन्तनिवेशनं व्यर्थमिति चेत् ।

सत्यम्, वन्हिव्याप्यवत्त्वधर्मा पर्वतो वन्हिव्याप्यवानित्यादौ तादृशपर्वतो वन्हिमान्नवेतिसंशयेऽतिव्याप्तेः, तत्र पक्षघटकवन्हिव्याप्यत्वावच्छिन्नविषयतायाः पक्षतावच्छेदकगतरूपवृत्तिशितयधर्मावच्छिन्नविशेष्यत्वाभि-न्नशुद्धपर्वतत्वावच्छिन्नाविषयतानिरूपितत्वसत्त्वेन पक्षतावच्छेदकगतरूपवृत्तिविषयतानिरूपिततया तदवच्छिन्न-प्रतिबध्यतासत्त्वात् । न च शुद्धपर्वतत्वावच्छिन्नविषयतायाः रूपवृत्तिविषयताया अभिन्नतया रूपवृत्तिविशे-ष्यतानिरूपितत्वस्य वन्हिव्याप्यत्वावच्छिन्नप्रकारितायां सत्त्वेऽपि तादृशविषयताया रूपवृत्तित्रितयधर्मावच्छि-न्नविशेष्यतात्वेन वन्हिव्याप्यत्वावच्छिन्नप्रकारतात्वेन न निरूप्यनिरूपकभावः, अपि तु शुद्धपर्वतत्वावच्छिन्न-विशेष्यतात्वेन, एवं च पक्षतावच्छेदकगतरूपवृत्तिविशेष्यतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वा-

ध्यप्रकारित्वावच्छिन्नप्रतिबध्यतानिवेशेनैव तथातिव्याप्तिव्युदास इति वाच्यम् । तथासति तयोर्विषयतयोरभेदेन त्रितयधर्मावच्छिन्नविषयतायाः रूपवृत्तित्वसत्त्वेन शुद्धपर्वतत्वावच्छिन्नविषयताया अपि रूपवृत्तितया तादृशविषयतात्वावच्छिन्ननिरूपकतानिरूपितानिरूप्यतावद्वह्निव्याप्यत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतामादाय तद्दोषतादवस्थ्यात् । न च स्वनिरूपितावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन पक्षतावच्छेदकगतरूपवृत्तिनिरूपकतानिवेशस्यावश्यकतया शुद्धपर्वतत्वावच्छिन्नविषयतात्वावच्छिन्ननिरूपकतायाः तादृशसम्बन्धेन पक्षतावच्छेदकगतरूपवृत्तित्वविरहेण तयोर्विषयतयोरभेदेऽपि निरूपकताभेदान्न तथातिव्याप्तिरिति वाच्यम् । तथासति पक्षतावच्छेदकगतरूपवृत्तिनिरूपकतानिरूपितत्वस्य परंपरासाधारणस्य निवेशस्यावश्यकतया पक्षघटकवह्निव्याप्यत्वावच्छिन्नविषयतानिष्ठनिरूप्यतायामक्षतत्वेन पक्षतावच्छेदकगतरूपवृत्तिनिरूपकतानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारतात्वावच्छिन्ना या निरूप्यता तादृशनिरूप्यतानिरूपितत्रितयधर्मावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकतानिरूपितत्वात्तद्दोषतादवस्थ्यादिति, अन्यथा पर्वतो वह्निमान्नवेति संशयेऽसंभवापत्तेः, साध्यप्रकारतानिष्ठनिरूप्यतायां साक्षात्पक्षतावच्छेदकगतरूपवृत्तिनिरूपकतानिरूपितत्वविरहात् । न च तथापि वह्निव्याप्याभावकालीनपर्वतपक्षकवह्निव्याप्यसाध्यकस्थले तादृशपर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तिः, तादृशनिरूपकतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नप्रतिबध्यतासत्त्वादिति वाच्यम् । साध्याभावत्वावच्छिन्नप्रकारितायां साक्षात्पक्षतावच्छेदकगतरूपवृत्तिविशेष्यतानिरूपितत्वस्य अवच्छेदकतानात्मकत्वस्य वा निवेशेन सर्वसामञ्जस्यात् । साध्यविषयतायां साक्षात्पक्षतावच्छेदकगतरूपवृत्तिविशेष्यतानिरूपितत्वस्य अवच्छेदकतानात्मकत्वस्य वा निवेशाऽसम्भवः, पर्वतो वह्निमान्नवेतिसंशयीयवह्निप्रकारतायां साक्षात्पक्षविषयतानिरूपितत्वस्य अवच्छेदकतानात्मकत्वस्य वा विरहेणाऽसम्भवापत्तेः । न च धर्मितावच्छेदकतानात्मकत्वस्य साध्यविषयतायां निवेशनैव सर्वसामंजस्यमिति वाच्यम् । तथासति वह्निव्याप्याभावो वह्निव्याप्यनिष्ठाभावप्रतियोगी नवेति संशये धर्मितावच्छेदकतानात्मकसाध्यविषयित्वावच्छिन्नप्रतिबध्यतासत्त्वादतिव्याप्तेरिति । एतेन पूर्वकल्पेऽपि पक्षविषयिताबहिर्भूतत्वं परित्यज्य पक्षतावच्छेदकगतरूपवृत्तिविषयतानिरूपितसाध्यविषयताघटितधर्मावच्छिन्नप्रतिबध्यतानिवेशेनैव सामंजस्ये कल्पान्तरानुधावनं व्यर्थमिति परास्तम् ।

अथ पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकसाध्यप्रकारत्वावच्छिन्नत्वस्य पक्षविषयताबहिर्भूतसाध्यविषयत्वावच्छिन्नत्वपर्यवसितस्य प्रतिबध्यतायां निवेशे वह्निव्याप्यत्वावच्छिन्नप्रकारतायामनवच्छेदकत्वसत्त्वेनाऽतिव्याप्तिविरहात्किमन्यतरावच्छिन्नत्वघटितकल्पानुसरणेन । न च साध्यविशेष्यकसंशयवृत्तिप्रतिबध्यतायां निरुक्तप्रकारत्वावच्छिन्नत्वाभावेन तदसंभवाऽऽपत्तिरिति वाच्यम् । साध्यप्रकारतास्थाने साध्यविषयताया निवेशनीयत्वादिति चेन्न ।

अन्यतराभासमानविषयतयोरैक्यमते वह्निव्याप्यत्वप्रकारतानिरूपितवह्निव्याप्यनिष्ठविशेष्यतायाः अभावत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यत्वावच्छिन्नप्रकारतायाश्चाऽभेदेन वह्निव्याप्यत्वावच्छिन्नप्रकारतायामपि पक्षतावच्छेदकावच्छिन्नविशेष्यतात्वसत्त्वेन पक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वविरहेण वह्निव्याप्यपक्षकवह्निव्याप्यसाध्यकस्थले वह्निव्याप्यो वह्निव्याप्यवान्नवेति संशयेऽव्याप्तितादवस्थ्यात् । न च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वनिवेशे तत्र वह्निव्याप्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतायां मुख्यत्वविरहेण मुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वसत्त्वान्नाऽव्याप्तिरिति वाच्यम् । तथासति वह्न्यभावो वह्निव्याप्यनिष्ठाभावप्रतियोगी नवेति संशयेऽतिव्याप्तिः, तत्र वह्निव्याप्यत्वावच्छिन्नप्रकारतायास्तादृशभेदप्रतियोगितानवच्छेदकतया तद्घटितधर्मावच्छिन्नप्रतिबध्यतासत्त्वात् ।

न च तथापि साध्यविषयतायां पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविषयत्वानिरूपितप्रकारतात्वनिवेशाद्वह्न्यभावो वह्निव्याप्यनिष्ठाभावप्रतियोगी नवेति संशयीयवह्निव्याप्यत्वावच्छिन्नप्रकारतायाः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविषयत्वानिरूपितत्वतया तदन्यत्वविरहेण न तथातिव्याप्तिः, एवं

पूर्वकल्पेऽस्वरसं दर्शयति तेनेति । वस्तुतस्त्वित्यादिकल्पादरेणेत्यर्थः । अथ पक्षसाध्यभेदेन पक्षताभेदाद् व्याप्यसाध्यकस्थल एव पक्षविषयिताबहिर्भूतेत्यादिनिवेशाद् वह्निपक्षकवह्निसाध्यकस्थले पक्षविषयिताबहिर्भूतसाध्यविषयित्वाऽप्रसिद्ध्याऽव्याप्तिदानमसङ्गतमिति चेन्न ।

वह्निपदद्वयं वह्निव्याप्यपरम् एवं च वह्निसाध्यकस्थले तदनुपादानेनाऽव्याप्तिविरहेऽपि वह्निव्याप्यपक्षकवह्निसाध्यकस्थले वह्निव्याप्यो वह्निमान्नवेतिसंशयेऽतिव्याप्त्या पक्षविषयिताबहिर्भूतेत्यादिनिवेशस्यावश्यकतया तत्रैव वह्निव्याप्यो वह्निव्याप्यवान्नवेतिसंशयेऽव्याप्तिः, पक्षविषयिताबहिर्भूतसाध्यविषयित्वाऽप्रसिद्धेरिति भावः । न च सिद्धान्तेऽपि तद्दोषः । दलोत्तरत्वादिति ।

न चैवमपि पर्वतो वह्निमानित्यनुमितौ पर्वतधर्मिकवह्निमद्भेदकोटिकसंशयस्याऽसंग्रहः, तदीयप्रतिबध्यतायां निरुक्तान्यतरविषयित्वावच्छिन्नत्वविरहात्, एवं वह्न्यभावः पर्वते न वेति संशयस्याऽसङ्ग्रहः तत्प्रतिबध्यतायाः साध्याभावप्रकारित्वानवच्छिन्नत्वात्, एवं वह्निव्याप्यो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्यो वह्निमान्नवेतिसंशयस्य पक्षतात्वप्रसङ्गः तत्प्रतिबध्यतायाः साध्यविशेष्यकत्वावच्छिन्नत्वादिति वाच्यम् । पक्षधर्मिकसाध्यवत्ताज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्ना या साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यता तच्छालित्वे सति साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वमेव पक्षतात्वम् । पर्वतो वह्न्यभाववानित्यनुमितौ पर्वतो वह्निव्याप्यवान्नवेतिसंशयस्य पक्षतात्वव्युदासाय साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वं प्रतिबध्यताविशेषणम्, बाधनिश्चयस्य पक्षतात्वव्युदासाय शून्यान्तम्, तथाच पर्वतो वह्निमानित्यनुमितौ वह्निमद्भेदकोटिकसंशयस्य नासंग्रहः, तदीयप्रतिबध्यतायाः

---

वह्निव्याप्यपक्षकवह्निव्याप्यसाध्यकस्थले वह्निव्याप्यवान्नवेतिसंशयेऽपि नाऽव्याप्तिः, तत्र प्रतिबध्यताद्विविधा—वह्निव्याप्याभावप्रकारतानिरूपितवह्निव्याप्यत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना—अपराऽऽधेयत्वसंबन्धावच्छिन्नवह्निव्याप्यविषयतानिरूपितवह्निव्याप्याभावत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना, तथा चतादृशप्रतिबध्यतायां पक्षविषयतानिरूपितविषयत्वानिरूपितप्रकारतान्यसाध्यविषयत्वावच्छिन्नत्वसत्त्वादिति वाच्यम्, तथासति वह्निव्याप्याभावः आधेयतासम्बन्धेन वह्निव्याप्यवान्नवेति संशयेऽतिव्याप्तिः, वह्निव्याप्यः आधेयतासम्बन्धेन वह्निव्याप्याभाववानितिज्ञानीयाऽऽधेयत्वसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नप्रकारतायास्तदन्यतया तदवच्छिन्नप्रतिबध्यतावत्त्वस्य तत्र सत्त्वात्, तज्ज्ञानयोरेकरूपेण प्रतिबध्यत्वादिति । एकरूपं व्याप्यविषयतानिरूपिताऽभावविषयतानिरूपितव्याप्यत्वावच्छिन्नविषयताशालिबुद्धित्वमिति ।

अथ पक्षतावच्छेदकावच्छिन्नविशेष्यतावच्छिन्नावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितप्रकारतात्वावच्छिन्नावच्छेदकतानिरूपितसाध्यविषयत्वनिष्ठावच्छेदकतानिरूपितत्वस्य पक्षतावच्छेदकगतरूपवृत्तिविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकसाध्यविषयत्वावच्छिन्नत्वे सति पक्षतावच्छेदकगतरूपवृत्तिप्रकारत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकसाध्यविषयत्वावच्छिन्नत्वस्य वा प्रतिबध्यतायां निवेशेनैव सर्वदोषवारणसम्भवेऽलं वस्तुतस्त्वित्यादिकल्पानुधावनेनेति चेन्न ।

तथासति वस्तुतस्त्वित्यादिकल्पापेक्षया एतत्कल्पे लाघवानवकाशात् ।

केचित्तु वस्तुतस्तु पाठः प्रामादिक इत्याहुः । वस्तुतः एतत्कल्पे एवंविधनिवेशेन निर्वाहेऽपि अतीव गुरुत्वापत्तेः, वस्तुतस्तुकल्पेऽन्यतरत्वस्याऽखण्डोपाधिरूपतया लघुत्वादिति ध्येयम् ।

न चैवं ह्रदादौ वह्न्यभाववत्त्वाऽनुमाने ह्रदो वह्निमान्नवेति संशयः पक्षता न स्यात्, तन्निष्ठायाः साध्यवत्तानिश्चयप्रतिबध्यतायाः वह्निमत्त्वाविषयकत्वेनैवावच्छेद्यतया साध्याभावत्वावच्छिन्नप्रकारित्वानवच्छेद्यत्वादिति वाच्यम्। इष्टत्वात्, ह्रदो वह्न्यभाववान्नवेत्याकारकसंशयस्यैव पक्षतात्वात्।

साध्यपक्षभेदेन पक्षताया नानात्वात्साध्यवत्तासाध्यकपक्षतालक्षणे एव साध्यविषयित्वघटितधर्मावच्छिन्नप्रतिबध्यतायाः प्रवेश्यत्वादिति वदन्ति।

---

पर्वतधर्मिकवह्निमत्ताग्रहप्रतिबन्धकतावच्छेदकीभूता या पर्वतो वह्निमान्नेतिनिश्चयीयप्रकारिता तयैवावच्छिन्नत्वात्। पक्षधर्मिकसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकत्वं बाधनिश्चयीयप्रकारितायां प्रसिद्धीकृत्य तदवच्छिन्नत्वस्य संशयीयप्रतिबध्यतायां सत्त्वाल्लक्षणसमन्वय इति। एवं वह्निव्याप्यो वह्निव्याप्यवानित्यनुमितौ वह्निव्याप्यो वह्निमान्नवेतिसंशयस्य न पक्षतात्वं, तदीयप्रतिबध्यतायां वह्निव्याप्यधर्मिकवह्निव्याप्यवत्ताग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नत्वविरहादिति। एवं च पर्वतो वह्निमानित्यनुमितौ पर्वतो वह्निमान्नवा, वह्निः पर्वते न वा, वह्न्यभावः पर्वते न वा, वह्निः पर्वतनिष्ठाभावप्रतियोगी न वा, वह्नित्वं पर्वतनिष्ठाभावप्रतियोगितावच्छेदकं न वा, वह्नित्वावच्छिन्नप्रतियोगित्वं पर्वतनिष्ठाभावीयं न वा, पर्वतवृत्त्यभावः वह्नित्वावच्छिन्नप्रतियोगिताको नवेत्यादीनां सर्वेषामेव संशयानां सङ्ग्रहः। न च पर्वतो महानसीयवह्निमानित्यनुमितौ पर्वतो वह्निमान्नवेतिसंशयस्य पक्षतात्वापत्तिः, तदीयप्रतिबध्यतायाः पर्वतधर्मिकमहानसीयवह्निमत्ताज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारित्वावच्छिन्नत्वात्, पक्षधर्मिकसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकीभूतसाध्यतावच्छेदकपर्याप्तावच्छेदकताकविषयित्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेन तद्वारणेऽपि महानसीयवह्निर्वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिर्दुर्वारा, तदीयप्रतिबध्यतायाः तादृशप्रतिबन्धकतावच्छेदकीभूतमहानसीयत्ववह्नित्वोभयपर्याप्तावच्छेदकताकविषयित्वावच्छिन्नत्वादिति वाच्यम्। पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्यतावच्छेदकपर्याप्तावच्छेदकताकविषयत्वावच्छिन्ना या साध्यवत्तानिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यता तच्छालिसंशयः पक्षता इत्यभिप्रायेण 'वस्तुतस्तु' कल्पानुसरणम्। निरूपितत्वं साक्षात्परम्परासाधारणं वाच्यम्, एवं च न कश्चिद्दोष इति ध्येयम्।

एवं--उक्ताऽन्यतराऽवच्छिन्नत्वनिवेशे। ह्रदो वह्निमान्नवेतिसंशयस्य पक्षतात्वे त्वाह साध्यपक्षभेदेनेति। साध्यविषयित्वघटितधर्मावच्छिन्नेति। इदमुपलक्षणम्, उक्ताऽन्यतराऽवच्छिन्नेत्यपि बोध्यम्।

अथ व्याप्यभिन्नसाध्यकस्थले तदप्रवेशे पर्वतपक्षकवह्निव्यापकाभावसाध्यकस्थले पर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिः तस्याऽपि साध्यवत्तानिश्चयनिवर्त्यत्वात्, यदि च तत्राऽपि तादृशान्यतरावच्छिन्नत्वं निवेश्य नातिव्याप्तिरित्युच्यते, तदा तत्रैव वह्निव्यापकवान्नवेति संशयेऽव्याप्तिः, तत्प्रतिबध्यतायां तादृशान्यतराऽवच्छिन्नत्वविरहात्, एवं ह्रदो वह्न्यभाववानित्यनुमितौ ह्रदो महानसीयवह्निमान्नवेति संशयस्य पक्षतात्वापत्तिः, तस्यापि साध्यवत्तानिश्चयप्रतिबध्यत्वादिति चेन्न।

व्याप्यसाध्यकस्थले तदतिरिक्तस्थले चैकरूपेणैव साध्याभावत्वावच्छिन्नप्रकारताविशिष्ट-
प्रकारत्वावच्छिन्नत्वस्य निवेशात् । वै० स्वाऽभिन्नविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धा-
वच्छिन्नप्रकारतावच्छेदकधर्मावच्छिन्नत्व स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगित्वसम्बन्धाव-
च्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्यत्वाभिन्नत्वैतदन्यतरसम्बन्धेन, तादृशप्र-
कारतावच्छेदकधर्मावच्छिन्नत्वं च तादृशप्रकारतावच्छेदकधर्मपर्याप्तावच्छेदकताकत्वम् , तेन
महानसीयवह्नित्वावच्छिन्नप्रकारताया व्युदासः । एवं च स्वाभिन्नविशेष्यतानिरूपितकिञ्चित्स
म्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावत्त्वमेवाऽन्यतरघटकप्रथमसम्बन्धः फल-
तः । प्रकारतावत्त्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप-
वृत्तित्व स्वनिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नाव-
च्छेदकतावत्संसर्गावच्छिन्नत्वोभयसम्बन्धेन, रूपवृत्तित्वं च प्रकारतायां स्वावच्छेदकतात्वाव-
च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथा च वह्निव्यापकाभावानुमितौ
पर्वतो वह्निमान्नवेति संशयीयप्रतिबध्यतायां तादृशाऽन्यतराऽवच्छिन्नत्वविरहान्नातिव्याप्तिः,
एवं ह्रदे वह्न्यभावस्यानुमाने ह्रदो वह्निमान्नवेति संशयस्य पक्षतात्वोपपत्तिः, तदीयप्रतिब-
ध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रकारतायां वह्न्यभावत्वावच्छिन्नप्रकारत्वावच्छेद्यप्रतियोगि-
त्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतधर्ममात्रावच्छिन्नत्वसत्त्वेन तादृशसम्बन्धेन वह्न्यभाव-
प्रकारताविशिष्टतया तादृशप्रतिबध्यतायां वह्न्यभावत्वावच्छिन्नप्रकारताविशिष्टप्रकारत्वावच्छि-
न्नत्वसत्त्वात् , पर्याप्तिनिवेशाद् ह्रदो वह्न्यभाववानित्यत्र ह्रदो महानसीयवह्निमान्नवेति संशये
नातिव्याप्तिः, महानसीयवह्नित्वावच्छिन्नप्रकारतायां वह्नित्वमात्रावच्छिन्नत्वविरहेण तद्घटित
वह्न्यभावत्वावच्छिन्नप्रकारताविशिष्टत्वविरहादिति(१) ।

---

(१) केचित्तु पर्वते वह्निव्यापकाभावसाध्यकस्थले पर्वतो वह्निमान्नवेति संशयेऽतिव्याप्तिवारणाय पक्ष
धर्मिकसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताविशिष्टप्रतिबध्यताशालिसंशय एव पक्षता । वै० स्वनिरूपि
तत्व स्वावच्छेदकीभूतप्रकारतावच्छेदकधर्मावच्छिन्नविषयत्वावच्छिन्नत्वोभयसम्बन्धेन, उक्तस्थले च पर्व-
तो वह्निमान्नवेति संशयीयप्रतिबध्यतायां पर्वतो वह्निव्यापकाभाववानिति निश्चयत्वावच्छिन्नप्रतिबन्धकतावि-
शिष्टत्वविरहान्नातिव्याप्तिः । न च तथापि वह्निव्यापकवद्वह्निमत्कालीनपर्वतपक्षकवह्निव्यापकाभावसाध्यक
स्थले तादृशपर्वतो वह्निमान्नवेतिसंशयस्य पक्षतात्वापत्तिः, तदीयप्रतिबध्यतायां साध्यवत्तानिश्चयत्वावच्छिन्न
प्रतिबन्धकताविशिष्टत्वसत्त्वात् , स्वावच्छेदकीभूतप्रकारतावच्छेदकधर्मावच्छिन्नविषयत्वावच्छिन्नप्रतिबध्यता-
निरूपिता या वह्निमान् वह्निव्यापकवान् वह्निमान् तादृशपर्वत इति निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्ध
कता तदवच्छेदकीभूतवह्नित्वावच्छिन्नप्रकारतावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितत्वोभयोः सत्त्वादिति वाच्यम् ।
साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताविशिष्टप्रतिबध्यतानिवेशात् । वै० स्वनिरूपितत्व स्ववृत्तित्वोभयस-
म्बन्धेन, स्ववृत्तित्वं च स्वावच्छेदकीभूतप्रकारतावच्छेदकधर्मावच्छिन्नव्यापकप्रतियोगिताकाभावत्वावच्छिन्न-
प्रकारतानवच्छिन्नत्वसम्बन्धेन, एवं च वह्निमान्नवेति संशयनिष्ठप्रतिबध्यतानिरूपितवह्निव्यापकाभावनिश्चय-
त्वावच्छिन्नप्रतिबन्धकतायां तादृशप्रतिबध्यतावच्छेदकीभूतप्रकारतावच्छेदकवह्नित्वावच्छिन्नवह्निव्यापकप्रतियो-
गिताकाभावत्वावच्छिन्नप्रकारतानवच्छिन्नत्वविरहेण स्ववृत्तित्वघटितोभयसम्बन्धेन प्रतिबध्यतायां वह्निव्या-
पकाभाववत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताविशिष्ट्यविरहादेव तत्राऽतिव्याप्तिवारणसम्भवात्तदनुरोधेन तत्सा-
ध्यकस्थले तादृशनिवेशप्रयोजनविरहेण वह्निव्यापकवान्नवेति संशयेऽव्याप्तिविरहात् । न चैवं
वह्निर्वह्निव्यापकवान्नवेतिसंशयेऽव्याप्तिः, तन्निष्ठप्रतिबध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रकारतावच्छेदकधर्मा-
वच्छिन्न[illegible]भावत्वावच्छिन्नप्रकारतानवच्छिन्नत्वस्य वह्निव्यापकाभाववत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतायां

अत्र हृदपक्षकवह्न्यभावसाध्यकस्थले वह्निमान्नवेतिसंशयेऽव्याप्तिवारणायाऽनुगतलक्षणस्या

---

बन्धकताया विरहादिति वाच्यम् । तथा सति स्वावच्छेदकीभूतप्रकारताया मुख्यविशेष्यतानिरूपितत्वनिवेशात्, मुख्यविशेष्यतानिरूपितस्वावच्छेदकीभूतवह्निव्यापकत्वावच्छिन्नप्रकारतावच्छेदकवह्निव्यापकत्वावच्छिन्नव्यापकप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानवच्छिन्नत्वस्य वह्निव्यापकाभाववत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतायामसत्त्वात् ।

न चैतादृशरीत्या वह्निमान्नवेतिसंशयेऽतिव्याप्तिवारणेऽपि वह्निः पर्वते न वेति आधेयतासम्बन्धेन पर्वतप्रकारकसंशयेऽतिव्याप्तिः, एतादृशप्रतिबध्यतावच्छेदकीभूतपर्वतप्रकारतावच्छेदकपर्वतत्वावच्छिन्नव्यापकाभावत्वावच्छिन्नप्रकारत्वानवच्छिन्नत्वस्य तादृशप्रतिबन्धकतायामक्षतत्वात्, सामान्यतः स्वावच्छेदकीभूतविषयतानवच्छेदक धर्मावच्छिन्नव्यापकप्रतियोगिताकाभावत्वावच्छिन्नप्रकारत्वानवच्छिन्नत्वनिवेशे तद्दोषवारणेऽपि स्वावच्छेदकीभूतवह्नित्वावच्छिन्नव्यापकाभावत्वावच्छिन्नप्रकारत्वानवच्छेद्यत्वस्य तादृशप्रतिबन्धकताया विरहादिति वाच्यम् । तथासति स्वावच्छेदकीभूतविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतविषयत्वावच्छिन्नत्वसम्बन्धेन स्ववृत्तित्वनिवेशाद्वह्निमान्नवेति संशयनिष्ठप्रतिबध्यतावच्छेदकीभूतविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतवन्ह्यभावत्वावच्छिन्नविषयत्वावच्छिन्नत्वस्य वह्निव्यापकाभाववत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतायां विरहेणातिव्याप्तिविरहात् । साध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वस्य स्वतन्त्रनिवेशे प्रयोजनविरहेण वह्निव्यापकवान्नवेति संशयेऽव्याप्तिविरहादिति ।

केचित्तु स्ववृत्तित्व स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयत्वावच्छिन्नत्वसम्बन्धेन, स्ववै० स्वाश्रयत्व—स्वावच्छेदकीभूतमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वोभयसम्बन्धेन, एवं चोक्तनिश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां स्वविशिष्टनिश्चयत्वव्यापकत्वविरहात्, स्वविशिष्टनिश्चयान्तर्गते वह्निमति वह्निव्यापकोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानास्कन्दितवह्निव्यापकवह्निमत्कालीनपर्वतो वह्निमानितिनिश्चये तादृशप्रतिबन्धकतावान्नेति भेदसत्त्वेन तादृशप्रतियोगितानवच्छेदकत्वविरहात्, तत्प्रतिबन्धकतावच्छेदककोटौ अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वात्, तथाचोक्तसंशयीयप्रतिबध्यतायां तेन सम्बन्धेन स्ववृत्तित्वविरहेणोक्तसम्बन्धेन प्रतिबन्धकताविशिष्टत्वविरहान्नातिव्याप्तिरित्याहुः ।

यद्वा वह्निव्यापकवह्निमत्कालीनपर्वतो वह्निमान्नवेतिसंशयादावुक्तस्थलेऽतिव्याप्तिवारणाय पक्षे साध्यप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यताविशिष्टप्रतिबध्यताशालिसंशयः पक्षता । वै० स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितत्व–स्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितत्वसम्बन्धेन, उभयत्र वै० स्वाश्रयत्व–स्वावच्छेदकीभूतमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकीभूतधर्मावच्छिन्नधर्मिकाव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वोभयसम्बन्धेन । तथाचोक्तसंशयीयप्रतिबध्यतायां स्ववृत्तित्वसम्बन्धेन पक्षे साध्यप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यताविशिष्टत्वविरहान्नातिव्याप्तिः । न चाथोक्तसम्बन्धेन स्ववृत्तित्वनिवेशेनैवोक्तदोषवारणसम्भवे स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितत्वरूपप्रथमसम्बन्धानिवेशो व्यर्थ इति वाच्यम् । पर्वतो वह्निमानित्यादौ पर्वतो वन्ह्यभाववान्नवेतिसंशयस्य पक्षतात्वापत्तेः, तदीयप्रतिबध्यतायां पक्षे साध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यताविशिष्टत्वस्य स्ववृत्तित्वसम्बन्धेन सत्त्वात् । न च स्वावच्छेदकीभूतप्रकारतावच्छेदकधर्मावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वसम्बन्धेन प्रतिबध्यतानिवेशेनैवोपपत्तिरिति वाच्यम् । वन्ह्यभावव्याप्याभाववद्वह्निमत्कालीनपर्वतो वह्निमानित्यादौ तादृशपर्वतो वन्ह्यभावव्याप्यवान्नवेतिसंशयेऽतिव्याप्त्यापत्तेः तत्प्रतिबन्धकतायां पक्षे साध्यवत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतावच्छेदकप्रकारतावच्छेदकवह्नित्वावच्छिन्नविषयत्वावच्छिन्नवह्निमान् वन्ह्यभावव्याप्याभाववान् वह्निमान् तादृशपर्वत इति निश्चयविशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वसत्त्वेन तेन सम्बन्धेन तादृशप्रतिबध्यताविशिष्टत्वसत्त्वादतः स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितत्वनिवेशः । एवं च तादृशनिश्चयत्वव्यापिका न ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता तादृशनिश्चयत्वस्य वह्निमति वन्ह्यभावव्याप्याभावोऽव्याप्यवृत्तिरित्यव्याप्यवृत्तित्वज्ञानास्कन्दितत्वेऽपि सत्त्वेन तत्र तादृशप्रतिबध्य-

ऽऽवश्यकतया पक्षसाध्यभेदेन पक्षताया नानात्वाभिधानमसङ्गतमित्यस्वरसो वदन्तीत्युक्त्या सूचितः ।

---

ताया असत्त्वात्, तादृशी च विशिष्टनिश्चयत्वावच्छिन्नप्रतिबन्धकतैव तन्निरूपितत्वस्य तदंशग्राहीयप्रतिबध्यतायां विरहान्नातिव्याप्तिरिति ।

एतेन वन्हिव्याप्यसाध्यकस्थले वन्हिमानवेतिसंशयेऽतिव्याप्तेः लक्षणे सत्प्रतिपक्षप्रतिबन्धकतातिरिक्तप्रतिबन्धकतानिवेशाद्वारणसंभवे व्याप्यसाध्यकस्थलीयलक्षणे साध्यविशेष्यकत्वसाध्याभावत्वावच्छिन्नप्रकारित्वान्यतरावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशो निरर्थकः, तथाहि–साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टप्रतिबन्धकतानिरूपितप्रतिबध्यतेत्यादिनिवेशः, प्रतिबन्धकतायां वै० स्वनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताश्रालिनिश्चयत्वावच्छिन्नत्वस्वावच्छेदकीभूतधर्मावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभावावच्छिन्नत्वोभयसम्बन्धेन, एवं च वन्ह्यभाववत्ताबुद्धिं प्रति वन्हिव्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतायां वन्ह्यंशेऽव्याप्यवृत्तित्वज्ञानमेवोत्तेजकमिति वन्ह्यभाववत्ताबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितवन्हिव्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतायां साध्यतावच्छेदकावच्छिन्नवैशिष्ट्यविरहात्, स्वावच्छेदकीभूतवन्हिव्याप्यत्वावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभावानवच्छेद्यत्वात् । न च वन्हित्वस्यापि स्वावच्छेदकतया तदवच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभावावच्छिन्नतया तत्प्रतिबन्धकतानिरूपितप्रतिबध्यतामादाय तद्दोषतादवस्थ्यमिति वाच्यम् । स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविशेष्यतानिरूपितप्रकारताकाव्याप्यवृत्तित्वज्ञानाभावावच्छिन्नत्वनिवेशाद्वन्हित्वावच्छिन्नविशेष्यताकाव्याप्यवृत्तित्वज्ञानस्य तादृशत्वाभावात् । न च निरवच्छिन्नसंयोगेन वन्हेर्यत्र साध्यता तत्र तादृशसम्बन्धेन वन्हिमत्त्वनिश्चयत्वावच्छिन्नप्रतिबन्धकतायां वन्हिरव्याप्यवृत्तिरित्याकारकज्ञानस्यानुत्तेजकतया तादृशप्रतिबन्धकतायां वन्हित्वावच्छिन्नधर्मिकाऽव्याप्यवृत्तित्वज्ञानाभावावच्छिन्नत्वविरहात् निरवच्छिन्नसंयोगेन वन्हिमानवेति संशयेऽव्याप्तिरिति वाच्यम् । तादृशाव्याप्यवृत्तित्वज्ञानाभावान्याऽव्याप्यवृत्तित्वज्ञानाभावानवच्छिन्नत्वनिवेशात् । तादृशप्रतिबन्धकतायां वन्हिधर्मिकाव्याप्यवृत्तित्वज्ञानाभावावच्छिन्नत्वविरहेऽपि तदन्याव्याप्यवृत्तित्वज्ञानाभावानवच्छिन्नत्वान्न कोपि दोष इत्यपि निरस्तम् । वन्हिव्यापकाभाववत्तानिश्चयत्वावच्छिन्नवन्हिमत्ताबुद्धिप्रतिबन्धकतायां वन्हिव्यापकाभावांशेऽव्याप्यवृत्तित्वज्ञानस्य तादृशत्वात् पूर्वकल्पे वन्हिव्यापकाभावस्थले वन्हिमान्नवेतिसंशयेऽतिव्याप्त्या प्रतिबन्धकताविशिष्टप्रतिबध्यतानिवेशस्यावश्यकतया स्वतन्त्रसाध्यविशेष्यकत्वसाध्याभावत्वावच्छिन्नप्रकारित्वान्यतरावच्छिन्नत्वनिवेशे प्रयोजनविरहात्, परकल्पेऽपि वन्हिव्यापकाभावसाध्यकस्थलीयलक्षणे वन्हिमान्नवेति संशयेऽतिव्याप्त्या प्रतिबन्धकताविशिष्टप्रतिबध्यतानिवेशस्यावश्यकतया व्याप्यसाधकस्थलीयपक्षतालक्षणेऽपि प्रतिबन्धकताविशिष्टप्रतिबध्यतानिवेशात् वन्हिमान्नवेतिसंशयेऽतिव्याप्तिवारणस्य कर्तुं शक्यतया स्वतन्त्रसाध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वनिवेशे प्रयोजनविरहादिति ।

अथ वन्ह्यभावसाध्यस्थलीयपक्षतालक्षणे साध्याभावत्वावच्छिन्नप्रकारित्वावच्छिन्नत्वाऽनिवेशे तत्र महानसीयवन्हिमान्नवेतिसंशयेऽतिव्याप्तिः, साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतासत्त्वादिति चेन्न ।

प्रतिबध्यताविशिष्टविशेष्यताशालिसंशयस्योक्तत्वात् । वै० स्वावच्छेदकत्व स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन, अवच्छेदकतावत्ता च स्वाश्रयीभूतप्रकारतावृत्तित्वानवच्छेदकीभूतावच्छिन्नत्वनिरूपकधर्मावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितत्वसम्बन्धेन, एवं च महानसीयवन्हिमत्ताबुद्धेर्वन्हित्वावच्छिन्नप्रकारताशालिबुद्धित्वेन प्रतिबध्यतया स्वनिरूपितवन्हित्वावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतावत्त्वस्य स्वाश्रयीभूतमहानसीयत्ववन्हित्वोभयधर्मावच्छिन्नप्रकारतावृत्तितादृशावच्छेदकतानवच्छेदकीभूतमहानसीयत्वावच्छिन्नत्वनिरूपकमहानसीयत्वावच्छिन्नप्रतियोगिताकमहानसीयवन्ह्यभावप्रकारतानिरूपितत्वसम्बन्धेन पक्षविशेष्यतायां सत्त्वेन तादृशावच्छेदकतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वविरहात्प्रतिबध्यताविशिष्टविशेष्यताशालिज्ञानत्वविरहेण निरुक्तसंशयेऽतिव्याप्तिविरहात । न च पर्वतो वन्हिमानित्यादौ वन्ह्यात्मकवन्ह्यभाववगाहिसंशयेऽव्याप्तिः, वन्ह्य-

भावत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितवन्ह्यभावत्वावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतावत्त्वस्य स्वाश्रयीभूतवन्हित्ववन्ह्यभावत्वोभयधर्मावच्छिन्नप्रकारतावृत्तितादृशावच्छेदकतानवच्छेदकीभूतवन्हित्वावच्छिन्ननिरूपकवन्हित्वावच्छिन्नाभाववत्त्वावच्छिन्नप्रकारतानिरूपितत्वसम्बन्धेन पक्षविशेष्यतायां सत्त्वेन स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वविरहेण प्रतिबध्यताविशिष्टविशेष्यताशालिज्ञानत्वविरहादिति वाच्यम् । तथासति स्वनिरूपितप्रकारतात्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताऽभाववद्धर्मावच्छिन्नप्रकारतानिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्व—स्वावच्छेदकत्वोभयसम्बन्धेन प्रतिबध्यताविशिष्टविशेष्यतानिवेशात् । प्रतियोगितासम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतायाः स्वनिरूपिततया तन्निरूपितप्रकारतात्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावस्य वन्हित्वे विरहेण वन्हिसाध्यकस्थले वन्हिमान्नवेति संशयेऽतिव्याप्तिविरहात् । वन्ह्यभाववत्तानिश्चयं प्रति महानसीयवन्हिमत्त्वबुद्धेस्तु वन्हित्वावच्छिन्नप्रकारताशालिबुद्धित्वेन प्रतिबध्यतया महानसीयत्वे तादृशनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावसत्त्वात् तद्धर्मावच्छिन्नाभावप्रकारतानिरूपितत्वस्य पक्षविशेष्यतायां सत्त्वेन तादृशसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वविरहेण वन्ह्यभावसाध्यकस्थले महानसीयवन्हिमान्नवेति संशयेऽतिव्याप्तिविरहात् ।

अथैवमपि पर्वतो वन्हिमानित्यादौ घटात्मकवन्ह्यभावावगाहिसंशयस्यापि वन्ह्यभावत्वावच्छिन्नविषयताशालिज्ञानप्रतिबध्यतयाऽतिव्याप्तिः, प्रतिबध्यतावच्छेदकीभूतपक्षविषयतायां तादृशनिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववद्घटत्वावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितत्वविरहेण प्रतिबध्यतानिष्ठावच्छेदकताकभेदवत्त्वसत्त्वादिति चेन्न ।

स्वावच्छेदकत्व-स्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन प्रतिबध्यतावैशिष्ट्यस्य पक्षविषयतायां निवेशात् । प्रकारतायां प्रतिबध्यतावैशिष्ट्यं च स्वावच्छेदकत्व-स्वानवच्छेदकीभूतावच्छिन्नत्वशून्यत्वोभयसम्बन्धेन, एवं च पक्षविशेष्यतानिरूपितवन्ह्यभावत्वघटत्वोभयधर्मावच्छिन्नप्रकारतायां प्रतिबध्यतानवच्छेदकीभूतघटत्वावच्छिन्नत्वसत्त्वेन तच्छून्यत्वविरहान्नातिव्याप्तिः । न च घटकालीनवन्ह्यभावावगाहिसंशयेऽव्याप्तिरिति वाच्यम् । इष्टत्वात्, घटात्मकवन्ह्यभावावगाहिसंशयसमशीलतया तस्याप्यलक्ष्यत्वादिति ।

वस्तुतस्तु पक्षधर्मिकसाध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताविशिष्टा या विषयताविशिष्टविषयता तद्वज्ज्ञानत्वं पक्षतात्वम्, वै० स्वनिरूपितत्वस्वविशिष्टविषयतानिरूपितत्वोभयसम्बन्धेन, वै० स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकधर्ममात्रावच्छिन्नत्वत्व—स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावत्वावच्छिन्नत्वान्यतरसम्बन्धेन, तथा च घटात्मकवन्हिमान् वन्ह्यभाववान्वेति संशयीयपर्वतत्वावच्छिन्नविशेष्यतायां न विषयताविशिष्टत्वमतो न तत्रातिव्याप्तिरिति ।

केचित्तु पर्वतपक्षकवन्हिव्यापकाभावस्थलानुरोधेन पर्वतपक्षकवन्ह्यभावसाध्यकस्थलानुरोधेन घटात्मकवन्हिमान् वन्ह्यभाववान्वेति संशयेऽतिव्याप्तिवारणाय एकमेवान्यतरावच्छिन्नत्वं सर्वत्र निवेशनीयम् । तत्र पक्षे साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावृत्ति यत्साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नप्रकारतानिरूपितप्रकारिताविशिष्टसाध्याभावत्वावच्छिन्नप्रकारित्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारिताविशिष्टप्रकारत्वसाध्यविशेष्यकत्वान्यतमम्ः तन्निरूपकत्वं संशये विशेषणीयम् । वै० अवच्छेद्यत्वसम्बन्धेन । द्वितीयवै० स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतधर्ममात्रावच्छिन्नत्वसम्बन्धेन । प्रतिबध्यतावृत्तित्वं च स्वावच्छिन्नत्वसम्बन्धेन, तथा च न काप्यनुपपत्तिः । न च संशयपदं व्यर्थम्, बाधनिश्चयनिष्ठप्रतिबध्यतावृत्तित्वस्य तादृशान्यतमे विरहादिति वाच्यम् । पर्वतो वन्ह्यभाववानित्यादौ पर्वतो वन्हिमानितिबाधनिश्चयादावतिव्याप्तेः, तदीयप्रतिबध्यतावृत्तित्वस्य तादृशान्यतमघटकवन्ह्यभावत्वावच्छिन्नप्रकारताविशिष्टवन्ह्यभावत्वावच्छिन्नप्रकारतायां सत्त्वात्, स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नत्वादिसम्बन्धेन प्रकारताविशिष्टत्वस्यापि सत्त्वादतः संशयपदमित्याहुः ।

केचित्तु संशयत्वमत्र प्रकृतपक्षविषयतानिरूपितप्रकृतसाध्यनिष्ठविषयताकत्वम्, अतो वह्निव्याप्यसाध्यकानुमितौ वह्निमत्त्वसंशयस्य निर्वह्नित्वसाध्यकानुमितौ महानसीयवह्निमत्त्वसंशयस्य च न पक्षतात्वम्, तस्य तादृशसाध्यपक्षोभयवैशिष्ट्यावगाहित्वाभावात्, एवं च पक्षधर्मिकसाध्यवत्तानिश्चयस्यापि तादृशत्वात्तद्वारणाय निवर्त्यान्तमित्याहुः। तन्न, साध्यं पक्षवृत्ति न वा साध्यं पक्षनिष्ठाभावप्रतियोगि नवेत्यादिसन्देहस्यापि लक्ष्यतया तत्राव्याप्तत्वात् तेषां पक्षसाध्योभयवैशिष्ट्यानवगाहित्वात्, पर्वतो वह्निव्याप्यवानित्येवं साध्यनिश्चयनिवर्तनीयस्य पर्वतो निर्वह्निः वह्निव्याप्यस्तु पर्वतवान्नवेति समूहालम्बनस्य वह्निव्याप्यसाध्यकानुमितौ पक्षतात्वप्रसङ्गाच्च, तस्यापि वह्निव्याप्यात्मकसाध्यपक्षोभयवैशिष्ट्यावगाहित्वात्। आधेयत्वसम्बन्धावच्छिन्नसाध्यविषयतायाः प्रवेशे तु पक्षः साध्यवान्नवेत्यादिसंशयस्याऽसंग्रहापत्तेरिति दिक्।

---

केचित्त्विति। अत्र साक्षात्परम्परासाधारणनिरूपितत्वप्रवेशे उक्तानुपपत्त्यभावादापत्तिमाह पर्वतो वह्निव्याप्यवानित्येवमिति। अत्र कृष्णम्भट्टाः—साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नप्रकारतान्यत्वं पक्षविषयतायां देयम्, तेन वह्न्यभाववत्पर्वतवान् वह्निरिति बाधव्युदासः। एवं साध्यविषयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारतान्यत्वं देयम्, तेन पर्वतो वह्न्यभाववानिति बाधव्युदासः। न चैवं साध्यं पक्षवृत्ति न वेति संशयाऽसङ्ग्रहः, पक्षविषयतायां तथाविधप्रकारतान्यत्वाभावादिति वाच्यम्। तथाविधसाध्यविषयतानिरूपितविषयतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नविषयत्वानिरूपितप्रकारतान्यपक्षविषयताकत्वमर्थः। उक्तसंशये तादृशाधेयतात्वावच्छिन्नविषयता प्रकारतारूपा साध्यं पक्षे न वेत्यादौ च संसर्गतारूपेति भेद इति प्राहुः। प्रवेशे त्विति। अत्र आधेयतासम्बन्धावच्छिन्नपक्षविषयतायाः प्रवेशे तु इत्येव सम्यक् पाठः। तथासति वह्निः पर्वते नवेति संशयसङ्ग्रहात् पक्षः सा(१)ध्यवान्नवेति संशयस्याऽसङ्ग्रहरूपदोषदानं समीचीनं स्यात्, 'आधेयतासम्बन्धावच्छिन्नसाध्यविषयतायाः' इति पाठे तु संशयमात्रस्याऽसंग्रहापत्तेः। केचित्तु संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतो

---

केचित्तु संशयसमुच्चययोर्वैलक्षण्याय संशयीयप्रकारतयोरवच्छेद्यावच्छेदकभावस्य स्वीकरणीयतया प्रतिबध्यतायां विलक्षणान्यतरावच्छिन्नत्वनिवेशेनैवातिव्याप्तिवारणात्। तत्र पक्षे साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावृत्ति यत् साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टसाध्याभावत्वावच्छिन्नप्रकारत्वसाध्यविशेष्यत्वान्यतरत् तन्निरूपकसंशयत्वं पक्षतात्वम्, वै० स्वावच्छेद्यत्वसम्बन्धेन। तादृशान्यतरस्मिन् प्रतिबध्यतावृत्तित्वं च स्वावच्छिन्नत्वसम्बन्धेन, तथा चोक्तसंशयीयवह्न्यभावत्वावच्छिन्नप्रकारितायां न वह्नित्वमात्रावच्छिन्नप्रकारताविशिष्टत्वं किन्तु घटात्मकत्ववह्नित्वोभयधर्मावच्छिन्नप्रकारताविशिष्टत्वमेवेति तादृशान्यतरस्मिन्नतादृशप्रतिबध्यतावृत्तित्वविरहान्नातिव्याप्तिरिति वदन्ति।

(१) ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसंसर्गातिरिक्तसम्बन्धानवच्छिन्नपक्षविषयतानिरूपितसाध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नसाध्यविषयताकत्वनिवेशेनैव पक्षः साध्यवान्नवेति संशये नाव्याप्तिरिति चेन्न। तथासति साध्यं पक्षवृत्ति नवेत्यादिसंशयस्याऽसङ्ग्रहापत्तेः, तत्संशये आधेयत्वांशे पर्वतस्य निरूपितत्वसम्बन्धेनैव प्रकारत्वादिति।

**यत्तु साध्यवत्तानिश्चयनिवर्त्यसंशयत्वमित्यत्र संशयत्वं साध्याभाव-निश्चयानिवर्त्यत्वरूपं सर्वत्र ग्राह्यम्, अतो नोक्तदोषाणामवकाश इति । तत्तुच्छम् । पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थले वह्न्यभाववत्पर्वतसधर्मा वह्निमत्पर्वतो द्रव्यं न वेति संशयस्य पक्षतात्वापत्तेः, तादृशसंशयस्य पर्वत-त्वावच्छेदेन वह्निनिश्चयस्य तदवच्छेदेन वह्न्यभावनिश्चयस्यापि प्रतिबध्य**

वह्निमान्नवेति संशयसंग्रह इत्याहुः । ननु साक्षात्परम्परासाधारणपक्षविषयतानिरूपितसाध्यविषयत्वावच्छिन्नत्वस्य प्रतिबध्यतायां निवेशेनैव सर्वानर्थपरिहारसम्भवे एतत्कल्पपरित्यागोऽनुचित इति चेन्न । तथासति 'वस्तुतस्तु' कल्पे एव पर्यवसानात् । वस्तुतस्तुकल्पस्यापि तन्निवेश एव तात्पर्यस्य प्रागुक्तत्वादिति ध्येयम् ।

**यत्त्विति । साध्यवत्तानिश्चयेति ।** साध्यनिष्ठप्रकारताशालिनिश्चयेत्यर्थः । न चैवं पर्वतो वह्निमानित्यादौ द्रव्यत्वावच्छिन्नाभाववान् वह्निमत्पर्वतो घटवान्नवेति संशयेतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयनिवेशात् । न चैवमपि वह्निसाध्यकस्थले महानसीयवह्निमान्नवेतिसंशयेऽतिव्याप्तिः, साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रकारताशालिमहानसीयवह्निमानितिनिश्चयनिवर्त्यत्वादिति वाच्यम् । साध्यतावच्छेदकेतरधर्मानवच्छिन्नप्रकारतानिवेशात् । न च तथापि पर्वतो वह्निमान् महानसीयवह्निमानितिनिश्चयस्य साध्यतावच्छेदकेतरधर्मानवच्छिन्नप्रकारताकतया तन्निवर्त्यत्वसत्त्वेन तद्दोषतादवस्थ्यमिति वाच्यम् । तादृशप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्व-रूपनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिवेशान्न कोऽपि दोषः । न च पर्वतत्वसामानाधिकरण्येन वह्निसाध्यकस्थले नीलपर्वतो वह्निमान्नवेतिसंशयेऽतिव्याप्तिः, पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनीलपर्वतो वह्निमानितिनिश्चयनिवर्त्यत्वादिति वाच्यम् । पक्षतावच्छेदकेतरधर्मानवच्छिन्नविशेष्यतानिवेशात् । **साध्याभावनिश्चयनिवर्त्यत्वमित्यत्र**(१) साध्यप्रतियोगिकाभावनिश्चयनिवर्त्यत्वोक्तौ महानसीयवह्निसाध्यकस्थले वह्निमान्नवेतिसंशयेऽतिव्याप्तिः स्यात् वह्न्यभावस्यापि साध्यप्रतियोगिकाभावत्वात् तन्निश्चयनिवर्त्यत्वस्य महानसीयवह्निमत्तानिश्चयनिवर्त्यत्वस्य च तत्र सत्त्वात्, अतः साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभावनिवेशात्, वह्न्यभावस्य तादृशप्रतियोगिताकत्वविरहेणाऽतिव्याप्तिविरहात् । न च तथापि प्रकारतासम्बन्धेन वह्निसाध्यकस्थले प्रकारतासम्बन्धेन वह्न्यवगाहिप्रकारितासम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावावगाहिनिश्चयघटितघटवान्नवेतिसंशयेऽतिव्याप्तिः, महानसीयवह्न्यभावस्यापि तादृशावच्छेदकताकप्रतियोगिताकतया तन्निश्चयनिवर्त्यत्वस्य साध्यवत्तानिश्चयनिवर्त्यत्वस्य च सत्त्वादिति वाच्यम् । साध्यतावच्छेदकगतरूपपर्याप्तिप्रतियोगिताकत्वविरहात् ।

**वह्न्यभाववत्पर्वतसधर्मा वह्निमत्पर्वत** इत्यत्र वह्न्यभाववत्त्वं वह्निमत्त्वं च पर्वतत्वसामानाधिकरण्येन, न त्ववच्छेदकावच्छेदेन तथासतष्टापत्तिसम्भवात्, तस्यापि वह्निसंश-

(१) अत्र साध्याभावनिश्चयः पक्षतावच्छेदकावच्छेदेनैव प्रवेश्यः, तेन पर्वतत्वसामानाधिकरण्येन वह्नि-साध्यकस्थले पर्वतत्वावच्छेदेन वह्न्यभावावगाहिपर्वतत्वसामानाधिकरण्येन वह्न्यवगाहिसंशयस्य नासङ्गः ।

त्वादिति दिक्। इदन्तु चिन्त्यते—अन्यथाऽस्तु यथा, तथापि, वह्निव्याप्यवति वह्नेः साध्यतास्थले तद्धर्मिकतादृशनिश्चयप्रतिबध्यस्य संशयस्याऽप्रसिद्ध्या कुत्र लक्षणं नेयम्, वह्निव्याप्यवान् वह्निमान्नवेत्यादिसंशयस्य आहार्यत्वेन अप्रतिबध्यत्वादिति ।

---

त्वात् । अत एव साधर्म्यपदोपादानमपि, अन्यथा एकस्मिन्धर्मिणि वह्नितदभावयोरवगाहित्वेन संशयत्वसम्भवात् । केचित्तु पर्वतत्वसामानाधिकरण्येन वह्न्यभावावगाहित्वलाभाय धर्मपदम्, अन्यथा तस्याहार्यत्वेनाऽप्रतिबध्यत्वापातादित्याहुः ।

अथ सामानाधिकरण्येन वह्न्यभावावगाहिनिरुक्तसंशये अवच्छेदकावच्छेदेन साध्यवत्तानिश्चयनिवर्त्यत्वसत्त्वेऽपि सामानाधिकरण्येन साध्याभाववत्तानिश्चयनिवर्त्यत्वविरहेणैव नातिव्याप्तिः । न च सामानाधिकरण्येन वह्न्यभावावगाहिनिश्चयनिवर्त्यत्वविरहेऽपि अवच्छेदकावच्छेदेन साध्याभावावगाहिनिश्चयनिवर्त्यत्वसत्त्वादतिव्याप्तिरिति वाच्यम् । तथासति पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्याभाववत्तानिश्चयनिवर्त्यत्वनिवेशादेवाऽतिव्याप्तिवारणसम्भवादिति चेन्न । पर्वतत्वसामानाधिकरण्येन वह्निसाध्यकस्थले सामानाधिकरण्येन अवच्छेदकावच्छेदेन च वह्न्यभावावगाहिसंशयेऽव्याप्तिः, सामानाधिकरण्येन साध्याभावावगाहिनिश्चयनिवर्त्यत्वविरहात्, सामानाधिकरण्येन वह्निमत्तानिश्चयकाले सामानाधिकरण्येन वह्न्यभावबुद्ध्युत्पत्तेरिति ।

अथ पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती पक्षधर्मिकसाध्याभावनिश्चयप्रतिबध्यतावच्छेदिका या विशेष्यता तच्छालिसंशयत्वं वाच्यम्, एवं चोक्तस्थले वन्ह्यभाववत्सधर्मा वह्निमान्पर्वतो द्रव्यं नवेति संशयस्य वारणसम्भवः तदीयवह्नितदभावप्रकारताद्वयनिरूपितविशेष्यताद्वयी तत्र कस्या अपि विशेष्यतायाः तादृशत्वविरहात् । पर्वतो वह्निमान्नवेति प्रकृतसंशये च वह्नितदभावनिष्ठप्रकारतानिरूपितविशेष्यताया ऐक्यात्तस्याश्च तादृशत्वाल्लक्षणसमन्वयः । न च पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थले एकत्र द्वयमिति रीत्या वह्नितदभाववान् पर्वत इति निश्चयस्यापि पक्षतात्वापत्तिः पर्वतत्वसामानाधिकरण्येन वह्नितदभावयोरवगाहनेऽनाहार्यत्वेन तादृशत्वादिति वाच्यम् । पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती पक्षधर्मिकसाध्याभावनिश्चयप्रतिबध्यतावच्छेदिका सती पक्षधर्मिकसाध्यवत्तानिश्चयप्रतिबन्धकतानवच्छेदिका या विशेष्यता तच्छालित्वनिवेशेनैवोक्तदोषवारणादिति चेद् ।

अत्र केचित्—वह्न्यभावव्याप्याभावसाध्यकस्थले वह्न्यभावव्याप्यात्मकवह्न्यवगाहिनिश्चयेऽतिव्याप्त्यापत्तेः, वह्न्यभावव्याप्यवत्तानिश्चयनिवर्त्यतावच्छेदकीभूतवह्न्यभावव्याप्याभाववत्तानिश्चयनिवर्त्यतावच्छेदकीभूततादृशोभयधर्मावच्छिन्नविषयतासत्त्वादिति प्राहुः ।

नव्यास्तु पर्वतो वह्न्यभावव्याप्यवानित्यनुमितौ वह्न्यभावव्याप्याभाववत्पर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिः, तदीयपर्वतत्वावच्छिन्नविशेष्यताया ऐक्यतया तस्यामुभयप्रतिबध्यतावच्छेदकत्वसत्त्वात् । न च तत्संशये वन्ह्यभावव्याप्यधर्मितावच्छेदकीकृत्य वह्निमत्त्वं भासते इति तस्याऽऽहार्यत्वेन तदीयपर्वतत्वावच्छिन्नविशेष्यतायां प्रतिबध्यतावच्छेदकत्वविरहादेव नातिव्याप्तिरिति वाच्यम् । तत्रैव पर्वतो वन्ह्यभावव्याप्याभावाभावसाध्यवत्तानिश्चयनि-

दी तेन न पक्षसाध्यविशेष्यकसंशयाननुगमः, न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम्, न वा तमःप्रभृतिषु समवायेनाऽऽकाशादि·

---

जा ननु पक्षधर्मिकसाध्यसंशयत्वं, साध्यधर्मिकपक्षवृत्तित्वसंशयत्वादिकं वा लघुलक्षणं कुतः परित्यक्तमत आह तेनेति। याद्दशसम्बन्धावगाहित्वस्य फलमाह—नेति। मूलस्थस्य सन्दिग्धसाध्यधर्मत्वमित्यस्य परित्यागे बीजमाह—न वा तम इत्यादि। सन्दिग्धसाध्यधर्मत्वमिति मूलस्य सन्दिग्धं साध्ये धर्मत्वं यस्येति व्युत्पत्त्या यद्वृत्तित्वं साध्ये सन्दिग्धमिति यावत्। किं वा सन्दिग्धः साध्यरूपो धर्मो यत्रेति व्युत्पत्त्या यथाश्रुतोऽर्थः। तत्र प्रथमे पक्षीभूततमःसमवेतत्वस्य द्वितीये च धर्मात्मकगगनसाध्यस्याऽप्रसिद्ध्या द्वयमपि लक्षणं दुष्टमित्याशयेन तमसः पक्षतया गगनस्य साध्यतया उल्लेखः।

---

छप्रतिबन्धकतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतावच्छेदकत्वं-साध्याभावनिश्चयनिरूपिततादृशविशेष्यतानिरूपितवन्ह्यभावव्याप्याभावाभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतावच्छेदकत्वयोः सत्वात्। (अत्र च संशयः वह्न्यभावव्याप्याभावाभाववह्निकोटिकः वह्निसामान्याभावकोटिकश्च) यदि च साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती साध्याभावनिश्चयप्रतिबध्यतावच्छेदिका या विषयता तदनिरूपिता सती साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती साध्याभावनिश्चयप्रतिबध्यतावच्छेदिका या मुख्यविशेष्यता तच्छालिज्ञानत्वमेव पक्षता, तथा च नोक्तदोष इत्युच्यते, तदा लक्षणान्तरत्वादिति प्राहुः।

कुत्र लक्षणं नेयमिति। ननु वह्निः वह्निव्याप्यवद्वृत्तिर्नवेति संशयस्य लभ्यतया तस्य चाऽनाहार्यत्वेन तत्र लक्षणगमनादिति चेन्न। पक्षः साध्यवान्नवेति संशयमात्रे एवाऽव्याप्त्यभिप्रायकत्वात्तद्ग्रन्थस्य, चिन्त्यमित्यनेन चाऽस्यैवाऽऽशयस्य सूचितत्वादिति।

दीधितौ पक्षसाध्येति। पक्षविशेष्यकस्य पक्षः साध्यवान्नवेत्यस्य, साध्यविशेष्यकस्य साध्यं पक्षवृत्ति नवेत्याकारकस्य संशयस्य, नाऽननुगमः, अननुगतस्य कारणत्वे तु परस्परजन्ये व्यभिचारवारणाय कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशस्यावश्यकतया कारणतानन्त्यं स्यादिति भावः। इदमुपलक्षणम्-साध्यवत्तद्भेदकोटिकसंशयाननुगमोऽपि बोध्यः। सम्बन्धान्तरेण—साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धेनेति यावत्। सन्देहे—सन्देहदशायाम्। निर्णीतसम्बन्धेन—पक्षांशे तत्कालीननिर्णयविषयीभूतसाध्यतावच्छेदकसम्बन्धेन, एतदनन्तरमनुमिताविति पूरणीयम्। तत्सम्बन्धेन संशयासत्त्वेऽपि तत्सम्बन्धेन सिद्धिशून्यकाले इष्टापत्तिसम्भवान्निर्णीतेत्युक्तम्। सम्बन्धमनिवेश्य साध्यनिर्णयसामान्यानिवर्त्यत्वानिवेशेऽप्रसिद्धिप्रसङ्गात्, अतो यत्किञ्चित्संसर्गकनिर्णयसामान्यनिवर्त्यत्वनिवेशपक्षेऽयमतिप्रसङ्गो बोध्य इति। संशयपक्षतावादिनां मते स्वातन्त्र्येणानुमितिं प्रति सिद्धेः प्रतिबन्धकत्वाकल्पनात् संशयस्य सिद्धिं प्रति प्रतिबन्धकत्वात्संशयोत्तरं सिद्ध्यात्मकपरामर्शोऽसम्भवात्सिद्धिसत्त्वे आपत्तिविरहात्, सिद्धेश्च साध्यसंशयं प्रति प्रतिबन्धकत्वात्सिद्ध्यात्मकपरामर्शोत्तरं संशयाऽसम्भवात् सि·

**सन्देहो हि न विशेषणम्, परामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात् । नोपलक्षणम्, अव्यावर्त्तक-साधने तद्वैकल्यम् ।**

---

अत्र च मते पक्षे साध्यवत्तासंशयोत्तरं सिद्ध्यात्मकपरामर्शादपि अनुमितिर्भवत्येति बोध्यम् ।

न चोक्तलक्षणस्य साध्यसंशयमात्रपरत्वेऽग्रिममूलेन तस्य विशेषणत्वादिविकल्पस्याऽसङ्गतिः । तत्र विशेषणोपलक्षणपदयोः साक्षात्परम्परा कारणमात्रपरत्वात् । सन्दिग्धं साध्यं यत्र तद्धर्मत्वं तत्सन्दिग्धसाध्यमिति व्युत्पत्त्या लब्धं स्वविशेष्यकसाध्यसंशयसम्बन्धित्वरूपं यथाश्रुतार्थमादायैव विशेषणत्वोपलक्षणत्वयोरग्रे विकल्प इत्यप्याहुः । तद्वैकल्यम्—पक्षतावैकल्यम् ।

---

द्धिदशायां नापत्तिः, परन्तु प्रत्यक्षनिश्चयं प्रत्येव साध्यसंशयस्य प्रतिबन्धकतया स्मरणात्मकसिद्धिं प्रति साध्यसंशयस्याऽप्रतिबन्धकतया साध्यसंशयोत्तरं स्मरणात्मकसिद्ध्यात्मकपरामर्शसम्भवात् तत्सत्त्वे अनुमित्यापत्तिरत आह—अत्र च मत इति । आपत्तौ इष्टापत्तिरित्यर्थः । सिद्ध्यात्मकस्मरणात्मकपरामर्शादित्यर्थः । अथ संशयोत्तर सिद्ध्यात्मकपरामर्शादनुमितिस्वीकारे वह्निव्याप्यसाध्यकस्थले वह्निमान्नवेति संशयोत्तरं सिद्ध्यात्मकपरामर्शादनुमित्यापत्तिदानासङ्गतिरिति चेन्न । वह्निव्याप्यसाध्यकस्थले वह्निमान्नवेतिसंशयोत्तरप्रत्यक्षात्मकपरामर्शादनुमित्यापत्तिदानात् वह्निमान्नवेति संशयस्य वह्निव्याप्यवान्नित्याकारकप्रत्यक्षात्मकसिद्धिप्रतिबन्धकतया तादृशसंशयोत्तरं तादृशप्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शसम्भवादिति विभावनीयम् ।

स्वविशेष्यकेति । स्वं पर्वतादिकम्, तथा च विशेष्यतासम्बन्धेन साध्यसन्देहवत्त्वं पक्षत्वमिति फलितम् । आहुरित्यस्वरसः, तद्बीजन्तु विशेष्यतासम्बन्धेन साध्यसन्देहस्याऽनुमितिहेतुत्वे पर्वतत्वरूपेण यत्किञ्चित्पर्वते साध्यसन्देहात्, तेन रूपेण पर्वतान्तरेऽनुमित्यनुदयापत्तिः । रूपान्तरेण साध्यसन्देहान्निर्णीतरूपेणाप्यनुमित्यापत्तिश्चेति ध्येयम् । मूले परामर्शपूर्वं तस्य संशयस्य नाशादित्यन्वयः । यत्रादौ लिङ्गदर्शनं ततो व्याप्तिस्मरणं तदभिप्रायेण लिङ्गदर्शनस्य, यत्रादौ व्याप्तिस्मरणं ततो लिङ्गदर्शनं तदभिप्रायेण व्याप्तिस्मरणस्य नाशकत्वमभिहितम्, अत एकत्रोभयोर्नाशकत्वासम्भवेऽपि न क्षतिः । ननु व्याप्तिस्मरणानन्तरं लिङ्गदर्शनस्यानुपयोगात् परामर्श एव तदनन्तरं वाच्यः, तथा च कथमेतदिति चेन्न । यत्र प्रथमं साध्यसन्देहः ततो धूमव्याप्यवत्तापरामर्शरूपव्याप्तिस्मरणम्, ततो लिङ्गदर्शनात्मिका धूमानुमितिः अलौकिकमानससामग्र्यपेक्षया अनुमितिसामग्र्याः बलीयस्त्वात्, ततोऽलौकिकपरामर्शः तदभिप्रायेण तदभिधानसङ्गतिः ।

मूले-नोपलक्षणम्—न कालिकसामानाधिकरण्यमात्रप्रत्यासत्त्या कारणमित्यर्थः । अव्यावर्त्तकतापत्तेरिति । सिद्धिकाले अनुमित्यवारकतापत्तेरित्यर्थः । तत्कालीनपरामर्श-

तापत्तेः। नापि साधकबाधकप्रमाणाभावः, उभयाभाव-

संशययोग्यतां निरस्यति नापीति। साधकबाधकमाने सिद्धिबाधौ,

---

ननु 'योग्यतायाश्चाऽनिरूपणादि'ति ग्रन्थेनाऽग्रेऽनुमित्साया इव संशयस्यापि योग्यताया निरसितुमुचितत्वात् तदनिरसनान्मूलस्य न्यूनत्वमत आह संशयेति। सिद्धिबाधयोर्जनकस्य व्याप्तिज्ञानमनोयोगादेः सर्वत्रैवानुमितेः पूर्वं सत्त्वाद् व्याचष्टे साधकेत्यादि। तथा च साधकेन बाधकेन जनितं यन्मानमिति मूलेऽन्वयः। स्वार्थे वा कन्प्रत्ययमिति भावः।

---

स्यापि कालान्तरीणसंशयविषयधर्मिवृत्तित्वावगाहितया सामग्र्या अक्षतत्वादिति।

अथ साध्यसन्देहो अनुमितौ हेतुरेव लिङ्गदर्शनव्याप्तिस्मरणादिना पूर्वोत्पन्नसंशयनाशेऽपि तदनन्तरं परामर्शाव्यवहितप्राक्क्षणजातसंशयान्तरादेव अनुमितिरिति कल्पनात्। न चानुत्पन्नसंशये यत्र स्वसामग्रीवशात्परामर्शोत्पत्तिः तत्रानुमित्यनुत्पादप्रसङ्गः परामर्शकाले तदुत्तर च विशेषदर्शनरूपप्रतिबन्धकवशेन संशयोत्पादाऽसम्भवादिति वाच्यम्। फलानुरोधेन सर्वत्रैवाऽनुमित्युपधायकपरामर्शपूर्वं संशयोत्पादकल्पनात्। यत्र संशयोत्पादप्राक्क्षणे परामर्शसामग्री प्रमाणसिद्धा यत्र वा परामर्शसामग्रीपूर्वक्षणे संशयजनकधर्मिज्ञानाद्यभावः प्रामाणिकः तत्र परामर्शानन्तरं साध्यस्य प्रत्यक्षनिश्चय एवोपगम्यते तत एव प्रवृत्त्याद्युपपत्तेः, तत्रानुमिनोमीत्यनुव्यवसायस्याऽगत्या भ्रमत्वं कल्प्यते, अननुगतसिषाधयिषाविरहकूटविशिष्टसिद्ध्यभावापेक्षया संशयहेतुतायां लाघवात्। संशयहेतुत्वोपगमे बाधनिश्चयकाले संशयाभावादेवाऽनुमितिवारणसम्भवेन नानाविधबाधनिश्चयाभावस्य अनुमित्यहेतुत्वे अनुमितिसामग्रीप्रतिबन्धकतायां तदनिवेशेन च लाघवात्। जनकीभूतसंशयविरोधितयैव बाधादीनां हेत्वाभासत्वोपपत्तेः। साध्यसंशयस्य च साध्यसंसर्गावगाहिज्ञानत्वेन कारणत्वादिति चेन्न।

प्रत्यक्षादिना निर्णीतस्यापि साध्यस्यानुमित्सया अनुमितेरानुभविकत्वात्, संशयस्य पक्षतात्वे तदनुपपत्तेः, अनुभवापलापे अनुमानप्रामाण्यस्यैव विलोपापत्तिः प्रत्यक्षादितोऽपि प्रवृत्तिसम्भवात्। एवमप्रसिद्धसाध्यकस्थले संशयाऽसम्भवादनुमित्यनुपपत्तिश्चेति सङ्क्षेपः।

**तदनिरसनादिति।** योग्यताया अनिरासादिति भावः। संशययोग्यताकारणतावादिनामयमाशयः—संशयनाशेऽपि यावन्न निर्णयः तावत्पर्यन्तं संशययोग्यताया अनपायात्तस्या एव पक्षतात्वं सम्भवतीति। संशययोग्यता च संशयप्रतिबन्धकयोः साध्यवत्तानिश्चयसाध्याभाववत्तानिश्चययोरभाववत्ता। **मूलस्य न्यूनत्वमिति।** यथाऽग्रे सिषाधयिषायोग्यताया दुर्वचतया निराकरणम्, तथाऽस्या अपि निराकरणस्यावश्यकत्वात्। **व्याप्तिज्ञानमनोयोगादेः।** आदिना चक्षुरादेः संग्रहः। यद्यपि बाधकमानपदस्य बाधजनकसामग्रीपरत्वेऽपि न क्षतिः, बाधसामग्र्यनन्तरक्षणे अनुमितेरनुत्पादात्, तथापि बाधजनकत्वमात्रेण तत्सामग्रीपरत्वे उक्तानुपपत्तिः मनोयोगादेरपि बाधजनकतया तदभावविरहात्, बाधसामग्रीत्वेन तत्परत्वं न लक्षणां विना, लक्षणाया आवश्यकत्वे तु बाधे एव लक्षणोचितेत्यभिप्रायेणेदम्।

**केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः ।**

---

ननु पक्षधर्मिकसाध्याभावनिश्चयात्मनो बाधस्य केवलान्वयिन्यप्रसिद्धिरत आह केवलान्वयिनि चेति । पर्वतो न वाच्यत्ववानित्याकारकः पटाद्यभावे प्रतियोगितासम्बन्धेन वाच्यत्वावगाह्यपि बाधः खण्डशः प्रसिद्धा तत्र सम्भवतीत्यावेदयितुं सुलभ इत्युक्तम् । नचैवं नानाविधानां बाधबुद्धीनामनुगमाऽसम्भवः, प्रातिस्विकरूपेण तासां निवेशे तु 'नाप्यभावद्वयमि'ति मूलाऽसङ्गतिः बाधाभावस्याऽनेकत्वादिति वाच्यम् । पक्षधर्मिकसाध्यवत्ताज्ञानविरोधिनिर्णयत्वेन तासामनुगमादिति भावः ।

---

अप्रसिद्धिरिति । तत्र साध्याभावाऽप्रसिद्ध्या बाधाप्रसिद्धिरित्यर्थः । दीधितौ पक्षनिष्ठेति । साध्ये इत्यादिः । धीः—निर्णयः । नाप्यभावद्वयमिति मूलासङ्गतिरिति । ननु बाधस्याऽनेकतया तदभावस्याप्यनेकत्वेनोभयाभावस्य प्रत्येकमप्रत्वेपि सत्वादिति पूर्वमूलाऽसङ्गतेः कुतो नोक्तेति चेन्न ।

सिद्धिसद्भावावेश्यैतदुभयाभाव इति रीत्या उभयाभावप्रसिद्धिसम्भवात् । तासां—बाधबुद्धीनामित्यर्थः ।

अथ साध्यवत्ताधीविरोधित्वेनाऽनुगमसम्भवे निश्चयपदं व्यर्थमिति चेन्न । प्रत्यक्षनिश्चयं प्रति ग्राह्यसंशयस्य प्रतिबन्धकतया पर्वतो वह्निमान्नवेति संशये बाधनिश्चयत्वापत्तेः । न च पर्वतो घटाभाववानितिबाधनिश्चयस्यापि पर्वतो वह्निमान् घटवांश्चेति समूहालम्बनसाध्यवत्ताधीविरोधिनिर्णयत्वसत्वेनाऽतिव्याप्तिः, अतोऽवश्यं साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिग्रहत्वव्यापकत्वं निवेशनीयम्, तादृशप्रत्यक्षनिश्चयत्वावच्छिन्नप्रतिबध्यतायास्तादृशग्रहत्वव्यापकत्वविरहान्न तत्राऽतिव्याप्तिरिति वाच्यम् । लाघवादुदासीननिश्चयेऽतिव्याप्तिवारणाय प्रतिबध्यतायां स्वरूपसम्बन्धरूपपक्षतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नत्वनिवेशात्, तादृशप्रत्यक्षनिश्चयत्वावच्छिन्नप्रतिबध्यतायां स्वरूपसम्बन्धरूपतादृशविशेष्यत्वावच्छिन्नत्वतादृशप्रकारत्वावच्छिन्नत्वेनाऽतिव्याप्तितादवस्थ्यात् । न च व्यापकत्वानिवेशे विशेष्यत्वप्रकारत्वयोर्ज्ञानत्वस्य चेतरवारकयोर्निवेशादेवाऽतिव्याप्तिवारणसम्भवे निश्चयत्वनिवेशो निरर्थक इति वाच्यम् । तथासति लाघवानवकाशात् । वस्तुतः प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वं, तच्च व्याप्यवृत्त्येव, तथा च यत्र प्रथमक्षणे वह्न्यभाववान्पर्वत इति बाधनिश्चयः तद्द्वितीयक्षणे च तत्राऽप्रामाण्यज्ञानं लौकिकसन्निकर्षजन्यपरामर्शश्च ततोऽनुमितिर्जायते अधुना तस्या अनुपपत्तिः, तत्र बाधनिश्चयस्य प्रथमक्षणे प्रतिबन्धकत्वे द्वितीयक्षणेऽपि प्रतिबन्धकत्वमस्ति पूर्वक्षणावच्छेदेनाऽप्रामाण्यज्ञानाभावविशिष्टसाध्यवत्ताधीविरोधित्वसत्वेन प्रतिबन्धकत्वाभावरूपपक्षताविरहात् अतो निश्चयपदम्, निश्चयत्वनिवेशस्य पर्याप्तिसूचकत्वात्तथा च निश्चयत्वनिवेशेऽस्माकं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणनिवेशलाभात्परक्षणे प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणीभूताऽप्रामाण्यज्ञानाभावनिश्चयत्वोभयधर्मावच्छिन्नाधिकरणताविरहेण तादृशपर्याप्त्यधिकरणधर्मावच्छिन्ना-

स्य प्रत्येकसत्त्वेऽपि सत्त्वात् । नापि अभावद्वयं तथा, बाधकप्रमाणाभावस्य व्यर्थत्वात्, ह्रदादेः पक्षत्वेऽपि बाधहेत्वसिद्ध्यादेरावश्यकत्वेनाऽनुमित्यनुत्पादात् । नापि साधकप्रमाणाभावः, 'श्रोतव्यो मन्तव्य' इति श्रुत्या समानविषयश्रवणानन्तरं मननबोधात्, प्रत्यक्षदृष्टेऽप्यनुमानदर्शनात्, एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च, 'मन्तव्यश्चोपपत्तिभि'रिति स्मरणात् ।

अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः, तथाहि

---

भावरूपपक्षतायाः सम्भवादिति ध्येयम् । उभयाभावस्य प्रत्येकसत्त्वेऽपिसत्त्वादिति । तथा च केवलसिद्धिसत्त्वेऽनुमित्यापत्तिरिति भावः । नाप्यभावद्वयमिति । नापि पक्षधर्मिकसाध्यनिश्चयाभावः, पक्षधर्मिकसाध्यवत्ताधीविरोधिनिश्चयाभावश्च पृथक् पृथक् प्रवेश्य इत्यर्थः । ननु तदपेक्षया लाघवात् पक्षधर्मिकसाध्यसंशयविरोधिनिश्चयाभाव एक एव निवेश्यताम्, साध्यसंशयं प्रति साध्यनिश्चयस्येव बाधनिश्चयस्यापि प्रतिबन्धकत्वादिति चेन्न । एवंसत्यसम्भवापत्तेः, साध्यसंशयं प्रति साध्यव्याप्यहेतुमत्तानिश्चयस्यापि प्रतिबन्धकतया तदभावस्याऽनुमितेः पूर्वमसम्भवादिति दिक् । मूले—व्यर्थत्वादिति । अनुमितित्वावच्छिन्नं प्रति जनकताकल्पनाया व्यर्थत्वादित्यर्थः । ननु ह्रदो वह्निमानित्याद्यनुमितिवारणायाऽनुमितित्वावच्छिन्नं प्रति बाधकप्रमाणाभावस्य जनकत्वमावश्यकमित्यत आह—ह्रदादेः पक्षत्वेऽपीति । ह्रदादेर्यत्र पक्षत्वं तत्रापीत्यर्थः । आवश्यकत्वेनेति । साध्यहेत्वादिविशिष्टबुद्धिसामान्यं प्रति अवश्यक्लृप्तप्रतिबन्धकत्वेनेत्यर्थः । हेत्वसिद्ध्यादेरित्यादिपदाद् धूमवान् वह्नेरित्यादौ व्यभिचारव्याप्यत्वासिद्ध्यादेः परिग्रहः । नापीति । साधकप्रमाणं—पक्षे साध्यनिश्चयः । समानविषयकेति । आत्मविशेष्यकेतरभेदप्रकारकशाब्दबोधानन्तरमित्यर्थः । मननबोधात्—आत्मपक्षकेतरभेदसाध्यकानुमितिबोधादित्यर्थः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतिः । अत्र तव्यप्रत्ययार्थ इष्टसाधनत्वम्, मुमुक्षोरात्मदर्शनमिष्टसाधनमित्यर्थः । दर्शनोपायानाह श्रोतव्यः—शाब्दबोधविषयः कर्त्तव्यः । प्रात्यक्षिकसिद्ध्यभावमात्रं योग्यतेत्युक्तावपि दोषमाह प्रत्यक्षदृष्टेऽपीति । प्रत्यक्षतो निश्चितेऽपीत्यर्थः । अनुमानदर्शनात्—अनुमित्सया अनुमितिदर्शनात् । तदनुमानाच्चेति । सिषाधयिषयेति शेषः । ननु एकलिङ्गावगतस्य लिङ्गान्तरेणाऽनुमितिरसिद्धेत्यत आह मन्तव्यश्चेति । आत्मनि आत्मेतरभेदोऽनुमातव्यश्चेत्यर्थः । उपपत्तिभिः—बहुभिर्हेतुभि-रित्यर्थः । अन्यथा बहुवचनानुपपत्तेरिति भावः ।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा तु सततं ध्येय एते दर्शनहेतवः ॥

इति स्मरणादित्यर्थः । अथेति । सिषाधयिषितं साध्यं धर्मो यस्य, एवम्भूतो धर्मी पक्षः

म. मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सि-द्धिविशेषानुमितीच्छयाऽऽत्मानुमानम्, अत एव (१)'प्रत्य-

---

दी. मूले—प्रत्यक्षपरिकलितमिति । प्रत्यक्षपरिकलितत्वविशिष्टविषयको योऽनु-

---

जा इत्यर्थः । तथाच सिषाधयिषा पक्षतेत्यर्थः । एतेन सिषाधयिषितसाध्यवत्त्वस्य पक्षत्वे महानसादौ बाधितसाध्यके चाऽव्याप्तिस्तत्र तादृशसाध्यवत्त्वाभावादिति निरस्तम् । सिषाधयिषायाः पक्षत्वे मननस्थले पूर्वोक्ताव्याप्तिं निरस्यति तथाहीति । तथाचेत्यर्थः । आत्मावगमेऽपि—आत्मनि इतरभेदानिश्चयेऽपि । मोक्षोपायत्वेन—मोक्षोपायत्वज्ञानेन । एतेनेच्छाकारणं सम्पादितम् । सिद्धिविशेषेति अनुमितिविशेषणम् । आत्मानुमानम्—आत्मनि आत्मेतरभे-

---

(१) प्रत्यक्षपरिकलितमिति मूलम् । तत्र प्रत्यक्षपदमिन्द्रियपरम्, तस्य जन्यतासम्बन्धेन परिपूर्वककलधात्वर्थज्ञानेऽन्वयः, क्तप्रत्ययार्थोऽतीतः, परिकलितमिति द्वितीयायाः विषयत्वमर्थः, तत्र निरूपितत्वसंबन्धेनाऽतीतज्ञानस्याऽन्वयः, तथाच प्रत्यक्षपरिकलितमित्यनेनेन्द्रियजन्यातीतज्ञाननिरूपितविषयत्वलाभः, तस्य स्वरूपसम्बन्धेनार्थेऽन्वयः । अर्थमित्यत्र विषयत्वं द्वितीयार्थः, तत्र निष्ठत्वसम्बन्धेनाऽर्थस्यान्वयः, तादृशबोधस्य विषयितासम्बन्धेन सन्नर्थेच्छायामन्वयः तादृशविषयताया निरूपकतासम्बन्धेन बुधधात्वर्थज्ञानेऽन्वयः । तत्रैवाऽनुमानेनेति तृतीयार्थजन्यत्वस्याप्यन्वयः, आख्यातार्थआश्रयत्वम्, तस्य स्वरूपसम्बन्धेन तर्करसिकेऽन्वयः, तथाचेन्द्रियजन्यातीतज्ञाननिरूपितविषयतावदर्थनिष्ठविषयतानिरूपकानुमानजन्यबोधविषयकेच्छावन्तस्तर्करसिका इति वाक्यार्थबोधः । नहि करिणीत्यादिवाक्याच्च चाक्षुषज्ञानं दृशधात्वर्थः, क्तप्रत्ययार्थोऽतीतत्वं, लौकिकविषयता च, तस्याः स्वरूपेण करिण्यन्वयः, तथाच चाक्षुषनिरूपितलौकिकविषयतावति करिणीत्यर्थः । तत्पदार्थः करी, द्वितीयार्थो विषयत्वम्, तत्र निष्ठत्वसम्बन्धेन करिणोऽन्वयः, तादृशविषयताया निरूपकत्वसम्बन्धेन धात्वर्थेऽनुमितावन्वयः, आख्यातार्थ आश्रयत्वम्, तस्यानुमातरि स्वरूपेणाऽन्वयः, तथाच चीत्कारलिङ्गकतादृशकरिनिष्ठविषयतानिरूपकानुमित्याश्रयत्वाभाववन्तोऽनुमातार इति बोधः ।

वाचस्पतिवचनयोरविरोध इति । न चायं ग्रन्थो न संगच्छते, प्रथमतोपि अविरोध एव सम्भवति, इन्द्रियजन्यं यत्पर्वतो घटवानिति ज्ञानं तदीयविषयताविशिष्टपर्वतरूपार्थनिष्ठविषयतानिरूपकानुमानजन्यपर्वतो वह्निमानित्याकारकबोधः सम्भवतीति तादृशबोधेच्छायास्तर्करसिके सत्त्वादिति वाच्यम् । प्रत्यक्षपरिकलितमित्यादिवाक्येन "इन्द्रियजन्यं यद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्धर्मावच्छिन्नप्रकारताशालिज्ञानं तदीयविषयतावदर्थनिष्ठतद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रकारताशाल्यनुमानजन्यबोधेच्छावन्तस्तर्करसिका इत्यस्य विवक्षितत्वात् प्रथमतो विरोधसम्भवात् । नन्वेवमपि एककाले एकपुरुषस्य वा इन्द्रियजन्यज्ञानसत्त्वे कालान्तरे पुरुषान्तरस्य वा अनुमानजन्यबोधसम्भवेन कथं विरोध इत्यत आह प्रत्यक्षपरिकलितत्वविशिष्टविषयक इति । तथाचेन्द्रियजन्यज्ञानीयविषयतायाः स्वातन्त्र्येण बोधविषयतायामन्वयस्वीकारेण इन्द्रियजन्यतद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रकारताशालिज्ञाननिरूपितविषयताविशिष्टा या तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रकारता तच्छाल्यनुमानजन्यबोधेच्छावन्तस्तर्करसिका इत्येव वाक्यार्थबोधः । वै० स्वनिरूपकज्ञानविशिष्टज्ञानीयत्वसम्बन्धेन । वै० स्वाधिकरणक्षणवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन इति न कालान्तरीयपुरुषान्तरीयज्ञानमादायोक्तग्रन्थासङ्गतिरिति तदेवाह—तेनेति । प्रत्यक्षविषयत्वादेर्विशेषणत्वेनेत्यर्थः । उपजातप्रत्यक्षविषयत्वदशायामिति । कालान्तरीयप्रत्यक्षविषयत्वदशायामित्यर्थः । वचनगतविरोधस्तु विरुद्धार्थप्रतिपादकत्वम् ।

ननु अनुमितीच्छाविषयत्वाऽनुमितिविषयत्वाभावयोरविरोधात्कथं जगदीशमते वचनद्वयाविरोधसंगतिः, दर्शनविषयत्वस्य गगनेऽसत्त्वेऽपि दर्शनेच्छाविषयत्वस्य तत्र सत्त्वाद् गगनं दिदृक्षते इति प्रयोगात्, अत

दानुमानम् । अतएव-अनुमित्सायाः पक्षत्वादेव, वाचस्पतिवचनयोरविरोध इत्यनेनाऽन्वयः।

---

एव मथुरानाथेन "बुभुत्सन्ते जानन्ति सन्प्रत्ययार्थस्याऽविवक्षितत्वादि"त्युक्तमिति चेन्न । जगदीशमते मूल-धात्वर्थकर्मत्वमेव सन्नन्तकर्मत्वम्, न त्विच्छाविषयत्वरूपम्, एवं च प्रत्यक्षाविषयीभूतार्थेऽनुमितिविषयत्व-स्यैवोक्तवाक्येन बोधनाद् नहि करिणीत्यादिवाक्याच्च प्रत्यक्षविषयीभूतार्थेऽनुमितिविषयत्वभावबोधनाच्च विरोधसंगतिः। न च तथासति विषं बुभुक्षते इति प्रयोगापत्तिः, विषे भोजनकर्मत्वस्याऽबाधादिति वाच्यम् । इच्छाविषयत्वे सति धात्वर्थकर्मत्वस्यैव सन्नन्तकर्मत्वात्, विषे इच्छाविषयत्वबाधादेव उक्तापत्तिवारणात् । नच्चैवं गगनं दिदृक्षते इति प्रयोगानुपपत्तिः, गगने दर्शनकर्मत्वासत्त्वादिति वाच्यम् । जगदीशमते तादृ-शप्रयोगानुपपत्तेरिष्टत्वात्, मथुरानाथमते तु इच्छाविषयत्वमेव सन्नन्तकर्मत्वमिति तन्मते प्रत्यक्षाविषयीभू-तार्थेऽनुमितीच्छाविषयत्वाऽनुमितिविषयत्वाभावयोर्विरोधासम्भवात् बुभुत्सन्ते-जानन्तीत्युक्तम् । न चैतन्मते गृहं तिष्ठासतीत्यपि प्रयोगापत्तिरिति वाच्यम् । धात्वर्थकर्मत्वेनेच्छाविषयत्वस्य विवक्षितत्वात्, उक्तस्थले गृहाधिकरणकस्थितिर्भवतु इतीच्छाविषयत्वस्यैव सत्त्वात्, स्थितिकर्म गृहं भवत्वितीतिसम्भवादीच्छासत्त्वे तु तादृशप्रयोगो भवत्येवेति ध्येयम् ।

केचित्तु प्रत्यक्षपरिकलितमनुमानेन बुभुत्सन्ते इत्यादौ सनो धात्वर्थविशेष्यकेच्छावाचित्वात्, बोध-विशेष्यकेच्छा बुभुत्सापदार्थः, प्रत्यक्षपरिकलितादेश्च बोधकर्मत्वमेव द्वितीयया प्रत्याय्यते नतु इच्छाविषयत्व-रूपं कर्मत्वम्, गृहस्थित्यादीच्छामादाय गृहं तिष्ठासतीत्यादिप्रयोगापत्त्या इच्छाविषयतायां कर्मत्वासम्भवात् प्रत्यक्षपरिकलितादेश्चाधेयतासम्बन्धेन द्वितीयार्थबोधविषयत्वरूपकर्मत्वेऽन्वयः, कर्मतायाश्च बोधे निरूपकता-सम्बन्धेनाऽन्वयः, प्रत्यक्षपरिकलितत्वविशिष्टविधेयताविशिष्टानुमानजन्यबोधविशेष्यकेच्छावन्तस्तर्करसिका इ-त्यन्वयबोधः । तत्र विशिष्टवैशिष्ट्यावगाहिबोधमर्यादया प्रत्यक्षपरिकलितत्वादेर्धर्मिपारतन्त्र्येण बोधविषयत्व-रूपकर्मत्वे समानकालीनत्वसम्बन्धेन भानम्, एकज्ञानविषयतारूपकर्मत्वेऽपरज्ञानविषयतायाः पारतन्त्र्येण भाने समानकालीनत्वस्यैव संसर्गत्वात्, तथाच प्रत्यक्षविषयतासमानकालीनानुमितिविषयतालाभान्न वचनविरोधा-सङ्गतिरिति जगदीशाभिप्रायः, तथाच सन्प्रत्ययार्थाविवक्षायामपि नानुपपत्तिरिति ध्येयम् ।

ननु सन्प्रत्ययस्थले स्वप्रकृत्यर्थकर्मताया द्वितीयार्थकत्वे यदोदनकर्मभोजनमप्रसिद्धम्, अथ च भोजन-कर्मतया च तदिष्टं तत्रायमोदनो बुभुक्षते इत्यादेः, दर्शनादिविषयत्वेन गगनादिगोचरेच्छास्थले गगनं दि-दृक्षते इत्यादिप्रयोगस्यानुपपत्तेः तदोदने भोजनकर्मताविरहात्, गगने च दर्शनकर्मताविरहाच्च । एवं यत्रौ-दनकर्मकभोजनं भवतु इतीच्छा तद्भोजनमपि देवाद्विषकर्मकं तत्र विषं बुभुक्षते इत्यादिप्रयोगप्रसङ्गाच्च विषे भोजनविषयत्वरूपकर्मत्वसत्त्वात् । वस्तुतस्तु धात्वर्थविशेष्यकेच्छा सन्प्रत्ययेन बोध्यते तत्कर्मत्वमेव द्वितीया-र्थः, तत्कर्मत्वं च धात्वर्थकर्मतया तद्विषयत्वरूपं, तच्च स्वीयधात्वर्थविषयतानिरूपितकर्मत्वविषयतानिरू-पितविषयतारूपमिति यावत् । यदोदनकर्मकभोजनमप्रसिद्धं तत्रौदनं बुभुक्षते इति प्रयोगनिर्वाहः, ओदने भोजनकर्मताविरहेऽपि भोजनविषयतानिरूपितकर्मताविषयतानिरूपितविषयतारूपेच्छाकर्मतायास्तत्रानपायात्। गगनं दिदृक्षते इति प्रयोगनिर्वाहश्च गगनादौ दर्शनकर्मताविरहेऽपि दर्शनविषयतानिरूपितकर्मविषयतानिष्ठवि-षयतानिरूपितविषयतारूपेच्छाकर्मताया गगनेऽबाधात् । एवं विषं बुभुक्षते इति प्रयोगवारणं च विषे भोज-नकर्मतासत्त्वेऽपि भोजनविषयतानिरूपितकर्मताविषयतानिरूपितविषयतारूपेच्छाकर्मतायास्तत्र बाधात् । एत-न्मते गृहं तिष्ठासतीतिप्रयोगवारणं सुकरम्, यन्मते इच्छाविषयत्वरूपकर्मत्वं तन्मते गृहकर्मताकस्थितिर्भव-तु इतीच्छामादाय गृहं तिष्ठासतीति प्रयोगापत्तेरिति चेन्न ।

स्वीयधात्वर्थविषयताविशिष्टकर्मविषयतानिरूपिताविषयत्वरूपं कर्मत्वं बोध्यम् । वै० स्वनिरूपितत्वस्वा-श्रयनिरूपकनिष्ठत्वोभयसं० । तथाच प्रत्यक्षपरिकलितविषयताविशिष्टबोधनिष्ठविषयताशालिबोधविषयकेच्छा-वन्तस्तर्करसिका इति बोधः । तत्र च विशिष्टवैशिष्ट्यावगाहिबोधमर्यादया प्रत्यक्षपरिकलितत्वस्य समा-नकालीनत्वसम्बन्धेन द्वितीयार्थेच्छाविषयत्वे पारतन्त्र्येण भानेऽपि अनुमानजन्यबोधविषयतासमानकालीन-त्वं न प्रत्यक्षविषयतायां लभ्यते, अपि तु इच्छाविषयतासमानकालीनत्वमेवेति कथं विरोधासङ्गतिपरिहारस-म्भवः इत्याभिप्रायेण मथुरानाथतर्कवागीशैः सन्प्रत्ययार्थो न विवक्षित इत्युक्तमिति वदन्ति ।

क्षपरिकलितमप्यर्थं अनुमानेन बुभुत्सन्ते तर्करसिकाः, नहि करिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातार' इति वाच-स्पतिवचनयोरविरोधः, अनुमित्सातद्विरहाभ्यां तदुपपत्ते-रिति चेन्न । सन्देहवत्परामर्शपूर्वं सिषाधयिषाया अदृ-ष्टाभावात् योग्यतायाश्चाऽनिरूपणात् ।

ननु तत्रापि पुनरनुमित्सा ततः परामर्शान्तरं स्मरणात्मकाद्वा परामर्शा-दनुमितीष्टसाधनताविषयकादनुमित्सा ततोऽनुमितिरिति फलबलात्कल्पनीयमि-

मानजन्यो बोधस्तदिच्छावन्त इत्यर्थः । तेनोपजातप्रत्यक्षविषयत्वदशा-यामेवाऽनुमितिविषयत्वलाभान्न वचनयोर्विरोधस्याऽसङ्गतिरिति ध्येयम् ।

तत्रापि—अनुमित्सानाशस्थलेऽपि । पुनरिति । उत्पन्नपरामर्शानन्तर-मित्यर्थः । ननु पुनरनुमित्सार्थं अनुमितीष्टसाधनताज्ञानस्य पूर्वमपेक्षणात्त-नैव प्राक्तनपरामर्शनाशात्कुतस्तत्रानुमितिः स्यादत आह—ततः परामर्शान्तर मिति । ततोऽनुमितिरित्यग्रेऽन्वयः। इष्टसाधनताज्ञानपरामर्शयोः पृथक्कल्पने-गौरवादाह स्मरणात्मकेति । विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य साक्षाद्धेतु-तया तादृशविशिष्टपरामर्शार्थं विशेषणज्ञानकल्पने गौरवमपि नास्तीत्या-वेदयितुं स्मरणात्मकाद्वेत्युक्तम् । नचोक्तपरामर्शानन्तरमनुमित्सादशा-यामनुमितिप्रसङ्गः सामग्रीसत्त्वादिति वाच्यम् । सिषाधयिषारूपायाः प-क्षतायाः प्रागसत्त्वात्, इच्छासामग्र्या एव प्रतिबन्धकत्वाच्चेति भावः ।

अविरोधमुपपादयति अनुमित्सातद्विरहाभ्यामिति । तद्विरहः—सिषाधयिषा विरहः । तदुपपत्तेः—वचनयोरुपपत्तेः । अनुमित्सादशायां 'प्रत्यक्षपरिकलितमि'त्युक्तम्, अनु मित्साविरहदशायां 'नहि करिणी'त्युक्तम् । सिषाधयिषाया इति । सिषाधयिषाया अपि क्वचिदभावादित्यर्थः । यत्रादौ सिषाधयिषा ततो व्याप्तिस्मरणं लिङ्गसन्निकर्षश्च ततो लिङ्गज्ञानं ततः परामर्शः ततोऽनुमितिस्तत्रेत्यर्थः । योग्यतायाः—सिषाधयिषायोग्यतायाः, अनिरूपणात्—निरूपयितुमशक्यत्वात् । व्याप्तिस्मरणादिना पूर्वानुमित्सानाशस्थले अनुमितिमुत्पाद्य सिषाध यिषाविरहेऽपीत्यादिग्रन्थमवतारयति नन्विति । अनुमित्सानाशस्थलेऽपि परामर्शपूर्वमित्या दौ योज्यम् । अनुमित्सा—अनुमित्सान्तरमित्यर्थः । पूर्वं—अनुमित्सायाः पूर्वं परामर्शानन्त रमिति यावत्, तेनैव—इष्टसाधनताज्ञानेनैव । इच्छाजननसमकालमित्यध्याहार्यम् । यद्यप्यत्र परामर्शानन्तरं फलेच्छा तत इष्टसाधनताज्ञानं ततोऽनुमित्सेति फलेच्छाया एव परामर्शनाशक त्वात्तेनैवेत्यसङ्गतम्, तथापि तेनैवेत्यत्र तृतीयार्थः प्रयुक्तत्वम्, तच्च अध्याहार्यं इच्छाजननेऽ न्वितम्, तथाच परामर्शानन्तरोत्पन्नेष्टसाधनताज्ञानप्रयोज्येच्छाजननाधिकरणकाले परामर्शस्य-विनाशादित्यर्थः । तच्चेष्टसाधनताज्ञानात् प्राक् पूर्वं वा फलेच्छया निर्वहतीति बोध्यम् । व-स्तुतस्तु इष्टसाधनताज्ञानस्येत्यत्र इष्टसाधनताज्ञानपदमिच्छाजनकज्ञानपरम्, तथाच फलेच्छा-

कल्पनीयमिति। न चैतावतापि प्रत्यक्षादिभिन्नं वह्निज्ञानं जायतां वह्न्यनुमितिर्जायतामित्यादिरूपाणामनुमित्साव्यक्तीनामनुगतरूपविरहात्कारणत्वासम्भव इति वाच्यम्। यद्यनुमित्सासत्त्वे एव यत्पक्षकयत्साध्यकानुमितिस्तत्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैव तत्पक्षकतत्साध्यकानुमितौ अनुमित्साया हेतुत्वसम्भवादिति भावः।

यत्तु यत्पक्षकयत्साध्यकानुमितिनिवर्त्यानुमित्सात्वेनैव तत्पक्षकतत्साध्यकानुमितौ हेतुत्वमिति। तन्न। तादृशानुमितित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्योक्तौ अशाब्दज्ञानं जायतामित्याकाराया अनुमित्साया असंग्रहापत्तेः, तस्यामशाब्दज्ञानत्वेन प्रतिबन्धकत्वात्, प्रकृतपक्षसाध्यकानुमितिनिष्ठप्रतिबन्धकतामात्रस्योक्तौ च समूहालंबनतादृशप्रतिबध्यतामादाय घटाद्यनुमित्सायामतिव्याप्त्यापत्तेरिति ध्येयम्।

---

जनकं फलज्ञानमेव तत्पदेन विवक्षितम्, तथा च फलज्ञानेन फलेच्छाकाले परामर्शविनाशादित्यर्थ इति ध्येयम्।

**यद्यदनुमित्सासत्त्वे इति**। ननु यद्यदनुमित्सासत्त्वे यत्पक्षकयत्साध्यकानुमितिस्तत्तदनुमित्साकूटत्वाश्रयत्वेनैव हेतुत्वमस्तु किं नञ्द्वयोपादानेन, कूटत्वाश्रयत्वं च स्वरूपसम्बन्धेन बोध्यमिति चेन्न। यत्र साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्च पक्षः पक्षे साध्यानुमितिः तद्व्याप्यानुमितिश्चेष्टसाधनमिति ज्ञानं, ततः पक्षे साध्यानुमितिस्तद्व्याप्यानुमितिश्च जायतामितीच्छा, ततः पक्षः साध्यवान् साध्यव्याप्यवांश्चेत्यनुमितिः, तत्र तदनन्तरं पुनः साध्यानुमितिप्रसङ्गवारणाय स्वविषयसिद्ध्यनुपहितत्वं तत्तदिच्छायां विशेषणं देयम्, एवं च विशिष्टस्य शुद्धादनतिरिक्ततया उक्तेच्छाया अपि उत्पत्तिक्षणावच्छेदेन स्वविषयसिद्ध्यनुपहिततया स्वविषयसिद्ध्यनुपहितत्वविशिष्टतत्तदिच्छाकूटत्वाश्रयशुद्धेच्छायाः प्रथमानुमित्युत्पत्तिक्षणेऽपि सत्त्वादनुमित्यापत्तेर्दुर्वारत्वात्, नञ्द्वयोपादाने तु स्वविषयसिद्ध्यनुपहितत्वविशिष्टतदिच्छाविरहस्यैव प्रथमानुमितिक्षणे सत्त्वात्तदभावविरहान्नापत्तिरिति ध्येयम्।

**यत्त्विति। तादृशेति**। साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालीत्यर्थः। **अशाब्दज्ञानत्वेन प्रतिबन्धकत्वात्**—अनुमितित्वावच्छिन्नत्वविरहादिति यावत्। **समूहालम्बनतादृशप्रतिबध्यतामादायेति**। उदासीनघटादिविषयकसमूहालम्बनानुमितिनिष्ठघटानुमितित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतामादायेत्यर्थः। अथात्र साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशाल्यनुमितित्वव्यापकप्रतिबन्धकतानिवेशनैवाऽशाब्दज्ञानेच्छानिरूपितप्रतिबन्धकतायां तादृशानुमितित्वव्यापकत्वसत्त्वेन तत्प्रतिबध्यतामादाय तादृशेच्छासङ्ग्रहः, घटानुमित्साप्रतिबन्धकतायां तादृशानुमितित्वव्यापकत्वविरहात् घटानुमित्सायां नातिव्याप्तिरिति चेन्न। तदनुमितिर्जायतामितीच्छायामव्याप्तेः तादृशानुमित्सां प्रति तद्व्यक्तित्वेनैव प्रतिबन्धकतया प्रतिबन्धकतायां तादृशानुमितित्वव्यापकत्वविरहात्।

अथ तादृशानुमितित्वव्याप्यत्वं प्रतिबन्धकतायां निवेशनीयम्, तच्च पक्षतावच्छेदका-

वच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशून्यानुमितिवृत्तिप्रतिबन्धकताभिन्नप्रतिबन्धकत्वम्, तथाच तादृशप्रतिबन्धकतानिवेशेनैव तद्व्यक्तिविषयकेच्छासङ्ग्रह इति । न च पर्वतेऽनुमितिर्जायतामितीच्छायां, वह्न्यनुमितिर्जायतामितीच्छायां चाऽव्याप्तिः, तत्प्रतिबन्धकतायाः तादृशविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशून्यपर्वतो घटवान् भूतलं वह्निमद् इत्याद्यनुमितिवृत्तितया तद्भिन्नत्वविरहादिति वाच्यम् । तादृशानुमितिवृत्तिप्रतिबन्धकतायां पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्वानवच्छिन्नत्वे सति साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वानवच्छिन्नत्वनिवेशात् वह्न्यनुमितिर्जायतामितीच्छाया वह्निप्रकारकानुमितिमात्रस्यैव विरोधितया वह्नित्वावच्छिन्नप्रकारताशाल्यनुमितित्वेन प्रतिबन्धकताया वाच्यतया पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताया अपि तादृशप्रकारतात्वेनाऽवच्छेदकतया तदनवच्छिन्नत्वविरहात् । पर्वते अनुमितिर्जायतामितीच्छाया पर्वतत्वावच्छिन्नविशेष्यताशाल्यनुमितिमात्रस्यैव विरोधितया पर्वतत्वावच्छिन्नविशेष्यताशाल्यनुमितित्वेन प्रतिबन्धकताया वाच्यतया वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताया अपि तादृशविशेष्यतात्वेन प्रतिबन्धकतावच्छेदकतया तादृशप्रतिबन्धकतायास्तदनवच्छिन्नत्वविरहात् । न चाऽशाब्दज्ञानं जायतामितीच्छायामव्याप्तिः, एतत्प्रतिबन्धकतायां तादृशप्रकारताशून्यानुमितिवृत्तितया तदन्यत्वविरहादिति वाच्यम् । तादृशानुमितिवृत्तिप्रतिबन्धकतायां यत्किञ्चिद्विषयकत्वावच्छिन्नत्वनिवेशात् तादृशप्रतिबन्धकतायां यत्किञ्चिद्विषयकत्वावच्छिन्नत्वविरहेण तदन्यत्वसत्त्वात् । न च तथापि घटानुमितिरूपव्यक्तिर्जायतामितीच्छायामतिव्याप्तिः तत्प्रतिबन्धकतायां विषयत्वावच्छिन्नत्वविरहेण तद्भिन्नत्वसत्त्वादिति वाच्यम् । भिन्नप्रतिबन्धकतायां साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशाल्यनुमितिवृत्तिधर्मावच्छिन्नत्वनिवेशात् तादृशप्रतिबन्धकतायां तादृशधर्मावच्छिन्नत्वविरहेणातिव्याप्तिविरहादिति चेन्न ।

यत्र वह्निविधेयकानुमितिर्घटविधेयकानुमितिर्जायतामितीच्छा केवलसिद्ध्यात्मकवह्निव्याप्यवत्तापरामर्शः तत्र तादृशप्रतिबन्धकताभिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताश्रयनिरुक्तेच्छासत्त्वाद् वह्न्यनुमित्यापत्तेः । न च तादृशपरामर्शसत्त्वे तादृशेच्छादशायामनुमितेरलीकतया न दोष इति वाच्यम् । यत्र केवलवह्निव्याप्यवत्तापरामर्शानन्तरं तादृशोभयविधेयकानुमितीच्छा वह्निव्याप्यधूमवान् घटव्याप्ययत्किञ्चिद्वांश्चेति समूहालम्बनपरामर्शादुभयविधेयकानुमितिस्तत्र समूहालम्बनपरामर्शक्षणेऽनुमित्यापत्तिः । न च तत्रापि यत्र धूमपरामर्शोत्तरं धूमालोकोभयलिङ्गकानुमितिर्जायतामितीच्छा तत्रोभयलिङ्गकपरामर्शोत्पत्त्याऽनुमितिः तत्र तदुभयलिङ्गकपरामर्शोत्पादक्षणे धूमलिङ्गकानुमित्यापत्तिः, अग्रिमानुमित्यनुरोधेन तादिच्छाव्यक्तेरप्युत्तेजकत्वादिति वाच्यम् । तथासति समूहालम्बनपरामर्शविशिष्टतदिच्छाव्यक्तित्वेनैवोत्तेजककोटौ प्रवेशादिति ।

वस्तुतस्तु यत्र वह्निमान् वह्निव्याप्यधूमवान्पर्वत इति द्रव्यत्वव्याप्यवांश्चेति समूहालंबनपरामर्शः तत्रानुमितिर्जायतामितीच्छादशायां द्रव्यत्वानुमितिर्भवति वह्न्यनुमितिर्न जायते

सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात्, स्वकारणाधीनतृतीयलिङ्गपरामर्शबलेनाऽनपेक्षितानुमानदर्शनाच्चेति ।

इति मूलपक्षतापूर्वपक्षः ।

---

स्यत आह सिषाधयिषेति ।

न चानुमितिजनिकेच्छैव पक्षता, सा च क्वचित्स्वनिष्ठैव सर्वत्रेश्वरनिष्ठैव सुलभेति वाच्यम् । तस्याः नित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसंगात् । न

---

१२०

मिश्रमतमाशंक्य निषेधति नचेति । वाच्यमित्यन्वयः । अनुमितिजनिकेति । तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तादृशानुमितिजनिकेच्छैव पक्षतेत्यर्थः । विषयितया धात्वर्थान्वयिन एव सनः समानकर्तृकत्वस्य तन्त्रत्वादिति

---

तत्र वह्न्यनुमित्यापत्तिः अतस्तत्तद्व्यक्तित्वेनैवेच्छायाः प्रवेश आवश्यक इति संक्षेपः । मूले-स्वकारणाधीनेति । स्वं-तृतीयलिङ्गपरामर्शः, तस्य कारणं व्याप्तिज्ञानादिः तदधीनेत्यर्थः । तृतीयलिङ्गपरामर्शेन—तृतीयक्षणोत्पन्नलिङ्गपरामर्शेन । अनपेक्षितेति । अनुभुत्सेन शत्रुसंपदादेरित्यर्थः । मदीयशत्रुः संपन्नः हस्तिघोटकत्त्वात्त्वादित्यनुमानदर्शनादित्यर्थः । एवं च व्यतिरेकव्यभिचारेण न सिषाधयिषायाः अनुमितौ कारणत्वसंभव इति ।

मिश्रमतमिति । तच्च विषयनिष्ठप्रत्यासत्त्यैव अनुमित्सायाः हेतुत्वमिति । तत्पुरुषीयेति । ननु अनुमितित्वावच्छिन्नं प्रति अनुमितिजनिकेच्छात्वेनैव हेतुत्वमस्तु किं तत्पुरुषीयत्वतत्पक्षकत्वादिनिवेशेन । न च घटानुमित्सादशायां वह्न्यनुमित्यापत्तिरिति वाच्यम् । तत्पुरुषीयत्वाद्युपादानेऽपि ईश्वरेच्छामादाय तत्रापत्तितादवस्थ्यात् इति चेन्न । तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तादृशानुमित्यव्यवहितप्राक्क्षणवृत्तित्वविशिष्टेच्छात्वेन हेतुत्वोक्तौ मन्मते आपत्त्यनुदयासंभवात् । एवं च तत्पुरुषीयत्वानुक्तौ यदा मैत्रस्य वह्न्यनुमितिजायतामितीच्छा सिद्ध्यात्मकपरामर्शश्च, चैत्रस्य च केवलसिद्ध्यात्मकपरामर्शः तत्र चैत्रस्यानुमित्यापत्तिः, एवं तत्पक्षकत्वानुपादाने पर्वते वह्न्यनुमितीच्छा पर्वते महानसे च सिद्ध्यात्मकपरामर्शः तत्र महानसे वह्न्यनुमित्यापत्तिः, एवं तत्साध्यकत्वानुक्तौ यत्र पर्वते वह्न्यनुमितिर्जायतामितीच्छा वह्नेः सिद्ध्यात्मकपरामर्शः द्रव्यत्वस्य सिद्ध्यात्मकपरामर्शश्च तत्र द्रव्यत्वानुमित्यापत्तिः, तथाचेच्छानिष्ठविषयितासंबन्धेन तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितौ तादृशानुमितिजनिकेच्छा तादात्म्येन कारणम् । यदा कार्यतावच्छेदकसंबन्धस्तादात्म्यम्, तदा कारणतावच्छेदकसंबन्धो विषयतैवेति ध्येयम् । यत्तु कार्यतावच्छेदकः कारणतावच्छेदकश्च संबन्धो विषयतैवेति, तन्मते अनुमितिर्जायतामितीच्छाया असमवायित्वेति । दीधितौ इच्छैव-समानाधिकरणव्यधिकरणसाधारणेच्छामात्रमेव । स्वनिष्ठैव-अनुमित्सुनिष्ठैव । ईश्वरनिष्ठैवेति । ननु समानकर्तृकयोः पूर्वकाले इत्यनुशासनबलेन, अनुमित्याश्रयत्वस्य च्छाश्रयत्वयोर्वैयधिकरण्यादत आह विषयितया धात्वर्थान्वयिन एवेति । ननु जनकत्वा-

च तस्यास्तदानीं न तज्जनकत्वम्, तद्धि न योग्यता, अनपायात्, न च तदुपधानम्, अनुमितेः पूर्वं तदभावात्, न च तत्सामग्रीसमवधानम्, कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसंगात् शेषवैयर्थ्यात्, तदानीं सामग्रीविर-

---

भावः।सुलभेति। तथाच घनगर्जिताद्यनुमितौ न व्यभिचार इति भावः। तस्याः—ईश्वरेच्छायाः, तदानीं—सिद्धिदशायाम्, न तज्जनकत्वम्—तादृशानुमितिजनकत्वम्, तद्धि—तादृशानुमितिजनकत्वं हि, अनपायात्—स्वरूपतः सत्त्वात्। न च तत्पुरुषीयतादृशानुमितिं प्रति तत्पुरुषीयतादृशानुमित्यव्यवहितप्राक्क्षणवृत्तित्वविशिष्टेच्छात्वेन हेतुत्वात्तदानीं स्वरूपयोग्यत्वमेव नास्तीति वाच्यम्।कार्याव्यवहितपूर्वत्वादिना हेतुत्वस्याग्रे सार्वभौमनिरुक्तौ निरस्यत्वादिति भावः। तदुपधानम्—तादृशानुमितिविशिष्टत्वम्। तदभावादिति तथाचाऽसत्यामपि सिद्धौ अनुमितिर्न स्यात्, प्रत्युत एकानुमित्यनन्तरमेवाऽनुमित्यन्तरं स्यादिति भावः।

तत्सामग्रीति। तत्पुरुषीयतत्पक्षकतत्साध्यकानुमितिसामग्रीविशिष्टत्वमेव तादृशानुमितिजनकत्वमित्यर्थः। प्रसङ्गादिति। तथाच परामर्शादिकं हेतुर्न स्यात् अवच्छेदकत्वादिति भावः। इष्टापत्तौ बाधकमाह शेषेति। तादृशानुमितिसामग्रीविशिष्टत्वेनैव हेतुत्वसंभवादिच्छाभागस्य वैयर्थ्यादित्यर्थः। न चाऽत्र सामग्रीपदेनेच्छेतरकारणस्तोम एव धर्त्तव्यस्तथाच सिद्धिकालीनपरामर्शस्यापि तादृशस्तोमविशिष्टत्वाचतोऽनुमितिवारणार्थमेवेच्छाभागः प्रवेशनीय इति वाच्यम्। सिद्धिदशायामिच्छान्यस्याऽनुमितिकारणस्तोमस्याऽसत्त्वात, अन्यथा तादृशस्तोमविशिष्टाया भगवदिच्छायाः तदानीमपि सत्त्वादिच्छानिवेशोऽपि अनुमितेर्दुर्वारतापत्तेः, घनग-

---

र्जितान्वयिन इत्यर्थः। तन्त्रत्वात्—प्रयोजकत्वात। दीधितौ—पक्षताप्रसङ्गात्, तथाच सिद्ध्यनन्तरमनुमित्यापत्तिरित्यर्थः। योग्यता—स्वरूपयोग्यता। स्वरूपतः सत्त्वादिति। कारणतावच्छेदकधर्मरूपयोग्यतायाः सर्वदैव सत्त्वादित्यर्थः। तादृशानुमितिविशिष्टत्वमिति। वै० एकक्षणावच्छिन्नैककालवृत्तित्वसंबन्धेन। स्वाव्यवहितपूर्वत्वसंबन्धेन अनुमितिवैशिष्ट्योक्तौ पूर्वानुपपत्तिवारणसंभवात् प्रत्युतेत्युक्तम्। स्वाव्यवहितपूर्वत्वादिना हेतुत्वस्याऽग्रे सार्वभौमनिरुक्तौ निराकृतत्वमिति यदि विभाव्यते, तदा अनुमित्युपलक्षितेच्छात्वेन कारणत्वोक्त्या पूर्वानुपपत्तिवारणसंभवे प्रत्युतेति। एकानुमित्यनन्तरमिति। तदेव फलविशिष्टेच्छासंवलनादिति भावः। ननु अनुमितिजनकतावच्छेदका यावन्तो धर्माः प्रत्येकं तदवच्छिन्नकूटविशिष्टत्वरूपतत्सामग्रीसमवधानमेवेच्छाविशेषणं देयम्, तच्च कार्याव्यवहितप्राक्क्षणे एव इति नातिप्रसङ्ग इत्यत आह दीधितौ—तत्सामग्रीसमवधानमिति। कारणमात्रस्येति। तथाच परामर्शादिसत्त्वदशायामीदृशपक्षताविरहादेवाऽनुमितिवारणसंभवात् परामर्शादीनां हेतुताविलयप्रसङ्ग इति भावः। सामग्रीविशिष्टत्वेनैवेति। ननु सामग्री-

उच्यते सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति स पक्षः । तेन सिषाधयिषाविरहसहकृतं साहमयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च ।

इति दीधितौ पक्षतापूर्वपक्षः ।

---

र्जितायनुरोधेन तादृशेच्छायाः सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वासंभवादिति भावः । ननु इच्छाभागो न देयः तादृशानुमितिसामग्रीविशिष्टत्वेनैव हेतुत्वं वाच्यम्, तथैवाऽनुमितेस्तायाः सर्वत्र हेतुत्वसंभवादित्यत आह तदानीमिति । सिद्धिदशायां यत्कारणाभावप्रयुक्तः सामग्रीविरहस्तत्कारणस्येत्यर्थः । वक्तव्यत्वापातादिति । तथाचाऽवश्यकत्वात्सैव पक्षता युक्तेति भावः ।

इति पक्षतापूर्वपक्षः ।

---

विशिष्टेच्छात्वेनेत्यर्थः । ननु अनुमितिसामग्रीत्वेनैव हेतुत्वसंभवे वैशिष्ट्यस्यापि वैयर्थ्यं कथन्नोक्तमिति चेन्न । तथासति अनन्तकार्यकारणभावप्रसङ्गात्, सामग्रीपदेन एककारणविशिष्टापरकारणस्यैव बोधनेन तत्कारणविशिष्टापरकारणस्य सामग्रीत्वेन हेतुत्वम् उत अपरकारणविशिष्टतत्कारणस्येति विनिगमनाविरहात्, सामग्रीविशिष्टत्वेन हेतुतोक्तौ तु सर्वेषां कारणानामेकत्र द्वयमिति न्यायेन विशेषणत्वाच्च विनिगमनाविरहावकाश इति । वस्तुतस्तु इच्छाभागवैयर्थ्यकथनेन सकलानुपयुक्तभागवैयर्थ्यस्योक्तत्वादिति ध्येयम् ।

गंगायां पक्षतापूर्वपक्षव्याख्या ।

सिषाधयिषाविरहसहकृतेति । सिषाधयिषाविरहविशिष्टेत्यर्थः । "साधकप्रमाणं" साध्यनिश्चयः । तथाच सिषाधयिषाविरहसहकृतं यत्साधकप्रमाणं तस्याऽभावो यत्रास्तीत्यर्थः । साध्यनिश्चये सिषाधयिषाविरहविशिष्टत्वविशेषणस्य फलं दीधितिकृद्वक्ष्यति(१) । सिषाधयिषाविरहस्तु समवायसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः, तेन कालिकादिसम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाविरहस्य सर्वदैवात्मनि सत्त्वेऽपि न सिषाधयिषाविरहद्वयमयसत्त्वेऽनुमित्यनुपपत्तिः । सिषाधयिषाविरहवैशिष्ट्यमेकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन, फलन्तु वक्ष्यति । साध्यनिश्चयाभावश्च समवायसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । यत्र—आत्मनि, सः—आत्मा । न च सिषाधयिषाविरहविशिष्टसिद्धेः समवायेनाऽऽत्मनि सत्त्वेऽपि पक्षे तदभावसत्त्वात्पक्षतापत्तिरिति वाच्यम् । विशेष्यतासम्बन्धेन साध्यनिश्चयस्यैव पर्वते सत्त्वात्, तथाचोद्देश्यतासम्बन्धेनाऽनुमितिं प्रति विशेष्यतासम्बन्धेन सिद्धिः प्रतिबन्धिका, विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकसिद्ध्यभावः कारणमिति फलितम् । विशिष्टा-

---

(१) यत्राऽनुमितिस्तानन्तरं सिद्ध्यात्मकः परामर्शः ततोऽनुमितिः तत्र पक्षतासम्पत्तये इत्यादिनेति भावः । घनगर्जितादौ पक्षतासम्पत्तये विशेष्यदलमिति ध्येयम् ।

धकप्रमाणं यस्मास्ति स न पक्षः । यत्र साधकप्रमाणे सति असति वा सिषाधयिषा, यत्र चोभयाभावस्तत्र विशिष्टाभावात्पक्षत्वम् । यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वम्, तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम् ।

---

दी सिषाधयिषेति । यत्रानुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्टपक्षस्मरणम्, अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा, अनुमित्सा पूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात्साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरं चानुमितिस्तत्र पक्षतासंपत्तये सहकृतान्तं साधकमानविशेषणम् ।

---

ननु क्रमोत्पन्नानां सिद्धीच्छापरामर्शानां युगपदसत्त्वात्सहकृतान्तदलं व्यर्थमत आह यत्रेति । पक्षस्मरणमिति । तदनन्तरं चानुमितिरित्यग्रेऽन्वयः । विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य हेतुत्वात्तदपेक्ष्य गौरवं नास्तीत्याशयेन स्मरणपर्यन्तानुधावनम् । अत्रानुमित्सार्थमनुमितीष्टसाधनताज्ञानान्तरं कल्प्यमतो लाघवादाह अनुमितीत्यादि । तादृशस्मरणादिति । साध्यतद्व्याप्यविशिष्टपक्षस्मरणादित्यर्थः । अनुमित्सेति । तदनन्तरं चानुमितिरित्यग्रेणान्वयः । स्मृत्यात्मकसिद्धौ सहकृतान्तविशेषणस्य प्रयोजनमुक्त्वाऽनुभवात्मकसिद्धौ तदाह पूर्वकालेत्यादिना । ज्ञानेच्छयोर्यौगपद्यात्तनुमित्साजन्मक्षणे विशि-

---

भावस्याऽनुमितिजनकत्वे अन्वयव्यतिरेकौ दर्शयति तेनेति । अस्य ऽनुमितिजनकत्वेनेत्यर्थः । व्यतिरेकं दर्शयित्वाऽन्वयं दर्शयति यत्रेति । साधकप्रमाणे—साध्यनिश्चये, तथाच यत्र सिद्धिः सिषाधयिषा च तत्र विशेषणाभावप्रयुक्तो विशिष्टाभावः, यत्र सिद्धिर्नास्ति सिषाधयिषा चाऽस्ति तत्रोभयाभावप्रयुक्तो विशिष्टाभावः, यत्र न सिद्धिर्नापि सिषाधयिषा तत्र विशेष्याभावप्रयुक्तो विशिष्टाभाव इति भावः । पक्षत्वस्य—पक्षपदवाच्यत्वस्य, भेदजनकत्वं—भेदसाधकत्वम् । तदितराऽप्रसिद्धेरिति भावः । प्रवृत्तिनिमित्तं—व्यवहारनिमित्तमित्यर्थः । केचित्तु पक्षपदप्रवृत्तिनिमित्तमित्यस्य अनुमितौ कारणमित्यर्थ इत्याहुः । तथाचाऽनुमितौ सिषाधयिषाविरहविशिष्टसिद्ध्यभावः कारणम्, स एव पक्षतेति संक्षेपः ।

सिद्ध्युत्तरक्षणे सिषाधयिषाधीनानुमितेरुपपादनाय सहकृतान्तविशेषणमुपात्तम्, तच्च तदैवोपपद्यते यदि सिद्धिसिषाधयिषापरामर्शानां त्रयाणां अनुमित्यव्यवहितप्राक्क्षणेऽवस्थानं सम्भवेत्, तच्चाऽसम्भवि, विभुसमवेतयोग्यावशेषगुणानां द्विक्षणस्थायितया त्रयाणां युगपदनवस्थानात्, यत्राऽपेक्षाबुद्ध्यात्मकस्य परामर्शस्य साध्यनिश्चयस्य वा प्रथममुत्पादस्तत्रैव तृतीयक्षणे त्रयाणामवस्थानमिति तु न सम्भवदुक्तिकम्, अपेक्षाबुद्धेः त्रिक्षणावस्थायित्वं स्वीकुर्वाणैस्तदव्यवहितोत्तरक्षणे विशेषगुणोत्पत्त्यनभ्युपगमादित्याशङ्कते नन्विति ।

२) सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिका अनुमितिवि-

षणस्मरणस्यासम्भवादुत्तरक्षणे तत्स्मरणे तु परामर्शदशायामनुमित्साना-शात्तत्र पक्षतैव नोपेयते इत्यत उक्तम्-पूर्वकालोत्पन्नेति। अनुमित्सापू-र्वकालोत्पन्नेत्यर्थः। अनुमित्सायाः पूर्वं पक्षसन्निकर्षेऽनुमित्सामवधूय व ह्न्यादिसाध्यकतद्व्याप्यवत्त्वेन पर्वतादेः प्रत्यक्षमेव स्याद् बहिरर्थलौकिक-प्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वादनुमित्सानन्तरं सन्निकर्षे च परामर्श-दशायां नानुमित्सायाः सत्त्वमत उक्तम्-अनुमित्साकालेति। इदमुपलक्षणम्-यत्रानुमितीच्छासाधनताविषयकस्य साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षान-न्तरमनुमित्सा तत्रापि पक्षतासम्पत्त्यर्थं सहकृतान्तं बोध्यम्। न चाऽनुमि-त्सादशायामपि घटाद्यवच्छेदेन तदभावस्याऽऽत्मनि सत्त्वात्पक्षताभंगप्रसं-गः। देशानवच्छिन्नविशेषणतयैव सामानाधिकरण्यरूपस्याऽनुमित्साप्रि-रहवैशिष्ट्यस्योक्तत्वादिति भावः।

ननु सिद्धिगोचरेच्छामात्रस्य सिषाधयिषात्वे द्रव्यत्वेन द्रव्यक्षानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शाद्वह्न्यनुमितिः स्यादत आह सिषाधयिषेति। तत्साध्येति। प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयताक-त्वप्रकारिकेत्यर्थः, तेन वन्हिविशिष्टह्रदाद्यप्रसिद्धावपि ह्रदो वन्हिमानि-त्याद्यनुमितौ न पक्षताहानिः, न वा पाषाणमयत्वेन पर्वते तेजस्त्वेन वह्न्य-नुमितिर्जायतामितीच्छायामपि सिद्धिदशायां पर्वतो वन्हिमानित्यनुमितिः, तदिच्छायाः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नविधेय-ताद्यवगाहित्वादिति भावः। वन्हिमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छा-वारणार्थमाह अनुमितिविषयिणीति।

प्रकृतेति। तथाच प्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नवि-धेयतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यताकत्वप्रकारिकानुमितीविशेष्यिकेति यावत्। अत्र ( विधेयतात्वेनाऽनिवेशे ) प्रकृतसाध्यनिष्ठप्रकारता निरूपितत्वोक्तौ सिद्धिसत्त्वे वह्निमत्प-र्वते घटानुमितिर्जायतामितीच्छासत्त्वे वह्निसाध्यकानुमित्यापत्तेः। तेन--निरूप्यनिरूपकभावा-पन्नपक्षसाध्यविषयतानिवेशनेन। नचैवं वह्निप्रकारकपर्वतविशेष्यकानुमितिर्जायतामितीच्छा याः पृथगुत्तेजकत्वापत्तिरिति वाच्यम्। प्रत्यक्षसाधारणधर्मितावच्छेदकावृत्तिप्रकारताया एव विधेयतारूपत्वेन व्यवस्थाप्यायाः तादृशविधेयतात्वेनैव उत्तेजककोटिप्रवेशादिति। वह्निवि-शिष्टमहानसविषयकानुमितिर्जायतामितीच्छाबलात् सिद्धिसत्त्वे पर्वतो वह्निमानित्यनुत्पादात्त-त्पक्षेति। प्रकृतपक्षतावच्छेदकावच्छिन्नेत्यर्थः। पक्षतावच्छेदकसाध्यतावच्छेदकयोः क्रमेण व्यावृती आह नवेति। इदमुपलक्षणम्-पर्वतत्वेन ह्रदादिगोचरतादृशेच्छायाः अनुत्तेजकत्वा-पत्तिश्चेति। एवं कालिकसम्बन्धेन वह्निविशिष्टपर्वतविषयकानुमितिर्जायतामितीच्छासत्त्वेऽपि सिद्धिकाले न संयोगेन वह्न्यनुमितिरिति द्रष्टव्यम्। यत्किञ्चिद्विषयकत्वप्रकारकत्वं तन्नेत्याऽपि

षयिणीच्छा । यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वे अ-

यत्किंचिदित्यादि । द्रव्यत्वेन द्रव्यगोचरज्ञानं जायतामिच्छायामपि वह्नेः सिद्ध्यात्मकपरामर्शादनुमित्यनुत्पादादित्यर्थः । एतेन ज्ञानं जायतामिती-च्छोत्तरं सिद्ध्युत्पादे वक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणादेव तदिच्छावारणम्, सिद्ध्युत्तरं च तादृशेच्छा न भवत्येव ज्ञानमात्रस्यैव ज्ञानत्वप्रकारकेच्छाविरोधित्वादिति प्रत्युक्तम् ।

यत्किञ्चिज्ज्ञानं जायतामित्यादीच्छावारणं सम्भवतीति यत्किञ्चिद्गोचरत्वप्रकारकेच्छानुधावनम्-दीधितौ । यत्किञ्चिद्गोचरमिति । अस्या अनागतसकलविषयकत्वेनाऽनुमितिविषयकत्वं बोध्यम् । द्रव्यत्वेन द्रव्यगोचरं ज्ञानं जायतामितीति । द्रव्यत्वनिष्ठावच्छेदकताक-द्रव्यनिष्ठविशेष्यताशालिज्ञानं जायतामित्यर्थः । ननु द्रव्यविषयकं ज्ञानं जायतामित्याकारक-द्रव्यत्वप्रकारकद्रव्यविशेष्यताशालिज्ञानेच्छामादायैव तदापत्तिसम्भवाद् द्रव्यत्वेन द्रव्यविषयक-ज्ञानविषयिणीच्छापर्यन्तानुधावनं सन्दर्भविरुद्धमिति चेन्न । तदिच्छाकारणीभूतस्य द्रव्यविषय-कज्ञानधर्मिकेष्टसाधनत्वप्रकारकज्ञानस्य द्रव्यांशे द्रव्यत्वप्रकारकतया विरोधित्वेन तादृशेच्छोत्प-त्त्यसम्भवात् । न च समवायेन द्रव्यत्वप्रकारताशालिज्ञानं जायतामितीच्छामादायैवापत्तिस-म्भवः, तत्र कारणीभूतस्य समवायेन द्रव्यत्वप्रकारताशालिज्ञानं मदिष्टसाधनमिति ज्ञानस्य निष्ठत्वसम्बन्धावच्छिन्नद्रव्यत्वप्रकारताकसमवायसम्बन्धावच्छिन्नप्रकारत्वनिष्ठविशेष्यताकतया विरोधित्वासम्भवेन तादृशेच्छोत्पत्तिसम्भवात्, समवायेन द्रव्यत्वप्रकारताशालिज्ञानं जाय-तामितीच्छां प्रति समवायसम्बन्धावच्छिन्नद्रव्यत्वप्रकारताशालिज्ञानस्यैव विरोधित्वादिति वाच्यम् । समवायेन द्रव्यत्वनिष्ठप्रकारताशालिज्ञानं मदिष्टसाधनमिति ज्ञाने प्रकारत्वांशे निष्ठ-त्वसम्बन्धेन द्रव्यत्ववत्त्वेन द्रव्यत्वस्य ज्ञानाद् द्रव्यत्ववत्त्वस्य च द्रव्येतरावृत्तित्वे सति निखिलद्र-व्यवृत्तित्वरूपतया तद्घटकद्रव्यांशे द्रव्यत्वस्य समवायेन भानात्तादृशेष्टसाधनताज्ञानस्यापि समवायेन द्रव्यत्वप्रकारकतया विरोधित्वेन तादृशेच्छोत्पत्त्यसम्भवात्, द्रव्यत्वनिष्ठावच्छेदक-ताकद्रव्यनिष्ठविशेष्यताशालिज्ञानं जायतामितीच्छापर्यन्तानुधावनम् । केचित्तु द्रव्यत्वेन ज्ञानं जायतामित्युक्तौ द्रव्यत्वलिङ्गकानुमितेरभ्रमनिबन्धनाऽन्यलिङ्गकानुमितेरप्रतिबन्धकत्वाभावेन वह्न्यनुमित्यनुत्पादनिर्वाहशंका स्यादतो द्रव्यपदमित्याहुः । तच्चिन्त्यम् ।

एतेन—यत्किञ्चिज्ज्ञानं जायतामितिग्रन्थेन द्रव्यत्वेन द्रव्यज्ञानं जायतामितीच्छाबोधनेन । त-दिच्छावारणमिति । ननु ज्ञानं जायतामितीच्छात्वावच्छिन्नं प्रति ज्ञानं मदिष्टसाधनमिति ज्ञा-नस्यकारणतया तज्ज्ञानस्यावश्यं पूर्वापेक्षणीयत्वेन विषयतासम्बन्धेनेच्छात्वावच्छिन्नं प्रति ता-दात्म्येन विषयस्य प्रतिबन्धकत्वेन ज्ञानं मदिष्टसाधनमिति ज्ञानमेव तादृशेच्छाप्रतिबन्धकमि-ति तादृशेच्छाया असम्भवात्कथं स्वविषयसिद्ध्यनुपहितत्वविशेषणोत्थापनं कृतमिति चेन्न । ज्ञानं जायतामितीच्छां प्रति इष्टसाधनत्वप्रकारकज्ञानत्वेन विरोधित्वं वाच्यम्, कारणीभूतज्ञानान्य ज्ञानस्यैव प्रतिबन्धकत्वात्, अन्यथा ज्ञानं जायतामितीच्छा कुत्रापि नोत्पद्येत, तथा चेष्टसाध-नताज्ञाने तादृशेच्छाप्रतिबन्धकत्वविरहेण तादृशेच्छासम्भवाद्, अतः स्वविषयसिद्ध्यनुपहितत्वे-त्याद्युक्तम् इति केचित् ।

नुमित्यनुत्पादात्, अनुमितित्वाऽप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते व-
ह्निज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च ।

---

ननु अनुमितिविषयत्वेन अनुमितिसाध्यक्तीनां प्रवेशे गौरवादनुमितित्व-
प्रकारिकेच्छैव प्रवेश्यतामत आह अनुमितित्वेति । सिद्ध्यात्मकपरामर्शोत्तरं
पर्वते वह्निज्ञानं जायतामितीच्छैव नोत्पद्यते सिद्धिविरोधित्वात्, सिद्ध्या-
त्मकपरामर्शपूर्वकालोत्पन्नायास्तादृशेच्छाया नानुमितावुपयोगः स्वविषय

---

तदसत् । सिद्ध्युत्तरं तादृशेच्छा न भवत्येवेत्याद्युत्तरग्रन्थविरोधात् । तत्र पर्वतो वह्निमान्
वह्निव्याप्यधूमवान् ज्ञानं मदिष्टसाधनमिति समूहालम्बनज्ञाने इष्टसाधनताज्ञानान्यज्ञानत्वविर-
हेण ज्ञानं जायतामितीच्छां प्रति प्रतिबन्धकत्वाभावाद्, अतो ज्ञानत्वावच्छिन्नविशेष्यतानिरू-
पितइष्टसाधनत्वप्रकारताविशिष्टज्ञानान्यज्ञानत्वेनैव तादृशेच्छाप्रतिबन्धकत्वं वाच्यम् । वै०
स्वनिरूपकत्वस्वभिन्नकिञ्चिद्धर्मावच्छिन्नप्रकारत्वानिरूपकत्वोभयसं, तथा चोक्तसमूहालम्बनज्ञाने
तादृशप्रकारताविशिष्टत्वं नास्ति, स्वनिरूपकत्वसत्त्वेऽपि स्वभिन्नवह्न्यादिप्रकारत्वानिरूपकत्व-
विरहादिति तज्ज्ञानस्य प्रतिबन्धकत्वेन तादृशेच्छायास्तदुत्तरक्षणेऽसम्भवाच्च तादृशग्रन्थवि-
रोध इति । केवलं ज्ञानं मदिष्टसाधनमिति ज्ञानस्य च तादृशप्रकारताविशिष्टज्ञानान्यज्ञानत्व-
विरहेण प्रतिबन्धकत्वासम्भवात् तदुत्तरक्षणे तादृशेच्छासम्भव इति तादृशविशेषणोत्थापन-
मिति । न च तत्रापि ज्ञानं मदिष्टसाधनं घटवद्भूतलमितिसमूहालम्बनज्ञानस्यापि धर्तुं श-
क्यतया तज्ज्ञाने तादृशप्रकारताविशिष्टज्ञानान्यज्ञानत्वस्य सत्त्वेन तादृशेच्छा न सम्भवतीति
वाच्यम् । यत्र स्थले केवलं ज्ञानं मदिष्टसाधनमिति ज्ञानं ततो ज्ञानं जायतामितीच्छा तत्स्थ-
लाभिप्रायेणैव स्वविषयसिद्ध्यनुपहितत्वविशेषणोत्थापनमिति(१) ।

गौरवादिति । अथात्राऽनुमितित्वप्रकारकत्वनिवेशे किं लाघवम्? न चानुमितिविष-
यकत्वप्रवेशे अनुमितेरनुमितित्वस्य चोभयोर्घटकत्वात्, अत्रानुमितित्वस्यैव घटकत्वेन लाघ-
वमिति वाच्यम् । अनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वेऽपि उल्लिख्यमानानुमितित्वजातेरनु-

---

(१) केचित्तु ज्ञानं जायतामितीच्छां प्रति इष्टसाधनताज्ञानान्यज्ञानत्वेनैव प्रतिबन्धकत्वम् उत्तरग्र-
न्थस्तु यत्र प्रथममिष्टसाधनताज्ञानं ततः सिद्ध्यात्मकपरामर्शः तदुत्तरक्षणे तादृशेच्छा न सम्भवति इष्टसा-
धनताज्ञानान्यसिद्ध्यात्मकपरामर्शरूपप्रतिबन्धकसत्त्वादित्येव सिद्ध्युत्तरं तादृशेच्छा न भवतीत्यस्याभिप्राय
इत्याहुः ।

नव्यास्तु ज्ञानं जायतामितीच्छां प्रति नेष्टसाधनताज्ञानं कारणं किन्तु ज्ञानविषयकद्वेषाभाव एव, तथाच
तादृशेच्छायाः पूर्वं द्वेषाभावसत्त्वेनेष्टसाधनताज्ञानस्याऽनपेक्षणीयत्वेन प्रतिबन्धकत्वविरहादतस्तादृशविशेषणोत्था-
पनमिति वदन्ति ।

वस्तुतस्तु तदिच्छापदेन संयोगसम्बन्धावच्छिन्नप्रकारताशालिज्ञानं जायतामितीच्छा वाच्या, तादृशेच्छां प्रति
संयोगसम्बन्धावच्छिन्नप्रकारत्वनिष्ठनिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितज्ञानत्वावच्छिन्नविशेष्यतावा-
च्छिन्नविशेष्यतानिरूपितेष्टसाधनत्वप्रकारताशालीष्टसाधनताज्ञानमेव हेतुः तादृशेष्टसाधनताज्ञाने संयोगसम्ब-
न्धावच्छिन्नप्रकारताशालिज्ञानत्वविरहान्न तस्य तादृशेच्छाप्रतिबन्धकत्वम् तेनैव रूपेण तां प्रति विषयस्य
प्रतिबन्धकत्वात्तथा च तादृशेच्छा सम्भवत्येवातः स्वविषयसिद्ध्यनुपहितत्वेत्यादीति ध्येयम् ।

सिद्ध्यनुपहितस्याभावादतः प्रत्यक्षाद्यतिरिक्तमित्युक्तम् । अनुमित्युत्पादाच्चेति । तथाच व्यभिचाराल्लाघवमकिञ्चित्करमिति भावः ।

नतु यत्र वह्निमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छैव प्रत्यक्षत्वेनाऽनुमितिमवगाह्य वृत्ता तत्रापि सिद्धौ सत्यामनुमित्यापत्तिः, किञ्च प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयताकत्वप्रकारकेच्छाया उत्तेजकत्वे वह्निभिन्नान्यविधेयकानुमितिर्जायतां प्रत्यक्षादिभिन्नं वह्निविधेयकं

---

मितिरित्यत्वेनाऽनुमितित्वस्य निष्ठत्वसम्बन्धेन प्रकारतांशे प्रवेशः । अनुमितित्वत्वं चाऽनुमितीतरावृत्तित्वे सति सकलानुमितिसमवेतत्वमेव, एवं चानुमितित्वैतादृशगुरुभूतानुमितित्वत्वयोः प्रवेश एव गौरवमिति कथमनुमितिविषयकत्वं विहाय अनुमितित्वप्रकारकत्वमिच्छायां निवेश्य लाघवमुक्तमिति चेन्न ।

अहं गौरितिज्ञानानन्तरं गोत्वेनेमं जानामीति निरवच्छिन्नगोत्वनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नप्रकारताकानुव्यवसायदर्शनात् समवायान्यसम्बन्धेनोल्लिख्यमानजातेरपि स्वरूपतो भानसम्भवेन लाघवाभिधानादिति दिक् ।

वह्निमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छैवेति । अत्र वह्निमत्त्वेनेति तृतीयार्थः प्रकारत्वम् , पर्वतस्येत्यत्र विशेष्यत्वं षष्ठ्यर्थः, तथाच पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिप्रत्यक्षं जायतामितीच्छालाभः ।

ननु पक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताभिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकताभिन्नानुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या इच्छात्वनिष्ठावच्छेदकता तन्निरूपकप्रतियोगिताकाभावविशिष्टसिद्ध्यभावत्वेनैव कारणत्वं वाच्यम्, तथाच नोक्तानुमित्यापत्तिः, तत्र तत्तदवच्छेदकताभिन्नप्रत्यक्षत्वनिष्ठावच्छेदकत्वानिरूपितत्वं न तादृशप्रत्यक्षं जायतामित्याकारकेच्छात्वनिष्ठावच्छेदकतायाम् , अपि तु पर्वते वह्न्यनुमितिर्जायतामित्याकारकेच्छात्वनिष्ठावच्छेदकतायामेवेति तादृशावच्छेदकताकप्रतियोगिताकाभावविशिष्टसिद्धिनिश्चयसत्त्वात् । न चाऽशाब्दज्ञानं जायतामितीच्छादशायां वह्नेः व्याप्यक·परामर्शादनुमितिर्न स्यात्, तत्तदवच्छेदकताभिन्नाऽशाब्दज्ञानत्वनिष्ठावच्छेदकत्वानिरूपितत्वस्य तादृशेच्छात्वनिष्ठावच्छेदकतायां विरहाद् , भवति च पर्वते वह्न्यनुमितिर्जायतामितीच्छात्वनिष्ठावच्छेदकतैव तादृशी तन्निरूपकप्रतियोगिताकेच्छाभावविशिष्टसिद्धेस्तत्र सत्त्वादिति वाच्यम् । अनुमितित्वनिष्ठावच्छेदकताभिन्नत्वं परित्यज्याऽनुमित्यवृत्तिधर्म(१)निष्ठावच्छेदकताभिन्नत्वस्य निवेशात् । तथाचाऽशाब्दत्वनिष्ठावच्छेदकतायां तादृशधर्मनिष्ठावच्छेदकताभिन्नत्वविरहेणाऽव्याप्ति·विरहात् । एवं प्रत्यक्षत्वेनाऽनुमितिमवगाह्य वृत्ता वह्निमत्तया पर्वतस्य प्रत्यक्षं जायतामितीच्छामादायाऽऽपत्तिवारणसंभवादित्यत आह किञ्चेति । नन्वत्र प्रकृतसाध्यविषयतानि·

---

(१) पक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताभिन्ना या अनुमित्यवृत्तिधर्मनिष्ठावच्छेदकता·तदनिरूपकत्वं अनुमितिनिष्ठविशेष्यत्वनिष्ठावच्छेदकतायां निवेश्यम्, अर्थात् प्रकृतसाध्यविधेयतानि·रूपितप्रकृतपक्षविशेष्यकत्वप्रकारतानिरूपिता या अनुमित्यवृत्तिधर्मावच्छिन्नविशेष्यता तन्निरूपकेच्छा ग्राह्येति भावः ।

यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तादिच्छाभावसमुदायस्य विशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिः ।

---

ज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शादनुमितिर्न स्यात्, तथाच तादृशतादृशेच्छानामप्युत्तेजकत्वं वाच्यमित्यननुगम इत्यत आह यादृशेति । सिद्धिसमानकालीनानामनुमितिप्राक्क्षणावस्थायिसिषाधयिषाणामुत्तेजकाविषया पक्षतायां प्रवेशो व्यर्थः, कारणतावच्छेदकगौरवापादकश्च स्यादतः सिद्धौ सत्यामित्युक्तम् ।

---

रूपितप्रकृतपक्षविषयताकत्वप्रकारकेच्छानिवेशेनैव सामञ्जस्ये विधेयताप्रवेशो व्यर्थ इति चेन्न ।

यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च वह्निमत्पर्वतो द्रव्यत्वव्याप्यवांश्चेति समूहालम्बनपरामर्शः ततः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितिर्जायतामितीच्छा ततो वह्निमत्पर्वतो द्रव्यत्ववानित्येवाऽनुमितिर्जायते नतु पर्वतो वह्निमानिति "प्रकारान्तरेणे"त्यादि वक्ष्यमाणत्वात्, इदानीं तु पर्वतो वह्निमानित्यप्यनुमितिः स्यात्, पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकेच्छाविरहविशिष्टसिद्ध्यभावसत्त्वात्, अतो विधेयतानिवेशः, तथाच वह्निमत्पर्वतो द्रव्यत्ववानित्यनुमितौ वह्निविधेयताकत्वविरहेण नापत्तिः, तादृशेच्छायां वह्निविधेयताकत्वविरहेण तादृशेच्छाविरहविशिष्टसिद्धेः सत्त्वात् । न चैवमपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितिर्जायतामितीच्छादशायामेवाऽनुपपत्तिसम्भवे वह्निभिन्नान्यविधेयकानुमितिर्जायतामितीच्छापर्यन्तानुधावनं व्यर्थमिति वाच्यम् । विधेयत्वं नातिरिक्तपदार्थः प्रकारताविशेष्यताऽन्यतररूपमेव, परन्तु व्याप्यवत्ताज्ञानजन्यत्वमनुमितौ भासते तदंशे एव विधेयत्वाख्यविषयतास्वीकारादित्युत्तरग्रन्थबलात्तादृशेच्छायां वह्निविधेयताकत्वमस्त्येवेति तादिच्छामादायानुपपत्त्यभावाद्वह्निभिन्नान्यविधेयकेत्याद्यनुधावनमिति ध्येयम् ।

कारणतावच्छेदकगौरवापादकश्च स्यादिति । तथाच यदिच्छासत्त्वे स्वकारणमात्रादेव अनुमित्युत्पादः निष्फलतदभावस्य कारणतावच्छेदककोटौ निवेशे गौरवं स्यादिति भावः । अथात्र घटानुमित्सासत्त्वे सिद्ध्यनात्मकवह्निपरामर्शसत्त्वे वह्न्यनुमितेः प्रामाणिकतया सिद्ध्यात्मकपरामर्शदशायां वह्न्यनुमित्या(१)पत्तिसंभव कारणतावच्छेदकगुरुत्वानुधावनमत्यन्तमनुचितमिति चेन्न । तत्तद्व्यक्तित्वेनोत्तेजकत्वद्वयाऽग्रे वस्तुत इत्यादिना वक्ष्यमाणतया सिद्ध्यात्मकतादृशपरामर्शकालीनतादृशेच्छाव्यक्तिदशायामनुमितेरप्रामाणिकतया तादृशेच्छाव्यक्त्युत्तेजककोटौ प्रवेशात् । न च तत्तद्व्यक्तित्वेनोत्तेजकत्वपक्षेऽपि यत्र घटानुमितिर्जायतामितीच्छा ततो वह्निव्याप्यवत्तासिद्ध्यात्मकपरामर्शः ततोऽनुमित्सा ततोऽनुमितिः तस्या अनुमित्साक्षणे

---

(१) यत्र सिद्ध्यात्मकवह्निपरामर्शः ततो घटेच्छा ततः सिद्ध्यनात्मकवह्निपरामर्शः ततोऽनुमितिः तस्याः सिद्ध्यनात्मकपरामर्शक्षणे आपत्तिरित्यर्थः । यादृशयादृशेच्छान्तर्गततया घटेच्छाया अप्युत्तेजकतया तादृशेच्छासत्त्वे परामर्शोत्तरक्षणेऽनुमितेः प्रामाणिकत्वेन तादृशतादृशेच्छाविरहकूटविशिष्टसिद्ध्यभावस्य घटेच्छाक्षणे सत्त्वात् ।

अत्रैकाकारानुमित्साव्यक्तीनामनुगतरूपेणोत्तेजकत्वलाभार्थं यादृशयादृशेच्छेत्युक्तमिति प्राञ्चः । वस्तुतो यद्यदिच्छाव्यक्तिसत्त्वे इत्येव वक्तव्यम्, अन्यथा यत्र सिद्ध्यात्मको वह्निमान्परामर्शस्तत्रानुमितिर्जायतामितीच्छायामपि वह्न्यनुमित्युत्पादादनुमितित्वप्रकारकेच्छात्वेनाऽप्युत्तेजकतया यत्र सिद्ध्यात्मको वह्निपरामर्श एव सिद्ध्यनात्मकद्रव्यत्वादिसाध्यकः परामर्शस्तत्रानुमितिर्जायतामितीच्छादशायां वह्न्यनुमित्यापत्तेः । एवं पर्वतमात्रपक्षकात्सिद्ध्यात्मकपरामर्शाद्यत्र वह्न्यनुमितिर्जायतामितीच्छायां पर्वते वह्न्यनुमितिस्तत्र वह्न्यनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे यत्र प-

---

आपत्तिः स्यात्, घटानुमितीच्छासत्त्वेऽनुमितेः प्रामाणिकतया तदिच्छाव्यक्तेरप्युत्तेजकत्वादिति वाच्यम् । अनुमित्साकालीनानुमित्सासत्त्वे अनुमितेः प्रामाणिकतया अनुमित्साऽकालीनतदिच्छाव्यक्तेरुत्तेजककोटावप्रवेशादिति ध्येयम् । एतेन सिद्धौ सत्यामिति निवेशेऽपि यत्रादौ सिद्ध्यात्मकपरामर्शः ततो घटेच्छा ततः परामर्शान्तरं ततोऽनुमितिः तत्र द्वितीयपरामर्शक्षणेऽनुमित्यापत्तिः, उत्तरक्षणेऽनुमितेरुत्पादेन तादिच्छाव्यक्तेरपि उत्तेजकत्वात्तदिच्छाविरहविशिष्टसिद्ध्यभावस्य घटेच्छोत्पादक्षणेपि सत्त्वात्, एवं यत्रादौ अपेक्षाबुद्ध्यात्मकबाधनिश्चयः ततो वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेति अपेक्षाबुद्ध्यात्मकसमूहालम्बनपरामर्शः ततो घटेच्छा ततो वह्नितद्व्याप्यानुमितिर्जायतामितीच्छा ततोनुमित्यात्मकसिद्ध्यात्मक(१)परामर्शः ततोनुमित्यन्तरं जायतामितीच्छा ततोऽनुमितिः तत्रानुमित्यन्तरं जायतामितीच्छाक्षणेऽनुमित्यापत्तिः वह्निव्याप्यानुमितिर्जायतामितीच्छाया अप्युत्तेजकत्वात्, तथा च गौरवो स्कीर्तनमनुचितमिति वदन्तः परास्ताः ।

अन्तिमपरामर्शविशिष्टवह्निव्याप्यानुमितिर्जायतामितीच्छाव्यक्तेरुत्तेजकत्वस्वीकारेण प्रथमे, समूहालम्बनपरामर्शविशिष्टघटेच्छाव्यक्तेरुत्तेजकत्वस्वीकारेण च द्वितीये दोषवारणादिति ।

केचित्तु सिद्धौ सत्यामिति निवेशेऽपि यत्रापेक्षाबुद्ध्यात्मकसिद्ध्यात्मकपरामर्शस्ततो घटेच्छा ततश्च वह्न्यनुमित्सा, तदुत्तरानुमितेरनुमित्साक्षणेप्यापत्तिः स्यात् । यादृशयादृशेच्छान्तर्गतायाः घटेच्छायाः सत्त्वे सिद्धिसत्त्वेऽनुमित्सोत्तरक्षणे अनुमितेः प्रामाणिकत्वेन तादृशघटेच्छाविरहविशिष्टसिद्ध्यभावस्य घटेच्छाक्षणेऽपि सत्त्वात्, अतो भवद्भिरनुमित्साविशिष्टघटेच्छाया उत्तेजकत्वं वाच्यं, तथा चानुमित्साविशिष्टघटेच्छाविरहविशिष्टसिद्धेः घटेच्छाक्षणे सत्त्वान्न तत्रानुमित्सापत्तिः । एवमस्माभिरपि यादृशपरामर्शानन्तरमनुमितिर्जायते तादृशपरामर्शविशिष्टायाः घटेच्छाया एवोत्तेजकत्वं वाच्यं, तथाच तत्परामर्शविशिष्टघटेच्छाविरहविशिष्टसिद्धेः तदिच्छाक्षणे सत्त्वात् सिद्धौ सत्यामित्यनुक्तावपि न तत्रातिव्याप्तिः अतो गौरवाभिधानमिति । न च तथापि यत्र वह्न्यभाववान्पर्वत इत्यपेक्षाबुद्ध्यात्मकबाधनिश्चयः, ततः पर्वतो वह्निव्याप्यवान्वह्निव्याप्यव्याप्यवांश्चेत्यपेक्षाबुद्ध्यात्मकसमूहालम्बनात्मकः परामर्शः ततः घटेच्छा ततो वह्निव्याप्यानुमितिर्जायतामितीच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यवा-

---

(१) वह्निमान्वह्निव्याप्यवानित्यनुमितिः ।

र्वते महानसे च वह्निव्याप्यवत्तापरामर्शे एव पर्वते सिद्ध्यात्मकः तत्रापि वह्न्यनुमितिर्जायतामित्याकारकेच्छायां पर्वते वह्न्यनुमित्यापत्तेः । न चे-ष्टापत्तिः, अनुभवविरोधात्, प्रकारान्तरेण स्वविषयपर्यवसानसम्भवेनाऽनुमित्सानामवगतार्थगोचरज्ञानानर्जकत्वात्, अस्माकन्तु समूहालम्बन-

---

निति अनुमितिः पुनः तदनन्तरमनुमित्यन्तरं जायतामितीच्छा ततः पर्वतो वह्निमानित्यनुमितिः, तस्याः अनुमित्यन्तरं जायतामितीच्छाक्षणे आपत्तिः स्यात्, यादृशयादृशेच्छासध्ये वह्निव्याप्यानुमितिर्जायतामितीच्छाया अपि उत्तेजकत्वेन तत्सत्वे पर्वतो वह्निमानित्यनुमितिः प्रामाणिकी तादृशेच्छाविरहविशिष्टसिद्ध्यभावस्य प्रथमानुमितिक्षणेऽपि सत्वात् सिद्धौ सत्यामित्यनुक्तावतिप्रसङ्गः सम्भवत्येवेति कथं गौरवानुसरणमिति वाच्यम् । तत्र समूहालम्बनपरामर्शविशिष्टवह्निव्याप्यानुमितिर्जायतामितीच्छाया एवोतजकत्वात्, तथा च तादृशपरामर्शविशिष्टतादृशेच्छायास्तादृशेच्छोत्पत्तिक्षणे एव सत्वेन तदभावविशिष्टायाः सिद्धेः सत्वेन तपादस्याभावादित्यतो गुरुत्वाभिधानमिति प्राहुरिति संक्षेपः ।

प्रकारान्तरेणेति, अनुमानपरोऽयं ग्रन्थः । अनुमित्सा अवगतार्थगोचरज्ञानानर्जिका प्रकारान्तरेण स्वविषयपर्यवसानसम्भवकालीनत्वात्, तथाहि—या यादृशप्रकारतानिरूपितयादृशविशेष्यताशालिज्ञानान्यस्वविषयकज्ञानप्रयोजकत्वे सति तादृशस्वविषयकज्ञानासमानाकारकज्ञानसामग्री सा तादृशप्रकारतानिरूपिततादृशविशेष्यताशालिज्ञानानर्जिका इति । वह्निविषयकघटविषयकसमूहालम्बनासिद्ध्यात्मकपरामर्शकालेऽनुमितिर्जायतामितीच्छादशायां वह्न्यनुमित्युत्पत्त्या व्यभिचारेण हेतुताघटकविशेष्यदलम्, तथा च तादृशेच्छाया तादृशस्वविषयघटानुमितिरूपज्ञानसमानाकारकघटविषयकसिद्धिसमानकालीनसामग्रीकालीनत्वेन व्यभिचारवारणात् । अनुमितिर्जायतामितीच्छादशायां वह्निव्याप्यवत्तासिद्ध्यात्मकपरामर्शाद्वह्न्यनुमित्युत्पत्त्या व्यभिचारेण तादृशप्रयोजकत्वनिवेशः, तथा च तादृशज्ञानान्यघटानुमितिरूपस्वविषयकज्ञानसमानकालीनसामग्रीकालीनत्वसत्वेऽपि तादृशस्वविषयकज्ञानप्रयोजकत्वविरहात् । इच्छाविषयकसाक्षात्कारं प्रति इच्छायास्तादात्म्येन कारणतया अनुमितिर्जायतामितीच्छाया तादृशज्ञानान्यइच्छाविषयकसाक्षात्कारप्रयोजकत्वविशिष्टज्ञानसमानकालीनसामग्रीकालीनत्वसत्वेन व्यभिचारात्स्वविषयेति, तथा च तादृशसाक्षात्कारस्य इच्छाविषयत्वाभावान्न व्यभिचारः । परामर्शस्यैव तादृशज्ञानान्यतया तत्समानाकारकस्वात्मकज्ञानसमानकालीनसामग्रीकालीनत्वस्य महानसधर्मिकसिद्ध्यात्मकपर्वतधर्मिकसिद्ध्यात्मकपरामर्शकालीनानुमितिर्जायतामितीच्छायामसत्वेन स्वरूपासिद्धिप्रसङ्गः, अतो विशेष्यदले स्वविषयकत्वनिवेशः, तथा च परामर्शेच्छाविरहान्न स्वरूपासिद्धिः । पर्वते महानसे च सिद्ध्यात्मकपरामर्शदशायामनुमितिर्जायतामितीच्छाकाले उभयत्रानुमित्युत्पादात्तत्र तादृशेच्छायां स्वविषयकमहानसधर्मिकवह्न्यनुमितिरूपज्ञानासमानकालीनसामग्रीकालीनत्वसत्वेन व्यभिचारवारणाय असमानाकारत्वनिवेशः, तथा च तादृशानुमितिसमानाकारकमहानसधर्मिकसिद्धिसमानसामग्रीकालीनत्वसत्वेन तदसमानकालीनसामग्रीकालीनत्वस्य तादृशेच्छायामभावान्न व्यभिचार इति । एवं चानुमितिर्जायतामितीच्छा-

त्वलीयत्वसाध्यकानामुत्तेजककोटावप्रविष्टत्वान्न दोष इति । परन्तु तत्पक्ष-कतत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रत्येव पक्षतायाः कारणत्वमिति कल्पे तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वाद्यवच्छिन्ना-

काले पर्वतधर्मिकसिद्ध्यात्मकमहानसधर्मिकसिध्यनात्मकपरामर्शकाले महानसे वह्न्यनुमितिरे-वानुभवसिद्धा न तु पर्वते तादृशेच्छाया निरुक्तहेतुना पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नि-त्वावच्छिन्नप्रकारताशाल्यनुमित्युत्तेजकत्वाभावसिद्धेरिति भावः ।

परन्त्विति । नन्वत्र वह्नेर्धूमलिङ्गकसिद्ध्यात्मकपरामर्शसत्त्वे आलोकलिङ्गिका सती धूम-लिङ्गिका या वह्न्यनुमितिः सा जायतामितीच्छादशायां धूमलिङ्गकवह्न्यनुमित्यापत्तिः, तत्र धू-मलिङ्गकानुमितित्वप्रकारकेच्छाविरहाविशिष्टसिद्ध्यभावसत्त्वादिति चेन्न ।

तत्पक्षकत्वनिष्ठावच्छेदकताभिन्नतत्साध्यकत्वनिष्ठावच्छेदकताभिन्नानुमितित्वनिष्ठावच्छेद-कत्वानिरूपिता याऽनुमितिविशेष्यत्वनिष्ठावच्छेदकता तन्निरूपितेच्छात्वनिष्ठावच्छेदकताकप्र-तियोगिताकाभावस्यैव निवेशात्, तथाच तत्तदवच्छेदकताभिन्नालोकलिङ्गकत्वनिष्ठावच्छेदक-त्वानिरूपितत्वस्य तादृशेच्छाभावीयप्रतियोगितानिरूपितानुमितिविशेष्यत्वनिष्ठावच्छेदकतायां विरहान्न तत्रातिव्याप्तिः । एवंसति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकार-कानुमित्सायां सिद्ध्यात्मकपरामर्शान्न धूमलिङ्गकानुमितिः स्यात् तत्र तत्तदवच्छेदकताभिन्नप्र-कारत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्वात् । न च साध्यतावच्छेदकावच्छिन्नप्रकारत्वनि-ष्ठावच्छेदकत्वादिभेदोऽपि निवेश्य इति वाच्यम् । पर्वतपक्षकवह्निसाध्यकधूमलिङ्गकानुमित्सा-दशायां सिद्ध्यात्मकधूमपरामर्शाद्धूमलिङ्गकवह्न्यनुमित्यनुपपत्तेः, तत्र तादृशप्रकारत्वनिष्ठाव-च्छेदकताभिन्नसाध्यकत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्वात्, अतः पक्षविषयत्वनिष्ठाव-च्छेदकताभिन्नसाध्यविषयत्वनिष्ठावच्छेदकताभिन्नेत्यादि निवेश्यम्, तथा च साध्यकत्वप्रका-रत्वादीनां विषयत्वात्मकतया न तद्दोष इति चेद् ।

अत्र नव्याः—पक्षनिष्ठप्रकारतानिरूपितवह्निनिष्ठविशेष्यताशाल्यनुमित्सादशायां वह्नेः सिद्ध्यात्मकपरामर्शाद्वह्निविधेयकानुमित्यापत्तेः तत्र तादृशविषयत्वानिष्ठावच्छेदकताभिन्नोदासी-नावच्छेदकत्वानिरूपितत्वसत्त्वात्, अतः पक्षविषयतायां संसर्गानवच्छिन्नत्वं निवेशनीयम् । तथाच तादृशप्रकारतात्मकपर्वतनिष्ठविषयतायां संसर्गानवच्छिन्नत्वविरहेण तादृशपक्षविषयत्व-निष्ठावच्छेदकताभिन्नतादृशप्रकारत्वनिष्ठावच्छेदकत्वानिरूपितत्वविरहान्न तत्रातिव्याप्तिः । न च तथापि संसर्गानवच्छिन्नत्वं संसर्गनिष्ठविषयत्वानिरूपितत्वमेव पक्षविषयतायां, तथाच पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशाल्यनुमित्सा-दशायां धूमलिङ्गकवह्नेः सिद्ध्यात्मकपरामर्शात्पर्वतो वह्निमानित्यनुमित्यनुपपत्तिः, पर्वतत्वावच्छि-न्नविशेष्यतायां संयोगत्वावच्छिन्नसांसर्गिकविषयतानिरूपितत्वेन तादृशपक्षविषयत्वनिष्ठावच्छे-दकताभिन्नविधेयत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वादिति वाच्यम् । संसर्गानवच्छिन्न-त्वपदेन संसर्गनिष्ठावच्छेदकत्वानिरूपितत्वस्यैव विवक्षितत्वात्, संसर्गनिष्ठावच्छेदकतात्वावच्छि-न्ननिरूपकतानिरूपितानिरूप्यत्वाभाववत्पक्षविषयतानिष्ठावच्छेदकताभिन्नसाध्याविषयत्वनिष्ठाव-च्छेदकताभिन्नेत्यादि. तथाच संयोगनिष्ठावच्छेदकतात्वेन पर्वतनिष्ठविषयतात्वेन न निरूप्य-

भावोऽनुगतरूपेणैव पक्षतायां लाघवान्निवेशनीयो न तु तत्तदिच्छाव्यक्ती-
नामभावसमुदाय इत्याशयेनैव यादृशयादृशेच्छेत्युक्तमिति ध्येयम् ।

---

निरूपकभाव इति तादृशेच्छाया नावङ्कह इति ।

वस्तुतस्तु संसर्गानवच्छिन्नपक्षविषयतानिरूपितसाध्यविधेयत्वनिष्ठावच्छेदकताभिन्नत्वा-
दिनिवेशान्न क्वाप्यनुपपत्तिः । न च पर्वतनिष्ठविशेष्यतानिरूपितवह्निप्रकारताशाल्यनुमितेश्छाया
असंग्रहः, तत्र तादृशविधेयत्वनिष्ठावच्छेदकताभिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव
सत्त्वादिति वाच्यम् । विधेयत्वं नातिरिक्तः पदार्थः, किन्तु प्रकारताविशेष्यतान्यतररूपमित्यु-
क्तत्वान्यबलात् प्रकारतानिष्ठावच्छेदकतायामपि विधेयत्वनिष्ठावच्छेदकताभिन्नत्वविरहादतो

नाऽसंग्रह इति दिक् ।

अथात्र स्वमतेऽपि तत्पक्षकतत्साध्यकानुमितिविषयिणीच्छाया अनुगतरूपेणोत्तेजकत्वसंभ-
वात्तत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वावच्छिन्नाभावस्यानुगतरूपेण पक्षतायां निवेश-
लाभार्थं यादृशयादृशेत्युक्तमित्यनुक्त्वा तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छाया अ-
नुगतरूपेणोत्तेजकत्वलाभार्थं यादृशयादृशेत्युक्तमिति मिश्रमतानुसरणं व्यर्थमिति चेद् ।

अत्र केचित्—पर्वते वह्न्यनुमितिरिच्छादशायामप्रामाण्यज्ञानास्कन्दितधिश्यात्मकपरामर्श-
काले वह्न्यनुमितिप्रसंगात्, तादृशेच्छाया अनुगतरूपेणोत्तेजकत्वात्, अस्माकं तु तादृशेच्छा-
यास्तत्तद्व्यक्तित्वेन प्रवेशात् अप्रामाण्यज्ञानास्कन्दितपरामर्शकालेऽनुमित्यनुत्पादात् तादृश
परामर्शकालीनतादृशेच्छाव्यक्तीनामनुत्तेजकत्वात् परामर्शधर्मिकतादृशाप्रामाण्यज्ञानस्योत्ते-
जकत्वे तु गौरवात् । न च तथापि लिङ्गकत्वघटिततादृशेच्छाव्यक्तीनामनुगतरूपेणोत्तेजकत्वात्
धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छादशायामप्रामाण्यज्ञानास्कंदितशिश्यात्मकपरामर्श-
दशायां अनुमित्युत्पत्त्या परामर्शधर्मिकतादृशाप्रामाण्यज्ञानस्योत्तेजकविधया प्रवेशस्यावश्यक-
तया गौरवानवकाशादिति वाच्यम् । धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छाव्यक्तीना त-
थापि तत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वेनानुगतरूपेणोत्तेजकत्वात् धूमेन पर्वते वह्न्य-
नुमितिर्जायतामितीच्छाकालीनपरामर्शधर्मिकतादृशाप्रामाण्यज्ञानस्य उत्तेजकविधया प्रवेश-
स्यावश्यकतया तदंशे साम्यात् पर्वते वह्न्यनुमितिर्जायतामितीच्छाकालीनपरामर्शधर्मिकाऽ-
प्रामाण्यव्यक्तीनामुत्तेजकविधया प्रवेशे गौरवतादवस्थ्यात् । न च पूर्वकल्पे अस्माकं पर्वते
वह्न्यनुमितिर्जायतामितीच्छाया एवानुगतरूपेणोत्तेजकत्वम्, न तु लिङ्गकत्वघटितेच्छाव्यक्ती-
नामतस्तत्तल्लिङ्गकत्वघटितेच्छाकालीनपरामर्शधर्मिकनानाऽप्रामाण्यव्यक्तीनामुत्तेजकविधया प्रवे-
शे गौरवमिति वाच्यम् । तथासति अनन्तलिङ्गकत्वघटितेच्छासत्त्वेऽनुमितेः प्रामाणिकतया
अनन्ततादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वेऽतिगौरवादिति । न च परकल्पे पर्वते
वह्न्यनुमितिर्जायतामितीच्छाया धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छाव्यक्तीनां च पक्षता-
वच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकताभिन्ना सती साध्यतावच्छेदकावच्छिन्नप्रकारत्व-
निष्ठावच्छेदकताभिन्ना या अवच्छेदकता तल्लिङ्गकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरू-
पितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रका-
रत्वनिष्ठावच्छेदकतानिरूपितविशेष्यताशालीच्छात्वेनानुगतरूपेणोत्तेजकत्वसम्भवात् पर्वते वह्न्य-

नुमितीच्छाकालीनपरामर्शधर्मिकाप्रामाण्यज्ञानस्य तत्रापि उत्तेजकविषया प्रवेशस्यावश्यक-तया गौरवानवकाशादिति वाच्यम् । सिद्ध्यात्मकापेक्षाबुद्ध्यात्मकधूमालिङ्गकपरामर्शसत्त्वे पर्वते वह्न्यनुमितीच्छासत्त्वेनाऽऽलोकेन पर्वते वह्न्यनुमितिर्जायतामितीच्छासत्त्वदशायां धूमलिङ्गका-नुमित्यापत्तेः पक्षतासत्त्वात्, अस्मन्मते च तादृशेच्छाव्यक्तीनामननुगतरूपेणोत्तेजकत्वेऽपि अन्यलिङ्गकानुमित्साया: प्रतिबन्धकत्वादित्याहुः ।

तत्र, तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तल्लिङ्गकत्वत्वाप्रकारकत्वतदन्य-लिङ्गकानुमित्साकालीनत्वोभयाभाववत्तत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वेन तदिच्छाया लाघवादनुगतरूपेणोत्तेजकत्वसंभवात्, उक्तस्थले च निरुक्तोभयाभाववत्त्वविरहेण तदापत्त्य-संभवात् पर्वते वह्न्यनुमितिर्जायतामितीच्छाकालीनपरामर्शधर्मिकाऽप्रामाण्यज्ञानव्यक्तेरुत्तेजक विषया प्रवेशस्यावश्यकतया गौरवानवकाशात्, अन्यथा तादृशेच्छासत्त्वे अप्रामाण्यज्ञानास्क-न्दितपरामर्शकाले वह्न्यनुमित्युत्पादापत्तेरिति । एतेन यत्र तत्पक्षकतत्साध्यकतल्लिङ्गकेच्छाकाली-नपरामर्शांशे अप्रामाण्यज्ञानं कदापि न जातं किन्तु तल्लिङ्गकत्वाघटिततत्पक्षकतत्साध्यकानु-मितीच्छाकालीनपरामर्शांश एव तत्पक्षकतत्साध्यकानुमितिं प्रति पूर्वकल्पे तादृशेच्छाकालीनप-रामर्शधर्मिकाप्रामाण्यज्ञानव्यक्तेरुत्तेजकविषया प्रवेशे गौरवात्, अस्माकन्तु तल्लिङ्गकत्वाघटिते-च्छाव्यक्तेस्तत्तद्व्यक्तित्वेनोत्तेजकानन्तर्गतत्वादित्यपि निरस्तम् । लिंगत्वाघटितालिंगत्वघटितेच्छा-व्यक्तौ लाघवादनुगतरूपेणोत्तेजकत्वसंभवादिति । अत एव पर्वतो वह्निमात् वह्निव्याप्यधूम-वान् वह्निव्याप्यव्याप्यवांश्चेति वह्न्यनुमितिः वह्निव्याप्यानुमितिश्च मदिष्टसाधनमिति इष्टसाधनताविषयकसमूहालम्बनपरामर्शदशायां पर्वते वह्न्यनुमितिः वह्निव्याप्यानुमिति श्च जायतामितीच्छादशायां वह्निव्याप्यधूमानुमितिक्षणे वह्न्यनुमित्यापत्तिः पूर्वकल्पे वह्न्यनु-मितिर्जायतामितीच्छाव्यक्तेरनुगतरूपेणोत्तेजकत्वात् परकल्पे पर्वते वह्न्यनुमितिर्जायतामिती-च्छाव्यक्तेस्तद्व्यक्तित्वेनोत्तेजकतया तत्स्थलीयतदिच्छाव्यक्तेरुत्तेजकविषयाऽप्रवेशात् अग्रिमक्षणे सिद्ध्यात्मकपरामर्शादेवानुमित्यसंभवात् । न च तत्क्षणे वह्न्यनुमितिरिष्टैवेति वाच्यम् । अनुभ-विरोधात् प्रकारान्तरेण स्वावषयपर्यवसानसंभवे ननुमित्सानामवगतार्थगोचरज्ञानाजनकत्वात् इति । न च तत्रापि धूमेन पर्वते वह्न्यनुमितिर्जायतामितीच्छादशायां पूर्वक्षणे अनुमित्यापत्त्या स्वाव्यवहितपूर्वत्वस्वप्रयोजकत्वोभयसम्बन्धेन धूमलिङ्गकपरामर्शविशिष्टधूमलिङ्गकपरामर्शत्वे-न धूमलिङ्गकानुमितिं प्रति प्रतिबन्धकतया अवश्यं वक्तव्यत्वात् अस्माकमपि पर्वतपक्षकवह्न्यनु-मितिं प्रति तादृशपरामर्शविशिष्टतादृशपरामर्शस्य तादृशपरामर्शत्वेन प्रतिबन्धकतया वाच्य-तया पूर्वक्षणे अनुमित्यापत्तेरयोग इति वाच्यम् । पर्वतपक्षकवह्न्यनुमितिं प्रति उक्तरीत्याऽऽलोक-लिङ्गकपरामर्शविशिष्टालोकलिङ्गकपरामर्शत्वेन भस्मलिङ्गकपरामर्शविशिष्टभस्मलिङ्गकपरामर्श-त्वेन नानाप्रतिबन्धकताकल्पनापत्तिरिति परास्तम् । पूर्वक्षणे एव वह्न्यनुमितेरनुभवसिद्धत्वात् प्रकारान्तरेणत्यस्यप्राप्त्यभावात् प्रत्युतोत्तरकल्पे एव गौरवम्, आलोकेन वह्न्यनुमितिर्जायतामिती-च्छादशायां धूमेन वह्न्यनुमितीच्छासत्त्वे उभयलिङ्गकाप्रामाण्यज्ञानास्कन्दितसमूहालम्बनप-रामर्शदशायामनुमित्युत्पत्त्यनुत्पादापत्तेः तत्र तन्मते प्रत्येकोभयलिङ्गकानुमितिं प्रति प्रत्येको भयलिङ्गकानुमित्साया अनुगतरूपेणोत्तेजकतया पक्षतासत्त्वेनाऽनुमित्युत्पादापत्त्या तादृशा

इच्छाभावसमुदायस्येति । इदमुपलक्षणम् —सिद्धिधार्मिकयत्र्यदप्रामाण्यज्ञानदशायां सिद्धिदशायामनुमितिस्तत्तदप्रामाण्यज्ञानाभावसमुदायस्यापि सिद्धौ विशेषणत्वं बोध्यम् । अतएव मिश्रैरनुमितिग्रन्थे अप्रामाण्यज्ञानास्कन्दि-

---

ऽप्रामाण्यज्ञानव्यक्तेरुत्तेजकविधया प्रवेशात् , अस्माकन्तु तल्लिङ्गकानुमितिं प्रति तदन्यलिङ्गकानुमित्सायाः स्वतन्त्रप्रतिबन्धकतयाऽनुमित्यनुत्पत्तेस्तादृशाप्रामाण्यज्ञानव्यक्तेरुत्तेजकविधया प्रवेशाऽसम्भवात् । न च तल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकताया वक्तव्यतया उक्तस्थले तल्लिङ्गकानुमित्साविरहविशिष्टान्यलिङ्गकानुमित्साविरहेण प्रतिबन्धकाभावसत्वादनुमित्युत्पादापत्त्या तादृशाप्रामाण्यज्ञानव्यक्तेरुत्तेजकविधया प्रवेशस्यावश्यकतया परकल्पे गौरवानवकाश इति वाच्यम् । तल्लिङ्गकानुमित्सासत्वेऽन्यलिङ्गकानुमित्सासत्वे यत्पक्षकयत्साध्यकानुमितिर्जायते तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तत्पक्षकतत्साध्यकतल्लिङ्गकानुमित्साविरहविशिष्टान्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकतेत्यत्र तत्तदिच्छाव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकतया निरुक्तस्थले तादृशतादृशेच्छासत्वेऽप्रामाण्यज्ञानास्कन्दितपरामर्शदशायामनुमितेरलीकतया तादृशेच्छाव्यक्तेरुत्तेजकविधयाऽप्रवेशात् , उत्तेजकीभूतेच्छाविरहविशिष्टान्यलिङ्गकानुमित्सायाः सत्वेन प्रतिबन्धकाभावरूपकारणविरहेण अनुमित्यनुत्पत्तेरिति ध्येयम् । वस्तुतस्तु पूर्वकल्पे सिद्ध्यनन्ततया एतत्कल्प एव तत्पक्षकतत्साध्यकतल्लिङ्गकानुमित्साव्यक्तीनामनुगतरूपेणोत्तेजकत्वलाभायैव यादृशयादृशेति जगदीशलिखनमिति ध्येयम् ।

परे तु पर्वतो वह्निमान् वह्निव्याप्यधूमवानितिसिद्ध्यात्मकपरामर्शसत्वे आलोकेन वह्न्यनुमितिर्जायतामितीच्छादशायां धूमलिङ्गकानुमित्यापत्तिः, स्वमते पर्वतपक्षकवह्निसाध्यकानुमितीच्छापदेन तादृशेच्छाया अप्युत्तेजकत्वात् । न च तत्पक्षकत्वनिष्ठावच्छेदकताभिन्नतत्साध्यकत्वनिष्ठावच्छेदकताभिन्नानुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितानुमितिविशेष्यत्वनिष्ठावच्छेदकतानिरूपितेच्छात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावो निवेशनीयः, तथाच तत्तत्वच्छेदकताभिन्नालोकलिङ्गकत्वनिष्ठावच्छेदकत्वानिरूपितत्वविरहान्न तत्र धूमलिङ्गकानुमित्यापत्तिरिति वाच्यम् । यत्र धूमलिङ्गकवह्नेः सिद्ध्यात्मकपरामर्शस्तत्रैवालोको वह्निव्याप्य इति विशेषणज्ञानं तत्रैव च वन्ह्यनुमितिर्मदिष्टसाधनमिति समूहालम्बनज्ञानोत्तरं पर्वते वन्ह्यनुमितिर्जायतामितीच्छा तत आलोकपरामर्शादालोकलिङ्गकानुमितिः, अधुनाऽऽलोकलिङ्गकपरामर्शक्षणे धूमलिङ्गकानुमित्यापत्तेः, तत्पक्षकतत्साध्यकानुमितीच्छान्तःपातितादृशेच्छाया अप्युत्तेजकत्वादित्याहुः ।

तन्न, इष्टत्वात् । आलोकलिङ्गकपरामर्शमवधूय धूमलिङ्गकानुमितिरेव किन्न स्यात् । न च तथापि प्रथममपेक्षाबुद्ध्यात्मकः सिद्ध्यात्मको धूमलिङ्गकपरामर्शः ततः सिद्ध्यात्मकपरामर्शेऽप्रामाण्यज्ञानम् ततः पर्वते वन्ह्यनुमितीर्जायतामितीच्छादशायां पर्वतो वह्निमानित्यनुमित्यापत्तिः, तत्पक्षकतत्साध्यकानुमितीच्छान्तःपातितादृशेच्छाया अप्युत्तेजकत्वेन तद्विरहविशिष्टसिद्ध्यभावस्वाच्छेददशायां सत्वादिति वाच्यम् । वह्निव्याप्यधूमवान्पर्वत इति परामर्शस्याऽप्रामाण्यज्ञानाभावविशिष्टपरामर्शत्वेनैव तत्पक्षकतत्साध्यकानुमितिहेतुत्वात् , तथाचोक्तस्थले त-

न्वितायाः सिद्धेरप्रतिबन्धकत्वमुक्तम्। न क्षतिरिति। अथच्येवमपि तत्तदि-च्छाविरहकूटानां विशेष्यविशेषणभावे विनिगमनाविरहेणाऽनन्तकार्य-

द्विरहादेव वन्ह्यनुमित्यापत्तेरयोगात्, एवंसति अप्रामाण्यज्ञानस्य कारणतावच्छेदककोटौ तत्त-द्व्यक्तित्वेनैवोत्तेजकतया गौरवमिति।

यदि च तत्पक्षकतत्साध्यकानुमितीच्छाया अननुगतरूपेणोत्तेजकत्वं तदाऽप्रामाण्यज्ञान-कालीनायास्तादृशेच्छाया उत्तेजकत्वाभावान्नानुमित्यापत्तिरित्यपि केचित्।

तन्न, अनन्तायास्तत्पक्षकतत्साध्यकानुमितीच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकत्वस्य कल्पनयितव्यैव गौरवात्, अस्माकन्तु यत्र परामर्शधर्मिकाऽप्रामाण्यज्ञानं तत्रैवोत्तेजकत्वम्, तथाचाऽप्रामा-ण्यज्ञानस्य तत्तद्व्यक्तित्वेनोत्तेजकत्वे लाघवमस्तीत्यतो नोक्तदोषावसर इति कथं स्वमतं परित्य-ज्य मतान्तरानुसरणं कृतमिति न शंक्यम्, पूर्वं सिषाधयिषापदेन तत्साध्यविशिष्टतत्पक्षवि-षयत्वप्रकारिकाऽनुमितिविषयिणीच्छाया वाच्यत्वात्, तथाच तत्पक्षसाध्यकानुमितीच्छायाः पूर्वमनुगतरूपेणोत्तेजककोटौ प्रविष्टतया पुनस्तादृशेच्छाया अनुगतरूपेणोत्तेजकत्वलाभार्थं तादृ-शयादृशेति ये वदन्ति, तेऽप्यग्राह्याः। न च वह्निमत्तया पर्वतस्य प्रत्यक्षं जायतामितीच्छाद-शायां पूर्वोक्तयुक्त्याऽतिव्याप्तितादवस्थ्यमिति वाच्यम्। पक्षविशेष्यत्वनिष्ठावच्छेदकताभिन्ना साध्यप्रकारत्वनिष्ठावच्छेदकताभिन्ना या अनुमितित्ववृत्तिधर्मनिष्ठावच्छेदकता तदनिरूपितानुमि-तिविशेष्यत्वनिष्ठावच्छेदकतानिरूपितेच्छात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य विवक्षित-त्वात्, तथाच तत्तदवच्छेदकताभिन्नप्रत्यक्षत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव तत्र सत्वान्न तत्रातिव्याप्तिः, स्वमते यादृशयादृशेत्यस्य फलाभावान्मतान्तरानुसरणमिति ध्येयम्।

अपरे तु ननु तत्पक्षकतत्साध्यकानुमितित्वावच्छिन्नं प्रति तत्पक्षकतत्साध्यकानुमितित्व-प्रकारकेच्छाया अनुगतरूपेणोत्तेजकत्वसम्भवात् लिङ्गविशेषघटितकल्पानुसरणं व्यर्थम्। न च धूमेन वन्ह्यनुमितिर्जायतामितीच्छादशायां सिद्ध्यात्मकालोकपरामर्शाद्वन्ह्यनुमित्यापत्तिरि-ति वाच्यम्। तत्पक्षकत्वनिष्ठावच्छेदकताभिन्ना सती तत्साध्यकत्वनिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपितविशेष्यत्वनिष्ठावच्छेदकताके-च्छात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावनिवेशेनैव तद्दोषवारणात्। न च यत्र पर्वते व-ह्न्यनुमितिर्जायतामितीच्छा वह्नेः सिद्ध्यात्मकपरामर्शः परामर्शांशेऽप्रामाण्यज्ञानं च तत्र वह्न्यनुमित्यापत्तिवारणाय तत्तदप्रामाण्यज्ञानव्यक्तेरुत्तेजककोटौ प्रवेशे गौरवम्, मन्मते च निरुक्तेच्छाया उत्तेजककोटावप्रवेशादेव नापत्तिरिति वाच्यम्। अप्रामाण्यज्ञानव्यक्तेस्तत्तद्व्य-क्तित्वेनोत्तेजकतायाः निरुक्तेच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकतायास्तुल्यत्वात् इति चेन्न।

सिषाधयिषा तत्साध्यविशिष्टतत्पक्षविषयिणी अनुमितिविषयिणीच्छा इति ग्रन्थेन तत्पक्ष-कतत्साध्यकानुमितीच्छाया अनुगतरूपेणोत्तेजकत्वस्योक्तत्वात् इदानीं पुनस्तत्कथने पौनरुक्त्याप-त्तिः स्यात् अतो लिङ्गघटितकल्पानुसरणं कृतमिति ध्येयम्।

ननु तथापि यत्र वह्निमान् वह्निव्याप्यधूमवांश्च पर्वत इति परामर्शः ततः आलोकालिङ्गि-का सती धूमलिङ्गिका या पर्वते वह्न्यनुमितिः सा जायतामितीच्छा ततो धूमलिङ्गकवह्न्यनु-मित्यापत्तिः तदिच्छाव्यक्तेरप्युत्तेजकत्वादिति चेन्न।

कारणभावः । न चैकेच्छाविरहविशिष्टो योऽपरेच्छाविरहस्तद्विशिष्टसिद्धित्वेन प्रतिबन्धकत्वे सामानाधिकरण्यात्मकवैशिष्ट्यस्य द्विधा प्रवेशे गौरवम्, अतस्तावतीनामिच्छाविरहव्यक्तीनामेकत्र द्वयमिति रीत्या युगपदेव सिद्धिविशेषणत्वं लाघवादिति वाच्यम् । सिद्धौ तावदिच्छाविरहस्य विशेषणत्वेऽपि सिद्ध्यंशे प्रत्येकं तत्तदभावसामानाधिकरण्यस्य वैशिष्ट्यविधया प्रवेशात्सिद्धौ तावदभाववैशिष्ट्यस्येव तत्तदेकैकाभावेऽपराभाववैशिष्ट्यस्य च प्रवेशेऽपि गौरवानवकाशात् । तथापि सिद्धौ तत्तदभावानां युगपद्विशेषणत्वे वैशिष्ट्यरूपसामानाधिकरण्यघटकवृत्तित्वांशस्य सकृदेव प्रवेशाल्लाघवम्, प्रत्येकाभावेऽभावान्तरवैशिष्ट्यस्य सम्बन्धत्वे तु वैशिष्ट्यघटकवृत्तित्वांशस्य बहुशः प्रवेशे गौरवम्, अतो युगपदेव तावतीनामभावव्यक्तीनां सिद्धिविशेषणत्वं युक्तम् । किञ्च सिद्धौ तावदभावस्य युगपद्विशेषणत्वे विशेषणताविशेषसम्बन्धावच्छिन्नाधिकरणसमवेतत्वमेवानुगतः संबन्धः, तत्र तु एकाभावेऽपराभाववैशिष्ट्यं विशेषणताविशेषावच्छिन्नाधिकरणे विशेषणतया वृत्तित्वम्, सिद्धौ अभावान्तवैशिष्ट्यन्तु विशेषणताविशेषावच्छिन्नाधिकरणे समवेतत्वमित्यनुगतवैशिष्ट्यासम्भवादेव नैकाभावविशिष्टापराभावविशिष्टसिद्धित्वेन प्रतिबन्धकत्वम्, किन्तु तावदभावविशिष्टसिद्धित्वेनैवेति दिक् ।

स्वतन्त्रास्तु तत्तदिच्छाविरहकूटविशिष्टसिद्धित्वावच्छिन्नाभावस्याऽ-

तत्पक्षकत्वनिष्ठावच्छेदकताभिन्ना सती तत्साध्यकत्वनिष्ठावच्छेदकताभिन्ना सती तल्लिङ्गकत्वनिष्ठावच्छेदकताभिन्ना सती अनुमितित्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिता या विशेष्यत्वनिष्ठावच्छेदकता तन्निरूपितेच्छात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावनिवेशेनैवोक्तापत्तिवारणादिति वदन्ति ।

गौरवानवकाशादिति । ननु तत्तदेकाभावेऽपराभाववैशिष्ट्यप्रवेशे विनिगमकाभावेनानन्तकार्यकारणभावकल्पनाप्रयुक्तमेव गौरवम्, अस्माकन्तु तत्तदिच्छाविरहव्यक्तीनामेकत्रद्वयमितिरीत्या युगपत्सिद्धिविशेषणत्वेन नानन्तकार्यकारणभाव इति कथं न चेत्यादिग्रन्थस्य खण्डनमिति चेन्न । नचेत्यादिग्रन्थेन सामानाधिकरण्यस्य द्विधाप्रवेशप्रयुक्तगौरवमुक्त्वा एकत्रद्वयमितिरीत्या युगपद्विशेषणत्वे लाघवं प्रदर्शितं नतु कार्यकारणभावस्य गौरवमुक्त्वा लाघवम्प्रदर्शितम्, अतस्तस्य खण्डनमिति दिक् ।

स्वतन्त्रास्त्विति । ननु एकेच्छाविरहविशिष्टो योऽपरेच्छाविरहस्तद्विशिष्टसिद्धित्वावच्छिन्नाभावस्य अखण्डस्य यथा तद्व्यक्तित्वेन हेतुत्वं तथैव अपरेच्छाविरहविशिष्टो य एकेच्छाविरहस्तद्विशिष्टसिद्धित्वावच्छिन्नाभावस्यापि अखण्डतया तत्तद्व्यक्तित्वेन विनिगमनाविरहात् हेतुत्वं दुर्वारमित्यनन्तकार्यकारणभावस्तदवस्थ एवेति चेन्न ।

समनियताभावानामैक्याभ्युपगमेन तद्व्यक्तित्वेन सकलतादृशाभावव्यक्तीनां कारणत्वसम्भवान्न दोष इति ।

खण्डस्य तत्तद्व्यक्तित्वेनैव हेतुत्वम् तत्तद्व्यक्तित्वन्तु तादात्म्येन सैव व्यक्तिरित्यदोषः, चिन्तामणिकृन्मते विशिष्टाभावस्याऽतिरिक्तत्वात् । न च कारणतामात्रस्य धर्मावच्छेद्यत्वे प्रमाणाभावादवच्छेदकं विनैव तादृशासिद्ध्यभावस्यानुमितिकारणत्वमिति प्रलापो ग्राह्यः । व्यापकतागर्भायाः कारणताया अवच्छेदकस्य नानाव्यक्तिस्थल इवैकव्यक्तिस्थलेऽपि सम्भवेन वारयितुमशक्यत्वात्, पदार्थान्तररूपायास्तत्कारणताया अवच्छेदकस्य नानाव्यक्तिकारणेष्वपि परित्यागप्रसङ्गादित्याहुः । तच्चिन्त्यम् ।

केचित्तु पक्षधर्मिकसाध्यविधेयकानुमितित्वप्रकारकेच्छात्वेनैवानुगतरूपेणोत्तेजकता लाघवात्, इच्छान्तरस्थले च तादृशेच्छोत्पत्त्यैवानुमितिस्तत्रैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तेरिति प्राहुः ।

आलोकपरामर्शादिति । आलोकमात्रपरामर्शादित्यर्थः । तदन्येति । धूमेनाऽऽलोकेन वा पर्वते वह्न्यनुमितिर्जायतामितीच्छायामपि धूमलिङ्गकानुमित्यर्थं मात्रपदम्, तथाच धूमलिङ्गकानुमित्साविरहविशिष्टैवालोकलिङ्गकानुमित्सा धूमलिङ्गकानुमितौ प्रतिबन्धिकेत्यर्थः ।

अत्र यद्यपि धूमलिङ्गकानुमितित्वप्रकारकेच्छात्वेनैवोत्तेजकत्वे धूमेन द्रव्यत्वस्य आलोकेन च वह्नेः पर्वतेऽनुमितिर्जायतामितीच्छायामपि वह्नि-

---

ननु तद्व्यक्तित्वं तत्तादात्म्यविशिष्टस्वरूपसम्बन्धेन तादृशासिद्ध्यभावत्वं, तथाच विशेष्यविशेषणभावे विनिगमनाविरहात्तद्व्यक्तित्वमप्यनन्तमित्यत आह । तद्व्यक्तित्वन्तु तादात्म्येन सैव व्यक्तिरिति । ननु विशिष्टाभावो विशेषणाभावरूपो विशेष्याभावरूपश्च, अत्र यदि विशेषणाभावस्य 'तद्व्यक्तित्वने' हेतुत्वं तदा केवलपरामर्शादनुमितिर्न स्यात्, विशेष्याभावस्य तद्व्यक्तित्वेन हेतुत्वे च यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शः तत्रानुमितिर्न स्यादत आह चिन्तामणिकृन्मते इति । एकव्यक्तिस्थलेपीति । कारणत्वं यदि कार्यसमानाधिकरणाभावाप्रतियोगित्वम्, तदा विशिष्टाभावोभयाभावमादायाऽप्रसिद्धिः, अतः कार्यसमानाधिकरणाभावप्रतियोगितायां कारणतावच्छेदकतदितरोभयानवच्छिन्नत्वम्, कारणतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे वा तादृशाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं निवेश्यम् इति एकव्यक्तिकारणस्थलेऽपि कारणतावच्छेदकधर्म आवश्यक इति ।

वस्तुतः चालिनीन्यायेन तत्तद्धर्मावच्छिन्नप्रतियोगित्वस्य सर्वत्र कारणे सत्त्वात् तादृशप्रतियोगितानवच्छेदकधर्मवत्त्वस्य कारणतारूपत्वे तु अकारणस्यापि तादृशप्रतियोगितानवच्छेदकीभूतप्रमेयत्वादिमत्त्वेन कारणत्वप्रसङ्गादतस्तादृशप्रतियोगितानवच्छेदकत्वं यन्निष्ठं तस्य तेन रूपेण कारणत्वं वाच्यम्, तथाचाऽकारणनिष्ठप्रमेयत्वस्य तादृशानवच्छेदकत्वविरहान्न तेन रूपेण कारणत्वमिति । एवं चैकव्यक्तिस्थलेऽपि विशिष्टाभावोभयाभावप्रतियोगित्वसत्त्वेन कारणत्वानुपपत्त्या तत्रापि तादृशप्रतियोगितानवच्छेदकत्वं यन्निष्ठं तस्य तेन रूपेण कारणत्वं वाच्यमिति ।

धूमेनाऽनुमिनुयामितीच्छायामालोकपरामर्शादसत्यामपि सिद्धौ यदि नाऽनुमितिस्तदा तदन्यमात्रलिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत्पृथक् प्रतिबन्धिका ।

---

व्याप्यधूममात्रपरामर्शात्पर्वते वह्न्यनुमित्यापत्तेः, धूमलिङ्गकवह्न्यनुमितित्वप्रकारकेच्छात्वेन तथात्वे तु धूमेन महानसादौ आलोकेन च पर्वते वह्न्यनुमितिर्जायतामितीच्छायामपि धूममात्रपरामर्शात्पर्वते वह्न्यनुमित्यापत्तेः, न च पर्वतपक्षकधूमलिङ्गकवह्न्यनुमितौ तादृशानुमितित्वप्रकारकेच्छाविरहविशिष्टालोकलिङ्गकेच्छात्वेनैव प्रतिबन्धकत्वम्, धूमेनालोकेन वा अनुमितिर्जायतामितीच्छायामपि धूममात्रस्य परामर्शाद् धूमलिङ्गकानुमित्यभावापत्तेः, तदिच्छायाः पर्वतपक्षकवह्न्यनुमितित्वप्रकारकत्वाभावात् ।

---

तथात्वेतु—उत्तेजकत्वेतु । ननु धूमलिङ्गकवह्न्यनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे धूमेन आलोकेन वा अनुमितिर्जायतामितीच्छादशायां धूमपरामर्शाद् पर्वते धूमलिङ्गकवह्न्यनुमितिर्न स्यात्, धूमलिङ्गकवह्न्यनुमितित्वप्रकारकेच्छाविरहविशिष्टान्यलिङ्गकेच्छासत्त्वाद् वह्न्यनुमित्यनुपपत्तिसंभवे आपत्तिदानमसंगतमिति चेन्न ।

तत्पक्षकत्वनिवेशस्य व्याप्तिदानायैव आपत्तेः प्रदर्शनात्, अनुपपत्तिस्तु तत्पक्षकत्वनिवेशेऽपि स्थास्यतीति न तदभिधानाऽसंगतिः । अथवा धूमलिङ्गकवह्न्यनुमितित्वप्रकारकेच्छात्वस्य वह्निसाध्यकत्वातिरिक्तसाध्यकत्वाप्रकारकधूमलिङ्गकेत्यर्थः, तथा च धूमेन आलोकेन वा अनुमितिर्जायतामितीच्छाया अपि उत्तेजकत्वान्न दोषः । न च धूमेन वह्निविधेयकानुमितिः घटविधेयकानुमितिश्च आलोकेन वह्न्यनुमितिर्जायतामितीच्छादशायां वह्निव्याप्यधूमवत्तापरामर्शाद् वह्न्यनुमित्यनुपपत्तिः, तादृशेच्छायाः वह्निसाध्यकत्वातिरिक्तघटविधेयकत्वप्रकारकत्वेनोत्तेजकत्वासम्भवात्, तथाच तदप्रकारकेच्छाविरहविशिष्टाऽन्यलिङ्गकानुमित्सारूपप्रतिबन्धकसत्त्वादिति वाच्यम् । तत्साध्यकत्वातिरिक्तसाध्यकत्वप्रकारत्वानिरूपिता या अनुमितिनिष्ठा विशेष्यता तच्छालीच्छाविरहविशिष्टान्यलिङ्गकानुमित्सायास्तत्साध्यकतल्लिङ्गकानुमितौ प्रतिबन्धकत्वोक्तौ तदनुपपत्त्यभावात्, वह्निसाध्यकत्वातिरिक्तघटसाध्यकत्वप्रकारत्वानिरूपितत्वस्य वह्निसाध्यकत्वप्रकारकानुमितिनिष्ठविशेष्यतायां सत्त्वेन तदिच्छासङ्ग्रहात् ।

अथ तथापि धूमेन वह्निविधेयिका सती घटविधेयिका या अनुमितिः आलोकेन वह्न्यनुमितिश्च जायतामित्याकारिका यत्रेच्छा ततो वह्निव्याप्यधूमवान् घटव्याप्यधूमवानित्युभयसाध्यकपरामर्शः तत्र उभयसाध्यकानुमित्यनुपपत्तिः, उभयप्रकारतानिरूपितकानुमितिनिष्ठविशेष्यताशालितादृशेच्छाया वह्निसाध्यकत्वातिरिक्तसाध्यकत्वानिरूपितानुमितिनिष्ठविशेष्यताकत्वविरहेण तदिच्छाया असङ्ग्रहात् । न चालोकलिङ्गकत्वप्रकारकानुमितिनिष्ठविशेष्यतायाः वह्निसाध्यकत्वातिरिक्तसाध्यकत्वाप्रकारत्वात्तत्संग्रह इति वाच्यम् । एवंसति धूमेन आलोकेन च वह्नेरनुमितिर्जायतामितीच्छायाः सङ्ग्रहापत्तेः, तद्वारणाय वह्निसाध्यकत्वातिरिक्तसाध्यक-

त्वप्रकारत्वानिरूपिता धूमलिङ्गकत्वप्रकारतानिरूपिता या अनुमितिनिष्ठाविशेष्यता तन्निरूपके-च्छायामुत्तेजकत्वेनोक्तदोषतादवस्थ्यादिति चेन्न ।

तद्धर्मावच्छिन्नविधेयत्वातिरिक्तविधेयत्वानिरूपकानुमितित्वावच्छिन्नं प्रत्येव तादृशेच्छा-विरहविशिष्टान्यलिङ्गकानुमितेरपि प्रतिबन्धकत्वोक्त्या निरुक्तानुपपत्तेरभावात्, निरुक्तानु-मितित्वस्य प्रतिबध्यतावच्छेदकानाक्रान्तत्वादिति ।

वस्तुतो धूमलिङ्गकवन्ह्यनुमितित्वावच्छिन्नं प्रति लिङ्गकत्वनिष्ठावच्छेदकताभिन्नतत्साध्यक-त्वनिष्ठावच्छेदकताभिन्नपक्षकत्वनिष्ठावच्छेदकताभिन्नानुमितित्वनिष्ठावच्छेदकताभिन्ना या धू-मलिङ्गकवन्ह्यनुमित्यन्यवृत्तिधर्मनिष्ठावच्छेदकता तदनिरूपिता सती तल्लिङ्गकानुमितित्वनिष्ठावच्छे-दकतानिरूपितविषयताशालीच्छात्वावच्छिन्नप्रतियोगिताकाभावविशिष्टान्यलिङ्गकेच्छात्वेन प्रति-बन्धकत्वं वाच्यम्, तथा च पूर्वोक्तेच्छाभावस्यापि तादृशेच्छात्वावच्छिन्नप्रतियोगिताकाभा-वान्तर्गततया तद्विशिष्टान्यलिङ्गकेच्छाविरहात्नानुपपत्तिः । एवं धूमेन द्रव्यत्वस्य आलोकेन च वन्हेः पर्वतेऽनुमितिर्जायतामितीच्छामादायापत्तेरपि वारणसम्भवात्, तत्र तत्तदवच्छेदक-ताभिन्नद्रव्यत्वविधेयकत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्वात् । एवं धूमेन महानसे आ-लोकेन च पर्वते वन्ह्यनुमितिर्जायतामितीच्छामादायोक्तापत्तिर्दुर्वारैवेति ।

परे तु आपत्त्यनुपपत्त्योः समानदूषकत्वमेव, धूमलिङ्गकवन्ह्यनुमितिः तादृशानुमितीतर-भिन्ना धूमलिङ्गकवन्ह्यनुमितित्वप्रकारकेच्छाविरहविशिष्टान्यलिङ्गकेच्छाभावादित्यत्र तादृशा-नुमितित्वं धूमेन आलोकेन वा वन्ह्यनुमितीच्छास्थलीयतादृशानुमितावप्यस्ति तत्र तादृशहेत्व-भावाद् भागासिद्धिसम्पादकतयाऽनुपपत्तेर्दूषकत्वम् । एवं धूमलिङ्गकवन्ह्यनुमित्युत्पत्तिक्ष-णोत्पत्तिकानुमितिः तादृशानुमितीतरभिन्ना पूर्वोक्ततादृशेच्छाभावादित्यत्र धूमलिङ्गकवन्ह्यनु-मित्युत्पत्तिकत्वविशिष्टानुमितीतरत्वस्य परामर्शानन्तरं पुनर्धूमेनानुमितिर्जायतामितीच्छासत्वे धूमेन महानसे इत्यादीच्छायाश्चतुर्थक्षणे प्रसिद्धायामनुमितौ सत्वात्तादृशानुमितीतरभेदाभाव-स्यापि सत्वाच्च तत्र तादृशहेतोः सत्वेन व्यभिचारद्वाराऽऽपत्तेर्दूषकत्वम् । एवं च द्वयोर्हेत्वा-भाससम्पादकतया दूषकत्वेन साम्यादित्याहुरिति संक्षेपः ।

**धूमलिङ्गकानुमित्यभावापत्तेरिति ।** धूमलिङ्गकानुमित्यनुपपत्तेरित्यर्थः । अथ तत्पक्षकत्वादेरितरवारकपर्याप्तिर्निवेशनीया, तथाच पर्वतपक्षकत्वातिरिक्तपक्षकत्वाप्रकारिका वह्निसाध्यकत्वातिरिक्तसाध्यकत्वाप्रकारिका या धूमलिङ्गकानुमितिः तद्विरहविशिष्टान्यलिङ्गका-नुमितित्वेन प्रतिबन्धकत्वोक्तावेवोक्तदोषवारणसंभवात् यदिच्छासत्वे इत्यादिकं व्यर्थ-मिति चेन्न ।

आलोकेन महानसे वन्ह्यनुमितिर्जायतामितीच्छासत्वे वन्हिव्याप्यधूमवान्पर्वत इति-परामर्शसत्वे वन्ह्यनुमित्यनुत्पादापत्तेः, तदिच्छायाः पर्वतपक्षकत्वातिरिक्तमहानसपक्षकत्व-प्रकारकत्वात्, तदप्रकारकेच्छाविरहविशिष्टान्यलिङ्गकानुमितिरूपप्रतिबन्धकसत्वादिति ।

**अत एव—**ईदृशप्रतिबध्यप्रतिबन्धकभावविवक्षणेन । **धूमालोकोभयलिङ्गकानु-मितिर्जायतामितीच्छेति ।**

अथात्र प्रथमं धूमपरामर्शः ततः केवलाऽऽलोकेन वह्न्यनुमितिर्जायतामितीच्छा तत

तथापि यद्यदिच्छाव्यक्तिदशायामालोकलिङ्गकानुमितीच्छाव्यक्तिसत्त्वेऽपि पर्वतधर्मिकधूमलिङ्गकवह्न्यनुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टालोकलिङ्गकानुमितित्वप्रकारकेच्छात्वेनैव तादृशधूमलिङ्गकानुमितिप्रतिबन्धकत्वं वाच्यम्, अत एव आलोकलिङ्गिका सती या धूमलिङ्गिका पर्वते वह्न्यनुमितिः सा जायतामितीच्छासत्त्वेऽपि पर्वतधर्मिकधूममात्रपरामर्शान्न वह्न्यनुमितिस्तदिच्छाव्यक्तेरुत्तेजकानन्तर्गतत्वात् ।

न च यत्र धूममात्रपरामर्शोत्तरं धूमालोकोभयलिङ्गकानुमितिर्जायतामितीच्छा ततस्तदुभयलिङ्गकपरामर्शोत्पत्त्यानुमितिस्तत्र तदुभयलिङ्गकपरामर्शोत्पत्तिक्षणे धूमलिङ्गकानुमितिः स्यात्, अग्रिमानुमित्यनुरोधेन तदिच्छाव्यक्तेरुत्तेजकत्वादिति वाच्यम् । तत्र समूहालम्बनपरामर्शव्यक्तिविशिष्टतत्तदिच्छाव्यक्तित्वेनैवोत्तेजककोटौ निवेश्यत्वात् ।

---

उभयलिङ्गकपरामर्शः तत उभयलिङ्गकानुमितिः, तस्या उभयलिङ्गकपरामर्शक्षणे आपत्तिसम्भवे उभयलिङ्गकानुमितीच्छानुधावनं व्यर्थमिति चेन्न ।

आलोकलिङ्गका सती धूमलिङ्गका या वह्न्यनुमितिः सा जायतामितीच्छाया एव उभयलिङ्गकानुमितिपदेन विवक्षितत्वात्, तस्या एव पूर्वोपात्ततया इदानीमपि तस्या एव ग्रन्थकारेण धृतत्वात् ।

समूहालम्बनपरामर्शव्यक्तिविशिष्टतत्तदिच्छाव्यक्तित्वेनैवेति । ननु समूहालम्बनपरामर्शव्यक्तेरुत्तेजकत्वेनैवापत्तिवारणसम्भवे तादृशपरामर्शविशिष्टतदिच्छाव्यक्तेरुत्तेजकत्वाभिधानमसङ्गतम्, एवं च समूहालम्बनपरामर्शविरहविशिष्टालोकलिङ्गकानुमितित्सायाः स्वोत्पत्तिक्षणे सत्त्वेन प्रतिबन्धकतया न परामर्शक्षणेऽनुमित्यापत्तिरिति चेन्न ।

अन्यलिङ्गकेच्छायां तल्लिङ्गकेच्छाया एवोत्तेजकत्वमित्यादिना अनुमित्साया उत्तेजकत्वस्यैव दीधितिकृदभिप्रेततया परामर्शविशिष्टेच्छाया एवोत्तेजकत्वाभिधानम् । अथवा यत्र धूममात्रपरामर्शः ततो धूमालोकोभयलिङ्गकानुमित्सा तत उभयलिङ्गकापेक्षाबुद्ध्यात्मकपरामर्शः तत उभयलिङ्गकानुमितिः तत्रैवोक्तसमूहालम्बनपरामर्शधर्मिकालोकांशेऽप्रामाण्यज्ञानं ततो भस्मलिङ्गकानुमित्सा ततो भस्मलिङ्गकपरामर्शः ततो वह्न्यनुमितिः तत्र भस्मलिङ्गकपरामर्शक्षणे धूमलिङ्गकवह्न्यनुमित्यापत्तिर्यत्र वा प्रथमं धूमपरामर्शः तत उभयलिंगकानुमितीच्छा तत उभयलिंगकापेक्षाबुद्ध्यात्मकपरामर्शस्तदुत्तरक्षणेऽनुमितिस्तत्रैव धूमपरामर्शेऽप्रामाण्यज्ञानं तत आलोकेनानुमित्यन्तरं जायतामितीच्छा तत आलोकपरामर्शादनुमितिस्तत्राऽऽलोकपरामर्शक्षणे आलोकलिङ्गकानुमित्यापत्तेः यथादेच्छासत्त्वे आलोकलिंगकेच्छासत्त्वे आलोकलिंगकानुमितेः प्रामाणिकतया पूर्वोत्पन्नापेक्षाबुद्ध्यात्मकसमूहालम्बनपरामर्शविशिष्टालोकलिङ्गकानुमित्सायाः स्वोत्पत्तिक्षणे विरहेण तदभावसत्त्वादतः समूहालम्बनपरामर्शविशिष्टेच्छाया उत्तेजकत्वं वाच्यम्, तथाच तादृशपरामर्शविशिष्टोभयलिङ्गकानुमित्सायास्तादृशपरामर्शोत्पत्तिक्षणे एव सत्त्वेन तद्विरहविशिष्टालोकलिङ्गकेच्छायाः स्वोत्पत्तिक्षणे सत्त्वेन प्रतिबन्धकतया न तदुत्तरानुमित्यापत्तिरिति ध्येयम् ।

न च सिद्धिधर्मिकयद्यदप्रामाण्यज्ञानसत्त्वे सिद्धिदशायामनुमितिः प्रामाणिकी तत्तदप्रामा-

इत्थं चाऽऽलोकेन महानसे वन्ह्यनुमितिर्जायतामितीच्छासत्त्वेऽपि धूमपरामर्शात्पर्वते वन्ह्यनुमितिरप्रत्यूहैव तदिच्छाव्यक्तेरपि स्वस्मिन्नुत्तेजकत्वात्। अत एवालोकेन वन्ह्यनुमितिर्जायतामितीच्छोत्तरं धूमालोकयोः समूहालम्बनपरामर्शात्पर्वते वन्ह्यनुमितिर्न स्यात्तस्या अपि धूमपरामर्शाव्यवहितोत्तरत्वेन धूमालिङ्गकानुमितित्वात् तादृशानुमितिविरोध्यालोकलिङ्गकानुमितत्वायाः सत्त्वादिति परास्तम्। तदिच्छाव्यक्तेरप्युत्तेजकत्वात्तत्र धूमलिङ्गकत्वप्रकारकेच्छात्वेन उत्तेजकत्वासम्भवस्य अनुपदमुक्तत्वात्।

यत्तु पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रति आलोकादिलिङ्गकपरामर्शाभावविशिष्टालोकादिमात्रलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वं वाच्यम्, न तु धूमादितत्तल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तदन्यलिङ्गकानुमितीच्छात्वेन प्रतिबन्धकत्वं कार्यतावच्छेदकगौरवापत्तेः, तथाचोक्तस्थले आलोकलिङ्गकपरामर्शसत्त्वेन तल्लिङ्गकानुमित्सा नानुमितिप्रतिबन्धिका, न च मात्रपदवैयर्थ्यम्, धूमपरामर्शोत्तरमालोकेन धूमेन वा वह्न्यनुमितिर्जायतामितीच्छादशायामनुमित्यर्थं तदुपादानादिति। तन्न। धूमपरामर्शदशायामालोकेन भस्मना च वह्न्यनुमितिर्जायतामितीच्छासत्त्वेऽपि अनुमितिप्रसङ्गात्, आलोकपरामर्शाभावाविशिष्टाया अपि तादृशेच्छाया आलोकलि-

ण्यज्ञानाभावविशिष्टसिद्धेः प्रतिबन्धकत्वस्य पूर्वं स्वीकरणीयतया भस्मलिङ्गकेच्छोत्पत्तिक्षणे तादृशसिद्धिसत्त्वान्न तत्रानुमित्यापत्तिरिति वाच्यम्। यत्र सिद्ध्यात्मकपरामर्शे सिद्ध्यंशेऽप्रामाण्यज्ञानं ततो यादृशेच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिः प्रामाणिकी तत्तदप्रामाण्यज्ञानाभावविशिष्टत्यादिक्रमेणोत्तेजकत्वादेवानुमित्यनुपपत्तेर्वारणात्। सिद्धिधर्मिकत्वमप्रामाण्यज्ञानांशे न निवेश्यम्, तथाचोक्तस्थले तादृशाऽप्रामाण्यज्ञानसत्त्वे सिद्धिसत्त्वे स्वात्मकानुमितेः प्रामाणिकतया तादृशाऽप्रामाण्यज्ञानाभावविशिष्टसिद्धिविरहात्तादृशपरामर्शोत्पत्तिक्षणेऽनुमित्यापत्तिर्दुर्वारैवेत्यतः समूहालम्बनपरामर्शविशिष्टत्वेन तदुभयलिङ्गकेच्छाया उत्तेजकत्वं वाच्यमिति ध्येयम्।

अनुपदमुक्तत्वादिति। यद्यपीत्यादिनेत्यर्थः। यत्त्विति। उक्तस्थले—आलोकेन वन्ह्यनुमितिर्जायतामितीच्छोत्तरं समूहालम्बनपरामर्शस्थले। तदुपादानादिति। मात्रपदोपादानादित्यर्थः। तथाच मात्रपदेन धूमालिङ्गकत्वाप्रकारकालोकलिङ्गकानुमित्सैव प्राह्येति भावः। आलोकेन भस्मना च वह्न्यनुमितिर्जायतामितीच्छासत्त्वेपीति। ननु पूर्वोपात्त धूमलिङ्गका सती आलोकलिङ्गका या पर्वते वन्ह्यनुमितिः सा जायतामितीच्छास्थलीयधूममात्रपरामर्शादनुमित्यापत्तिसंभवे तत्परित्यागोऽनुचितस्तादृशेच्छायामालोकलिङ्गकत्वसत्त्वेऽपि धूमलिङ्गकत्वाप्रकारकत्वविरहेण धूमलिङ्गकत्वाप्रकारकालोकलिङ्गकानुमित्साभावस्य तत्र सत्त्वादिति चेन्न।

आलोकलिङ्गकपरामर्शाभावविशिष्टालोकमात्रलिङ्गकानुमित्सापदेन आलोकपरामर्शा-

यदि च तत्रानुमितिस्तदा सिद्धिसत्त्वे तत्रानुमितेर्वारणाय तल्लिङ्गकानुमितीच्छा तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या।

---

ङ्गकत्वमात्रप्रकारकत्वात्। न चालोकलिङ्गकपरामर्शाभावविशिष्टेन धूमलिङ्गकत्वाप्रकारकालोकलिङ्गकानुमितित्वेन पर्वतधार्मिकवन्ह्यनुमितिसामान्यं प्रति विरोधित्वान्नैष दोष इति वाच्यम् भस्मलिङ्गकपरामर्शोत्तरमपि आलोकेन धूमेन च वह्न्यनुमितिर्जायतामितीच्छासत्त्वे वन्ह्यनुमितिप्रसङ्गात् तादृशेच्छाया धूमलिङ्गकत्वप्रकारकत्वेनाविरोधित्वात्, तस्मादालोकलिङ्गकानुमितित्वावच्छिन्नं प्रति प्रागुक्तक्रमेण तदन्यमात्रलिङ्गकानुमितित्वेन प्रतिबन्धकत्वमेव स्वीकार्यमिति दिक्।

यदि च तत्रेति। अन्यसाध्यकानुमितित्वाया इवाऽन्यलिङ्गकानुमितित्वाया अपि भावविशिष्टा सती आलोकलिङ्गकत्वातिरिक्तलिङ्गकत्वप्रकारत्वानिरूपिताऽनुमितिनिष्ठविशेष्यत्वानिरूपिका या इच्छा तस्याः विवक्षितत्वात्, प्रकृते च अनुमित्यंशे एकत्र द्वय मितिरीत्या प्रत्येकमुभयलिङ्गकत्वस्य प्रकारतया आलोकलिङ्गकत्वातिरिक्तलिङ्गकत्वप्रकारत्वानिरूपितानुमितिनिष्ठविशेष्यत्वानिरूपकत्वस्य तादृशेच्छायां सत्त्वात्तादृशेच्छासत्त्वे आपत्तिविरहादिति। नचैवं सति धूमपरामर्शसत्त्वे आलोकमात्रलिङ्गकानुमितित्वादशायामनुमित्यापत्तिरिति वाच्यम्। आलोकलिङ्गकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वानिरूपकालोकलिङ्गकत्वनिष्ठप्रकारतानिरूपकेच्छाया निवेशात्।

ननु पर्वते वह्निव्याप्यधूमवत्तापरामर्शोत्तरमालोकेन महानसे वह्न्यनुमितिर्जायतामितीच्छादशायामनुमित्यनुपपत्तिसंभवे आपत्तिदानमसंगतमिति चेन्न।

पर्वतपक्षकवह्निसाध्यकानुमितित्वावच्छिन्नं प्रति पर्वतपक्षकत्वातिरिक्तपक्षकत्वाप्रकारिका वह्निसाध्यकत्वातिरिक्तसाध्यकत्वाप्रकारिका या आलोकलिङ्गकपरामर्शाभावविशिष्टालोकमात्रलिङ्गकानुमित्सा तस्याः प्रतिबन्धकत्वोक्तौ उक्तानुपपत्तिविरहात्। भस्मलिङ्गकपरामर्शोत्तरमपीति। नन्वत्र धूमेन महानसे आलोकेन च पर्वते वह्न्यनुमितिर्जायतामितीच्छासत्त्वे वह्निव्याप्यधूमवान् पर्वत इति परामर्शसत्त्वे पूर्वोक्तापत्तिसंभवे तत्परित्यागोऽनुचित इति चेन्न।

पर्वतपक्षकत्वातिरिक्तपक्षकत्वाभावविशिष्टं यद् धूमलिङ्गकप्रकारकत्वं तदभाववती या आलोकपरामर्शाभावविशिष्टआलोकलिङ्गकेच्छा तस्या एव विवक्षितत्वात्, तादृगिच्छाया महानसपक्षकत्वविशिष्टधूमलिङ्गकत्वप्रकारकतया तदभावविशिष्टधूमलिङ्गकत्वाप्रकारकत्वादिति।

अथ तथापि भस्मलिङ्गकपरामर्शसत्त्वे आलोकेन भस्मना च वह्न्यनुमितिर्जायतामितीच्छासत्त्वेऽनुमितिर्न स्यात् तादृशेच्छायां धूमलिङ्गकत्वाप्रकारकत्वाऽऽलोकलिङ्गकत्वप्रकारकत्वयोः सत्त्वात्, एवं आलोकलिङ्गकपरामर्शाभावविशिष्टत्वस्यापि सत्त्वात्तादृशेच्छायाः प्रतिबन्धकत्वेनाऽनुपपत्तिसंभवे आपत्तिदानमसंगतमिति चेन्न।

धूमलिङ्गकपरामर्शकालीनाया आलोकलिङ्गकपरामर्शाभावविशिष्टधूमलिङ्गकत्वाप्रकारका

स्वतः प्रतिबन्धकत्वे मानाभावादिति भावः । तत्रेति । सिद्ध्यात्मकालोकलि-ङ्गकपरामर्शोत्तरं धूमेनानुमिनुयामितीच्छादशायामनुमितेर्वारणायेत्यर्थः । न च तत्तदनुमितिव्यक्तीनामुत्तेजककोटौ अप्रवेशादेव न तत्रानुमिति-रिति वाच्यम् । यत्र सिद्ध्यात्मकधूमपरामर्शाद्वह्न्यनुमितिस्तत्र धूमपराम र्शोत्पत्तिक्षण वह्न्यनुमित्यापत्तेः, पर्वतपक्षकवह्न्यनुमितौ तादृगिच्छाव्यक्तेर-

---

लोकलिङ्गकानुमितिसायाः प्रतिबन्धकत्वविवक्षया तद्वारणात् तादृशेच्छायाः धूमलिङ्गकपरा-मर्शाऽकालीनतयाऽप्रतिबन्धकत्वात् । न च तथापि धूमलिङ्गकभस्मलिङ्गकसमूहालम्बनपरा-मर्शदशायामालोकेन च भस्मना चाऽनुमितिजायतामितीच्छादशायामनुमित्यनुपपत्तिस्तस्या अपि धूमलिङ्गकपरामर्शकालीनत्वेन धूमलिङ्गकत्वाप्रकारकत्वेन प्रतिबन्धकत्वादिति वाच्यम् । धूमान्यलिङ्गकपरामर्शाभावविशिष्टो यो धूमलिङ्गकपरामर्शस्तत्कालीनधूमलिङ्गकत्वाप्रकारको-लोकलिङ्गकानुमितिसात्वेन, आलोकलिङ्गकपरामर्शकालीनत्वधूमान्ययत्किञ्चिल्लिङ्गकपरामर्शावि-शिष्टतल्लिङ्गकानुमितिसाकालीनत्वोभयाभाववद्धूमलिङ्गकत्वाप्रकारकालोकलिङ्गकानुमितिसात्वेन वा प्रतिबन्धकत्वोक्तौ तद्वारणात् ।

केचित्तु आलोकलिङ्गकपरामर्शाभावविशिष्टधूमलिङ्गकत्वाप्रकारकालोकलिङ्गकेच्छायां धूम-लिङ्गकपरामर्शाकालीनत्वाऽऽलोकान्यलिङ्गकत्वोभयाभावस्य विशेषणीयत्वात्, तथाच भस्म-लिङ्गकपरामर्शोत्तरजायमानायां भस्मालोकोभयलिङ्गकेच्छायां तद्विशेषणाक्रान्तत्वेऽपि तादृशो-भयाभावविरहेण तादृशेच्छायाः प्रतिबन्धकत्वाभावात् तादृशस्थले नानुपपत्तिः । न च वह्नि-व्याप्यभस्मवान् वह्निव्याप्यधूमवांश्च पर्वत इति समूहालम्बनपरामर्शसत्त्वे भस्मालोकोभयलि-ङ्गकेच्छासत्त्वेऽनुमितिर्न स्यात् तादृशेच्छायां धूमलिङ्गकपरामर्शाकालीनत्वविरहप्रयुक्तोभयाभा-वस्याऽक्षततया प्रतिबन्धकत्वेनाऽनुपपत्तितादवस्थ्यमिति वाच्यम् । धूमलिङ्गकपरामर्शाका-लीनत्वाऽऽलोकान्यलिङ्गकत्वान्यतरआलोकलिङ्गकत्वोभयाभावस्याऽऽलोकलिङ्गकपरामर्शाभाव-विशिष्टेच्छायां निवेशनीयत्वात्, तथाच भस्मधूमोभयलिङ्गकपरामर्शोत्तरोत्पन्नभस्मालोकोभय-लिङ्गकेच्छायां धूमलिङ्गकपरामर्शाकालीनत्वविरहेऽपि आलोकान्यभस्मलिङ्गकत्वसत्त्वेनाऽन्यतर-सत्त्वात्, एवमालोकान्यभस्मलिङ्गकत्वस्यापि सत्त्वेनोभयाभावविरहेण तादृशेच्छाया अप्रतिब-न्धकत्वान्नानुपपत्तिरिति । आपत्तिस्तु भवत्येव भस्मलिङ्गकपरामर्शोत्तरजायमानायां धूमलि-ङ्गकपरामर्शोत्तरजायमानायां च धूमालोकोभयलिङ्गकेच्छायां धूमलिङ्गकत्वाप्रकारकत्वविरहात्, उभयाभावविरहाच्च तादृशेच्छाया अप्रतिबन्धकत्वादिति प्राहुः ।

यत्तु—यल्लिङ्गकपरामर्शकालीना या तल्लिङ्गकानुमितिसा तत्कालीनत्वमालोकलिङ्गकपराम र्शाभावविशिष्टधूमलिङ्गकत्वाप्रकारकालोकलिङ्गकेच्छायां निवेश्यम्, तथा च भस्मलिङ्गकपरा मर्शकालीनभस्मालोकोभयलिङ्गकेच्छायां यल्लिङ्गकपरामर्शमध्ये भस्मलिङ्गकपरामर्शः तद्विशिष्टा या भस्मलिङ्गकोभयलिङ्गकानुमितिसा तदकालीनत्वविरहान्न तादृशेच्छायाः प्रतिबन्धकत्वमतो नानुपपत्तिः । एवमापत्तिर्भवत्येव भस्मलिङ्गकपरामर्शकालीनधूमालोकोभयलिङ्गकेच्छायां भ-स्मलिङ्गकपरामर्शविशिष्टभस्मलिङ्गकानुमितिसाकालीनत्वसत्त्वेऽपि धूमलिङ्गकत्वाप्रकारत्वविरहा-

च्युत्तेजकत्वात्, अन्यथा तत्रैव सिद्ध्यात्मकधूमपरामर्शाद्वह्न्यनुमितिर्न स्यादिति भावः । यद्यपि वक्ष्यमाणस्वाविषयसिद्ध्यनुपाहिनत्वाविशेषणेनैव धूमादिलिङ्गकतत्तत्परामर्शविशिष्टायाः तत्तादिच्छाव्यक्तेरुत्तेजकतायां न कोपि दोषः प्रागुक्तस्थले धूमपरामर्शविशिष्टानुमित्साव्यक्तिविरहस्य तत्सिद्धिसत्त्वादेव धूमपरामर्शोत्पत्तिदशायामपि अनुमित्यापत्तेरसम्भवात्, तथापि मिश्रादिसम्मतमेकावच्छेदेन पक्षतापरामर्शोभयजन्यत्वमनुमितेः सम्पादयितुमनुमित्सामेवाऽन्यथा निर्वक्ति तल्लिङ्गकानुमितीच्छेति । बाध्येति परेणाऽन्वयः, उत्तेजका इति शेषः । ननु तल्लिङ्गकानुमितित्वप्रकारकेच्छाव्यक्तानामुत्तेजकत्वे वह्न्यनुमितिर्जायतामितीच्छादशायां सिद्ध्यात्मकालोकपरामर्शादालोकलिङ्गकानुमितिर्न स्यात्, तदिच्छाव्यक्तेरालोकलिङ्गकत्वाप्रकारकत्वादत आह तदन्यमात्रेति । धूमालोकाभ्यां वह्न्यनुमितिर्जायतामितीच्छादशायां सिद्ध्यात्मकालोकपरामर्शादनुमित्यर्थं मात्रपदम् । तथाच तल्लिङ्गकानुमितित्वाप्रकारकत्वे सति या यत्किञ्चिल्लिङ्गकानुमितित्वप्रकारिकेच्छा तदतिरिक्तानुमित्सा सिषाधयिषापदेन बाध्येत्यर्थः । तेन प्रमेयलिङ्गकानुमितिस्थले तदन्यलिङ्गाप्रसिद्धावपि न क्षतिः । अत्र तदन्यमात्रलिङ्गकानुमित्सातिरिक्तत्वं न विशेषणं किन्तूत्तेजकीभूततत्तादिच्छाव्यक्तीनां परिचायकमिति मन्तव्यम् ।

---

न तादृशेच्छाप्रतिबन्धिका—इति मतम्, ततुच्छम् । मात्रपदवैयर्थ्यापत्तेः धूमलिङ्गकपरामर्शकालीनधूमालोकोभयलिङ्गकेच्छायां धूमलिङ्गकपरामर्शविशिष्टधूमालोकोभयलिङ्गकेच्छाकालीनत्वविरहेण तादृशेच्छायां प्रतिबन्धकत्वविरहान्न तत्रानुमित्यनुपपत्तिरिति दिक् ।

ननु यद्यदिच्छासत्त्वे आलोकलिङ्गकपरामर्शाभावविशिष्टाऽऽलोकलिङ्गकेच्छासत्त्वे यत्पक्षकयत्साध्यकानुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टालोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकानुमित्सा तत्पक्षकतत्साध्यकानुमितौ प्रतिबन्धिका वाच्या, तथाच अस्मल्लिङ्गकपरामर्शकालीनधूमालोकोभयलिङ्गकेच्छासत्त्वे आलोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकेच्छासत्त्वे नाऽनुमितिः प्रामाणिकीति यद्यदिच्छापदेन तादिच्छा न धर्तव्या, भवति च यादृशेच्छा तद्विरहविशिष्टालोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकेच्छायाः सत्त्वेन प्रतिबन्धकतया न ततोऽनुमित्यापत्तिरिति सर्वसामञ्जस्ये यत्तुमतखण्डनमसङ्गतम्, एवं मात्रपदमपि न देयम्, धूमलिंगकपरामर्शकालीनधूमालोकोभयलिंगकेच्छासत्त्वे तत्परामर्शाभावविशिष्टालोकलिङ्गकेच्छासत्त्वेऽनुमितेः प्रामाणिकतया तत्तदिच्छाविरहविशिष्टालोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकेच्छाविरहान्न तत्रानुमित्यनुपपत्तिः । आलोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकानुमित्सानिवेशाद् वह्निव्याप्यधूमवान्पर्वत इति परामर्शानन्तरमालोकलिङ्गिका सती धूमलिङ्गिका या पर्वते वह्न्यनुमितीच्छा तत उभयलिङ्गकपरामर्शादुभयलिङ्गकानुमितिः तत्र तादृशेच्छाविरहविशिष्टालोकलिङ्गकपरामर्शाभावविशिष्टालोकलिङ्गकानुमित्साया अनुमितिपूर्वक्षणे सत्त्वेऽपि नोभयलिङ्गकपरामर्शक्षणे वह्न्यनुमित्सा-

लिङ्गविशेषेणापि च नियन्त्रितं पक्षत्वम्, तल्लिङ्गकानुमितौ सिद्धिकालीना तल्लिङ्गकानुमितीच्छाविशेषविरहकूटविशिष्टान्यलिङ्गकानुमितीच्छैव वा प्रतिबन्धिका ।

---

ननु तल्लिङ्गकानुमित्साविरहविशिष्टसिद्धसत्त्वेऽपि अन्यलिङ्गकानुमित्साऽन्यलिङ्गकपरामर्शोत्तरं प्रकृतपक्षसाध्यानुमितेरुत्पादेन व्यभिचारात्कुतः पक्षताया अनुमितिहेतुत्वमित्यत आह लिङ्गेति । लिङ्गविशेषनियन्त्रितम्—लिङ्गविशेषावच्छिन्नकार्यताकम् । तथाच यद्यदनुमित्साव्यक्तिसत्त्वे सिद्धिदशायां तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितिर्जायते तत्तदिच्छाव्यक्तिविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकतत्साध्यकानुमितित्वावच्छिन्नं प्रत्येव हेतुरतो न व्यभिचार इति भावः । अन्यलिङ्गकानुमित्सायास्तल्लिङ्गकानुमितौ स्वातन्त्र्येण विरोधित्वे पक्षताया लिङ्गविशेषानियन्त्रितत्वेऽपि न क्षतिरित्याह तल्लिङ्गकानुमिताविति । सिद्ध्यभावदशायामन्यलिङ्गकेच्छा-

---

पत्तिः । आलोकलिङ्गकानुमित्सासत्त्वे इति निवेशात् आलोकलिंगकानुमित्साऽसमानकालीनानुमित्साव्यक्तीनामुत्तेजकविधया प्रवेशेऽपि न गौरवम् । न चालोकलिङ्गकपरामर्शाभावस्य कारणतावच्छेदकत्वकल्पने गौरवमिति वाच्यम् । स्वमतेऽपि तदन्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वे तल्लिङ्गकभेदस्य कारणतावच्छेदकत्वकल्पनाद् गौरवानवकाशादिति चेन्न ।

पर्वतपक्षकवह्निसाध्यकवह्न्यभावहेतुकस्थले वह्न्यभावलिङ्गकपरामर्शाभावविशिष्टवह्न्यभावलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वकल्पने गौरवात्, अन्यथा धूमलिङ्गकपरामर्शदशायां वह्न्यभावलिंगकानुमित्सासत्त्वे पर्वतपक्षकवह्निसाध्यकानुमितिप्रसंगात्, अस्माकन्तु धूमलिङ्गकानुमितित्वावच्छिन्नं प्रति तदन्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकतयैव तदापत्तिवारणसम्भवात् । न च तवापि वह्न्यभावलिङ्गकवह्निसाध्यकानुमितिं प्रति तल्लिङ्गकानुमित्साविरहविशिष्टान्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकताकल्पनस्यावश्यकतया गौरवं तुल्यमेवेति वाच्यम् । वह्निसाध्यकवह्न्यभावलिङ्गकानुमितेरलीकतया तादृशप्रतिबन्धकत्वकल्पनाऽयोगात् वह्निव्याप्यवन्ह्यभाववानितिपरामर्शस्य वह्निसाध्यकानुमितिं प्रति बाधनिश्चयमुद्रया प्रतिबन्धकत्वादिति ध्येयम् ।

केचित्तु यत्र धूमालोकोभयलिङ्गकेच्छा ततस्तदुभयलिङ्गकोपक्षाबुध्यात्मकपरामर्शस्ततोऽनुमितिस्तत्रैव परामर्शधर्मिकालोकांशेऽप्रामाण्यज्ञान तत्रालोकेनाऽनुमित्यन्तरं जायतामितीच्छा तत आलोकपरामर्शादनुमितिस्तत्रालोकपरामर्शक्षणेऽनुमित्यापत्तिः तत्रालोकलिङ्गकेच्छायास्तदिच्छाविरहविशिष्टत्वेऽपि आलोकलिङ्गकपरामर्शाभावविशिष्टत्वविरहान्न तदिच्छायाः प्रतिबन्धकत्वम् अतः कल्पान्तरमनुसृतम्, तत्कल्पे च तदनुमितेर्धूमलिङ्गकत्वेन तां प्रति तदन्यालोकमात्रलिङ्गकेच्छायाः प्रतिबन्धकत्वान्न तत्रानुमित्यापत्तिरिति प्राहुः ।

तल्लिङ्गकानुमित्साया उत्तेजकत्वेऽपि तत्कार्यतावच्छेदकं यदि प्रकृतपक्षे प्रकृतसाध्यानुमितित्वं तदा व्यभिचार इत्याशङ्कते नन्विति । लिङ्गविशेषावच्छिन्नकार्यताकमिति ।

सत्त्वेऽपि तल्लिङ्गकानुमित्युत्पत्तेराह सिद्धिकालीनेति। सिद्धिविशिष्टेत्यर्थः। तल्लिङ्गकानुमित्सासत्त्वेऽन्यलिङ्गकानुमित्सायास्तल्लिङ्गकानुमित्यप्रतिबन्धकत्वादाह तल्लिङ्गकानुमितीच्छाविशेषविरहकूटविशिष्टेति। तल्लिङ्गकानुमितित्वं तल्लिङ्गकपरामर्शाव्यवहितोत्तरानुमितित्वम्, तथाचालोकलिङ्गकानुमित्सादशायां धूमालोकयोः सिद्धात्मकपरामर्शोत्तरं पर्वते वह्न्यनुमितिर्न स्यात्तस्या अपि निरुक्तधूमलिङ्गकत्वेनाऽऽलोकलिङ्गकानुमित्साप्रतिबध्यत्वादतो विशेषपदम्, तेन वस्तुगत्या तल्लिङ्गकानुमितिगोचरयद्यदिच्छाव्यक्तिसत्त्वेऽन्यलिङ्गकानुमित्साकाले तल्लिङ्गकानुमितिर्जायते तत्तदिच्छाविरहकूटविशिष्टान्यलिङ्गकानुमित्सात्वेनैव तल्लिङ्गकानुमितौ प्रतिबन्धकत्वम्, उक्तस्थले चालोकलिङ्गकानुमित्साव्यक्तेरपि वस्तुगत्या धूमलिङ्गकानुमितिगोचरतया तदिच्छाव्यक्त्युत्तेजककोटौ निविष्टत्वान्न दोषः। विशेषपदासत्त्वपक्षेऽपि तल्लिङ्गकानुमित्साविरहविशिष्टत्वस्योक्तपदार्थो ग्राह्यः। अत्रापि वैशिष्ट्यं एकसमयावच्छेदेन एकात्मवृत्तित्वम्, तेन पुरुषान्तरीयतल्लिङ्गकानुमितीच्छासत्त्वेऽप्यन्यलिङ्गकानुमित्सादशायां नानुमितेरुत्पादः।

---

तथा च तत्साध्यकत्वादिवत्तल्लिङ्गकत्वस्यापि कार्यतावच्छेदके निवेशान्न व्यभिचार इति भावः।

अत्रापि वैशिष्ट्यमिति। नन्वत्र कालिकसम्बन्धावच्छिन्नप्रतियोगिताकधूमलिङ्गकानुमित्साभावस्याऽव्याप्यवृत्तित्वेन एतत्क्षणावच्छेदेन कालिकसम्बन्धेनान्यलिङ्गकेच्छादशायां धूमलिङ्गकानुमित्सा वर्त्ततेऽन्यक्षणावच्छेदेन तदभावस्यापि सत्त्वात् तस्य प्रतिबन्धकत्वेन नानुमित्यापत्तिरिति चेन्न।

तल्लिङ्गकानुमित्सात्वावच्छिन्नाभावस्य निरवच्छिन्नस्वरूपेणैव निवेशनीयत्वात्, अन्यथा एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपस्य वैशिष्ट्यस्य निवेशेऽपि यत्र धूमेन आलोकेन च वह्न्यनुमितिर्जायतामितीच्छा ततो धूमलिङ्गकपरामर्शः, तत्रैकस्मिन्नेवात्मनि अन्यक्षणावच्छेदेन धूमलिङ्गकानुमित्साभावसत्त्वादनुमित्यापत्तेः, तथाचोक्तस्थलेऽन्यलिङ्गकानुमित्सायां कालिकसम्बन्धावच्छिन्नप्रतियोगिताकधूमलिङ्गकानुमित्साभावस्य, निरवच्छिन्नस्वरूपेणाऽसत्त्वेन तस्य प्रतिबन्धकत्वविरहादनुमित्यापत्तिर्भवत्येवातः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावो निवेश्यः, तथाच तत्सम्बन्धावच्छिन्नप्रतियोगिताकधूमलिङ्गकानुमित्साभावस्याऽन्यलिङ्गकेच्छासत्त्वेऽप्रतिबन्धकत्वान्न तत्रानुमित्यापात्तः, एवंसति यत्र धूमेन आलोकेन च वह्न्यनुमितिर्जायतामितीच्छा ततो धूमपरामर्शः तत्र धूमलिङ्गकानुमित्यनुपपत्तेर्वारणायैव एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपवैशिष्ट्यानिवेशः। न च तर्हि कथमापत्तिर्दत्ता ग्रन्थकृतेति वाच्यम्। कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावं निवेश्य तदापत्तिरुक्ता ग्रन्थकृतेति बोध्यम्। अत्र वैशिष्ट्यघटकैकक्षणावच्छिन्नत्वमात्रनिवेशे यत्र धूमेन आलोकेन च वह्न्यनुमितिर्जायतामितीच्छा ततो धूमलिङ्गकपरामर्शादनुमित्यापत्तिर्न स्यात् तत्र तदनुमित्साक्षणावच्छेदेनान्यपुरुषस्य धूमलिङ्गकानुमित्सात्वावच्छिन्नाभावसत्त्वेन धूमलिङ्गकानुमित्साभावावच्छेदकीभूतात्मनि अन्यक्षणावच्छेदेन

धूमलिङ्गकानुमित्साभावसत्त्वादतस्तन्निवेशः, तथाच धूमलिङ्गकानुमित्साभावावच्छेदकीभूतक्षणावच्छिन्नतदधिकरणात्मनिरूपितवृत्तिताविशिष्टालोकलिङ्गकानुमित्साविरहान्नानुमित्यनुपपत्तिरिति । अस्य निवेशस्तु तल्लिङ्गकानुमित्सात्वावच्छिन्नाभावनिष्ठवृत्तिताविशिष्टान्यलिङ्गकेच्छायास्तल्लिङ्गकानुमितौ प्रतिबन्धकत्वं वाच्यम् , वै० स्वावच्छेदकीभूतक्षणावच्छिन्नत्वस्वनिरूपकात्मवृत्तित्वोभयसम्बन्धेन ।

नन्वत्र यत्र सिष्याधयिषाविरहविशिष्टसिद्ध्यभावात्मकपक्षतावुद्ध्यात्मकधूमलिङ्गकपरामर्शः तत आलोकेन वह्न्यनुमितिर्जायतामितीच्छा ततो धूमलिङ्गकानुमित्सा ततोऽनुमितिर्न स्यात्तत्रालोकलिङ्गकानुमित्सोत्पत्तिक्षणावच्छेदेन धूमलिङ्गकानुमित्साविरहवैशिष्ट्यस्यालोकलिङ्गकानुमित्सायां सत्त्वेन तस्याः धूमलिङ्गकानुमित्सोत्पत्तिक्षणे सत्त्वेन प्रतिबन्धकत्वादिति चेन्न ।

यत्र विशेष्यविशेषणोभयाधिकरणता तत्रैव विशिष्टाधिकरणत्वनियमात् । धूमलिङ्गकानुमित्सोत्पत्तिक्षणे आलोकलिङ्गकानुमित्सासत्त्वेऽपि धूमलिङ्गकानुमित्साभावविरहात् , तथाच तद्विरहविशिष्टालोकलिङ्गकानुमित्सायाः धूमलिङ्गकानुमित्सोत्पत्तिक्षणे विरहेण तस्य प्रतिबन्धकत्वाभावात् तत्रानुमित्यनुपपत्तिरिति ध्येयम् ।

केचित्तु तल्लिङ्गकानुमित्साविरहविशिष्टेत्यस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकतल्लिङ्गकानुमित्साविरहनिष्ठवृत्तिताविशिष्टवृत्तितावत्त्वमर्थः, तच्चाऽन्यलिङ्गकानुमित्सायां विशेषणम् , वै० स्वनिरूपकनिरूपितत्व-स्वावच्छेदकक्षणावच्छेद्यत्वोभयसम्बन्धेन । अथात्र स्वनिरूपकनिरूपितत्वाप्रवेशे पुरुषान्तरीयानुमित्सामादाय, स्वावच्छेदकक्षणावच्छिन्नत्वानिवेशे कालान्तरीयानुमित्सामादायाऽऽपत्तिविरहात् , प्रत्येकं तदनिवेशे आपत्तिदानं जगदीशस्य सन्दर्भविरुद्धम्, एकपुरुषीयधूमलिङ्गकपरामर्शाऽऽलोकलिङ्गकानुमित्सादशायामन्यपुरुषीयधूमलिङ्गकानुमित्साविरहनिष्ठवृत्तितावैशिष्ट्यस्य स्वावच्छेदकक्षणावच्छिन्नत्वसम्बन्धेनाऽऽलोकलिङ्गकानुमित्सानिष्ठवृत्तितायां सत्त्वेन प्रतिबन्धात् , एवमेतत्कालीनधूमलिङ्गकपरामर्शकालीनाऽऽलोकलिङ्गकानुमित्सानिष्ठवृत्तितायां स्वनिरूपकनिरूपितत्वसम्बन्धेन अन्यकालीनधूमलिङ्गकानुमित्साविरहनिष्ठपूर्वक्षणावच्छिन्नवृत्तितासत्त्वेन प्रतिबन्धात्, प्रत्युतानुमित्यनुपपत्तिप्रसङ्गादिति चेन्न ।

कालिकसम्बन्धावच्छिन्नप्रतियोगिताकानुमित्साविरहस्य स्वरूपसम्बन्धेन वैशिष्ट्यनिवेशाभिप्रायेणाऽपत्तिदानात् । समानकालीनान्यपुरुषीयधूमलिङ्गकानुमित्सायाः कालिकसम्बन्धेनाऽऽलोकलिङ्गकानुमित्सायां सत्त्वेन तत्सम्बन्धावच्छिन्नतदभाववैशिष्ट्यविरहेणाऽप्रतिबन्धात् । स्वनिरूपकनिरूपितत्वानिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकानुमित्साविरहस्यात्मनि याप्यवृत्तित्वात् , एवमनयैव रीत्याऽनुमित्यनुरक्ताया समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावनिवेशेऽपि अन्यकालीनानुमित्सामादाय तत्कारणाऽसम्भवेन समवायसम्बन्धावच्छिन्नप्रतियोगिताकतदभावनिष्ठवृत्तिताविशिष्टत्वेन प्रतिबन्धकत्वात् प्रकृतानुमित्यनुपपत्तिप्रसङ्गात् , वैशिष्ट्यस्य स्वावच्छेदकक्षणावच्छिन्नत्वसम्बन्धेन निवेशाच्च काप्यनुपपत्तिरिति ।

अथ धूमलिङ्गकापेक्षाबुद्ध्यात्मकपरामर्शदशायामालोकलिङ्गकानुमित्सादशायां धूमलिङ्गकानुमित्सासत्त्वेऽनुमित्यनुपपत्तिसम्भवे आपत्तिदानमसङ्गतम्, कालिकसम्बन्धावच्छिन्नधूमलिङ्गकानुमित्सायाः पूर्वक्षणावच्छेदेन विरहसत्त्वेन प्रतिबन्धात्, कालिकसम्बन्धावच्छिन्नप्र-

न च तल्लिङ्गकानुमित्साभिन्नतदन्यलिङ्गकानुमित्सैव प्रतिबन्धिकास्तु तल्लिङ्गकानुमित्साविरहविशिष्टत्वप्रवेशे गौरवादिति वाच्यम् । यत्र सि-द्ध्यात्मकाऽपेक्षाबुद्ध्यात्मकधूमपरामर्शोत्तरं क्रमेणाऽऽलोकलिङ्गकानुमितित्व-प्रकारेण धूमलिङ्गप्रकारेण चेच्छाद्वयी तत्र चतुर्थक्षणे धूमलिङ्गकानुमित्य-नुत्पादापत्तेः धूमलिङ्गकानुमित्साभिन्नाया एवालोकलिङ्गकानुमित्सायाः सत्त्वादिति भावः । अन्यलिङ्गकानुमित्सैव वेति वाकारोऽनास्थायाम् । पूर्व-

---

तियोगित्वकानुमित्साभावस्याऽव्याप्यवृत्तित्वाश्चेति चेन्न ।

निरवच्छिन्नस्वरूपसम्बन्धेनानुमित्साविरहविशिष्टत्वनिवेशेनाऽनुपपत्तिविरहादिति आहुः ।

ननु यद्यदिच्छासत्त्वेऽन्यलिङ्गकानुमित्सासत्त्वे तल्लिङ्गकानुमितिर्जायते तत्तदिच्छाविरहवि-शिष्टान्यलिङ्गकानुमित्सात्वेन तल्लिङ्गकानुमितिप्रतिबन्धकत्वोक्तौ सर्वसामञ्जस्ये तल्लिङ्गकानुमि-तिगोचरपर्यन्तनिवेशे प्रयोजनविरह इति चेत्, तर्हि वह्निव्याप्यधूमवत्तानिश्चयात्मकापेक्षाबुद्ध्या-त्मकपरामर्शकाले आलोकलिङ्गकानुमित्सादशायां धूमलिङ्गकानुमित्सासत्त्वेऽनुमितेः प्रामाणिक-तया तत्रालोकलिङ्गकानुमित्साव्यक्तेरप्युत्तेजकविधया प्रवेशेन गौरवात्, अस्माकन्तु आलोक-लिङ्गकेच्छाया धूमलिङ्गकानुमितिगोचरत्वविरहान्न तदिच्छाव्यक्तेरुत्तेजकत्वम् ।

अथ तथापि अन्यलिङ्गकानुमित्सादशायामित्यभिधानमनर्थकमिति चेन्न । केवलधूमलिङ्ग-कानुमित्सादशायां धूमलिङ्गकपरामर्शसत्त्वे वह्न्यनुमितेः प्रामाणिकतया तदिच्छाव्यक्तेरपि उत्तेजकविधया प्रवेशेन गौरवात्, अन्यलिङ्गकानुमित्सादशायामित्यभिधाने च तत्रान्यलिङ्गका-नुमित्साया असत्त्वेनोत्तेजकविधयाऽप्रवेशादिति दिक् ।

धूमलिङ्गकानुमित्साभिन्नाया इति । अथात्र यद्यदिच्छाव्यक्तिसत्त्वेऽन्यलिङ्गका-नुमित्सासत्त्वे तल्लिङ्गकानुमितिर्जायते तत्तदिच्छाभेदकूटवदन्यलिङ्गकानुमित्सात्वेनैव प्रतिबन्ध-कत्वमस्त्विति चेन्न । उक्तस्थले इच्छाद्वयस्योत्तेजककोटौ निवेशेन लाघवानवकाशात्, मन्मते चैकेच्छाया एवोत्तेजककोटौ निवेशेन लाघवात् । एतेन तल्लिङ्गकानुमित्साविरहविशिष्टत्वस्य तल्लिङ्गकानुमितिगोचरयद्यदिच्छासत्त्वेऽन्यलिङ्गकानुमित्सादशायां तत्पक्षकतत्साध्यकतल्लिङ्ग-कानुमितिर्जायते तत्तदिच्छाविरहविशिष्टान्यलिङ्गकानुमित्सात्वेन तत्पक्षकतत्साध्यकतल्लिङ्ग-कानुमितौ प्रतिबन्धकत्वमित्यर्थः पूर्वं स्वीकृतः । एतन्मतेऽपि तल्लिङ्गका-नुमितिगोचरयद्यदिच्छासत्त्वेऽन्यलिङ्गकानुमित्सासत्त्वे तादृशानुमितिर्जायते तत्तदिच्छाभि-न्नान्यलिङ्गकानुमित्सात्वेन प्रतिबन्धकताया वक्तव्यत्वात्, निरुक्तस्थले आलोकलिङ्ग-कानुमित्सासत्त्वेऽनुमितेः प्रामाणिकतया धूमलिङ्गकानुमितेस्तद्गोचरतया धूमलिङ्गकानुमिति-गोचरयद्यदिच्छामध्ये आलोकलिङ्गकेच्छापि भवति अतस्तत्तद्व्यक्तित्वेनालोकलिङ्गकानुमित्सा-व्यक्तेरप्युत्तेजककोटौ प्रवेशे तद्भिन्नत्वस्य तदिच्छाव्यक्तौ विरहेणानुमित्यनुपपत्तिविरहात् विर-हवैशिष्ट्यप्रवेशनमनर्थकम् । नचाऽलोकलिङ्गकानुमित्साव्यक्तेर्धूमलिङ्गकानुमित्साव्यक्तेश्चोत्तेजक-विधया प्रवेशे गौरवम्, अस्माकन्तु धूमलिङ्गकानुमित्साव्यक्तेरेवोत्तेजकविधया प्रवेश इति वाच्यम् । तथासति मन्मतेऽपि आलोकलिङ्गकानुमित्साव्यक्तेस्तत्तद्व्यक्तित्वेनोत्तेजकविधया प्रवे-

कल्पोक्तस्य तल्लिङ्गकानुमित्साविरहविशिष्टसिद्ध्यभावत्वेन तल्लिङ्गकानुमितिहेतुत्वस्य लाघवेन तदपेक्ष्य एतत्कल्पस्य गुरुत्वात् तत्पक्षसाध्यकानुमितौ सामान्यतः सिषाधयिषाविरहविशिष्टसिद्ध्यभावत्वेन कारणान्तरस्याप्यत्र कल्पे वक्तव्यत्वात्, अन्यथा सिद्ध्यात्मकपरामर्शमात्रादनुमित्यापत्तेस्तादवस्थ्यादिति ध्येयम् ।

---

शादेव गौरवानवकाशात् । न च धूमलिङ्गकानुमित्साक्षणे वह्न्यनुमित्यापत्तिः, आलोकलिङ्गकानुमित्साव्यक्तेस्तत्तद्व्यक्तित्वेनोत्तेजकतया तद्भिन्नत्वविरहाद् अतो धूमलिङ्गकानुमित्साव्यक्तेरुत्तेजकत्वं वाच्यम्, तथाच तत्र धूमलिङ्गकानुमित्साविरहविशिष्टालोकलिङ्गकानुमित्सायाः स्वोत्पत्तिक्षणे सत्त्वात्तानुमित्यापत्तिः । एवं च भेदनिवेशपक्षे तादृशानुमित्साद्वययोरुत्तेजकत्वं वाच्यम् प्रतिबन्धकत्वान्तरकल्पने गौरवम्, अतो लाघवादत्यन्ताभाव एव निवेश्य इति वाच्यम् । तथासति तत्र पक्षताविरहात् धूमलिङ्गकानुमित्साविशिष्टालोकलिङ्गकानुमित्सासत्त्वे एवानुमितेः प्रामाणिकतया धूमलिङ्गकानुमित्साविशिष्टालोकलिङ्गकानुमित्साव्यक्तेरेव पक्षतायामुत्तेजकतया पूर्वक्षणे तद्विरहविशिष्टसिद्धिसत्त्वादिति निरस्तम् । यत्र वह्निमान् वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेति सिद्ध्यात्मकापेक्षाबुद्ध्यात्मकपरामर्शः ततः क्रमेणालोकलिङ्गकानुमितित्वप्रकारेण धूमलिङ्गकानुमितित्वप्रकारेण चेच्छाद्वयी आलोकलिङ्गकेच्छा च चतुर्थक्षणस्थायिनी ततो वह्निमान् वह्निव्याप्यवानित्यनुमितिः वह्निव्याप्यांशेऽप्रामाण्यज्ञानं ततोऽप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानाद्वह्न्यनुमितिः, तत्र धूमलिङ्गकानुमित्साक्षणे वह्न्यनुमित्यापत्तेः । विरहवैशिष्ट्यनिवेशे तु तादृशपरामर्शविशिष्टतादृशेच्छासत्त्वे एवानुमितेः प्रामाणिकतया तादृशपरामर्शविशिष्टेच्छाव्यक्तिनामुत्तेजकतया तादृशेच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छायाः पूर्वक्षणे सत्त्वादिति ।

वस्तुतस्तु यत्र सिद्ध्यात्मकधूमलिङ्गकपरामर्शस्ततः आलोकलिङ्गकानुमित्सा ततः उभयलिङ्गकपरामर्शादालोकलिङ्गकानुमितिः तत्रोभयलिङ्गकपरामर्शक्षणेऽनुमितिः स्यादग्निमानुमित्यनुरोधेनालोकलिङ्गकानुमित्साया उत्तेजकत्वेन तत्तदनुमित्साभिन्नालोकलिङ्गकानुमित्सायाः स्वोत्पत्तिक्षणेऽभावादतस्तत्तादिच्छात्यन्ताभावनिवेशः । न च तन्निवेशेऽपि उभयलिङ्गकपरामर्शोत्पादक्षणे कथं न तदापत्तिरग्निमानुमित्यनुरोधेनालोकलिङ्गकानुमित्सायाः उत्तेजकत्वेन तत्तदिच्छाविरहविशिष्टान्यलिङ्गकेच्छायास्तत्क्षणेऽसत्त्वादिति वाच्यम् । अत्यन्ताभावनिवेशपक्षेऽत्र समूहालम्बनपरामर्शविशिष्टतत्तादिच्छाव्यक्तित्वेनैवोत्तेजकत्वात् , तथाच तादृशपरामर्शव्यक्तिविशिष्टालोकलिङ्गकानुमित्सायाः समूहालम्बनपरामर्शक्षणे एव सत्त्वेन तद्विरहविशिष्टालोकलिङ्गकानुमित्सायाः स्वोत्पत्तिक्षणे सत्त्वेनाऽऽपत्तिविरहात्। तदनिवेशपक्षे तु तत्तदनुमित्साया उत्तेजकत्वेऽपि नोक्तानुमित्यापत्तिवारणं संभवति तद्विशिष्टालोकलिङ्गकानुमित्साभिन्नत्वस्यालोकलिङ्गकानुमित्सायां विरहेण तद्भिन्नान्यलिङ्गकेच्छाया असत्त्वादतोऽत्यन्ताभावनिवेश इति ध्येयम् ।

अथवा यत्पक्षकयत्साध्यकयल्लिङ्गकानुमितिरन्यलिङ्गकानुमित्सासत्त्वे उभयलिङ्गकपरामर्शदशायां क्वापि न जाता तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितौ यद्यदिच्छासत्त्वे इत्यादिनिवेशे प्रयोजनविरहात् तत्रैकलिङ्गकपरामर्शसत्त्वे क्रमेणेच्छाद्वयसत्त्वेऽनुमित्यनुपपत्तेरिति । वस्तुतस्तु तल्लिङ्गकानुमितिगोचरयद्यदिच्छासत्त्वे अन्यलिङ्गकानुमित्सासत्त्वे इत्यादिनिवेशात् तादृशे

च्छायास्तल्लिङ्गकानुमित्यविषयकतया उत्तेजकत्वविरहेण तादृशानुमित्यनुपपत्तिनादवस्थ्यात् पूर्व-क्षण एवाऽसंभवादिति ध्येयम्।

अत्रेदं जिज्ञास्यते—तादृशापेक्षाबुद्धेः त्रिक्षणावस्थायित्वं कुतः कल्प्यते ? न च द्वितीयक्षणे नाशकाभावात्त्रितयक्षणस्थायित्वं संभवतीति वाच्यम्। द्वितीयक्षणे उत्पन्नविभुविशेषगुणस्यैव तन्नाशकत्वसंभवात्, विभुविशेषगुणनाशत्वावच्छिन्नं प्रति स्वोत्तरोत्पन्नविभुविशेषगुणस्यैव कारणताया अवश्यक्लृप्तत्वादिति चेन्न।

चतुर्थक्षणे द्वित्वप्रत्यक्षान्यथानुपपत्त्या त्रिक्षणस्थायित्वकल्पनादिति। द्वित्वप्रत्यक्षत्वावच्छिन्नं प्रति "अयमेक अयमेक" इत्याकारकापेक्षाबुद्धेः कारणत्वात्। न चापेक्षाबुद्धिसत्त्वे अग्रिमक्षणे द्वित्वप्रत्यक्षोत्पत्तिसंभवात्त्रिक्षणावस्थायित्वकल्पनाऽसंभव इति वाच्यम्। विषयतासंबन्धेन द्वित्वप्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणतया विषयसत्त्वस्यावश्यकत्वात् द्वित्वोत्पत्तिं विना तदसंभवेन द्वितीयक्षणे द्वित्वोत्पत्तिकल्पनात्। न च तथापि तृतीयक्षणे द्वित्वप्रत्यक्षसंभवात् त्रिक्षणस्थायित्वकल्पनं व्यर्थमिति वाच्यम्। द्वित्वप्रत्यक्षं प्रति द्वे द्वित्वे इति निर्विकल्पकज्ञानस्य कारणत्वात् द्वित्वप्रत्यक्षपूर्वं तस्यावश्यकत्वात्, एवं चापेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं विना द्वित्वप्रत्यक्षानुपपत्त्या त्रिक्षणावस्थायित्वकल्पनात्। न च पूर्वापेक्षाबुद्धिनाशेऽपि निर्विकल्पकज्ञानक्षणे अपेक्षाबुद्ध्यन्तरकल्पनादग्रिमक्षणे न द्वित्वप्रत्यक्षानुपपत्तिरिति वाच्यम्। एकांशे निर्विकल्पकस्यैकांशे सविकल्पकस्यैतादृशनृसिंहाकारकज्ञानस्यासंभवात्। न च द्वित्वोत्पत्तिक्षणे एतत्कल्पनसंभवः, प्रथमापेक्षाबुद्धिविषयताकद्वित्वप्रत्यक्षं प्रति तादृशापेक्षाबुद्धेः कारणतया तादृशद्वित्वप्रत्यक्षानुपपत्तेः, अपेक्षाबुद्ध्यन्तरसत्त्वेऽपि द्वित्वोत्पत्त्या अपरद्वित्वनिर्विकल्पकज्ञानादपरद्वित्वप्रत्यक्षोत्पत्तेः। एतेन तादृशनृसिंहाकारकज्ञानस्वीकारेऽपि न निस्तारः। न चाऽपेक्षाबुद्धेर्द्वित्वप्रत्यक्षं प्रति कारणत्वमेव न स्वीक्रियते किन्तु द्वित्वोत्पत्तिं प्रत्येवेति वाच्यम्। तथासति द्वित्वनिर्विकल्पकज्ञानकाले अपेक्षाबुद्धिनाशाद् द्वित्वप्रत्यक्षकाले द्वित्वनाशाद् द्वित्वप्रत्यक्षानुपपत्तेः, विषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणतोपगमात् द्वित्वादेर्द्वित्वप्रत्यक्षं प्रति कार्यसहभावेनैव हेतुत्वम् 'संबद्धं वर्तमानं च गृह्यते चक्षुरादिने'ति न्यायात्। नचापेक्षाबुद्धिनाशस्य द्वित्वनाशकत्वं नैव कल्प्यते किन्तु द्वित्वप्रत्यक्षस्यैवेति वाच्यम्। अपेक्षाबुद्धेर्द्वित्वप्रत्यक्षं प्रति स्वातन्त्र्येण कारणत्वोपगमात्। अन्यथा तदसत्त्वदशायामपि द्वित्वप्रत्यक्षोत्पत्तिः स्यादिति ध्येयम्।

न च स्वोत्तरोत्पन्नविभुविशेषगुणनाशकत्वादपेक्षाबुद्धेर्द्वित्वप्रत्यक्षानुरोधेनापि त्रिक्षणस्थायित्वकल्पनासम्भव इति वाच्यम्। द्वित्वप्रत्यक्षान्यथानुपपत्त्या अपेक्षाबुद्धिभिन्नविशेषगुणनाशत्वस्य कार्यतावच्छेदकत्वोपगमादिति। अपेक्षाबुद्ध्यात्मकपरामर्शसत्त्वे क्रमेणेच्छाद्वयसत्त्वे द्वित्वप्रत्यक्षोत्पत्तिसामग्रीसम्भवेऽपि भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकतया द्वित्वप्रत्यक्षानुत्पादात् तत्रैतादृशापेक्षाबुद्धेः त्रिक्षणस्थायित्वकल्पनासम्भव इति चेन्न।

अन्यत्र द्वित्वप्रत्यक्षानुरोधेनापेक्षाबुद्धिभिन्नविशेषगुणनाशत्वावच्छिन्नं प्रत्येव स्वोत्तरोत्पन्नविभुविशेषगुणस्य कारणतया नाशकाविरहादेव त्रिक्षणावस्थायित्वसम्भवात्। नचाऽपेक्षाबुद्धिनाशकाभावादपेक्षाबुद्धिनाशाऽसम्भव इति वाच्यम्। द्वित्वप्रत्यक्षसामग्र्यास्तन्नाशकत्वोपगमादिति।

साधकमानं साध्यवत्त्वनिश्चयः ।

---

ननु साधकमानं सिद्धिजनकं मानं; तथा च परामर्शमात्रादप्यनुमितिर्न स्यात् तस्यैव तादृशसाधकमानत्वादतो व्याचष्टे साध्यवत्त्वनिश्चय इति । साध्यवत्त्वसंशयेऽप्यनुमित्युत्पादान्निश्चय इत्युक्तम् । यद्यपि साध्यवत्त्वनिश्चयत्वं यदि साध्यसामान्याभावाप्रकारकत्वे सति साध्यप्रकारकत्वं तदा पर्वतः कपिलवह्निमान्नवेति सन्देहदशायां पर्वतो वह्निमानित्यनुमितिर्न स्यात्तादृशसन्देहस्यापि वह्निसामान्याभावाप्रकारकत्वे सति वह्निप्रकारकत्वात् । न च येन रूपेण साध्यता तन्मात्रावच्छिन्नप्रकारकत्वं निश्चयत्वघटकम्, अतः कपिलवह्नित्वावच्छिन्नप्रकारताकसन्देहस्य वह्नित्वमात्राव च्छिन्नप्रकारताकत्वाभावान्न दोष इति वाच्यम् । पर्वतः कपिलवह्निमानितिनिश्चयदशायामपि पर्वतो वह्निमानित्यनुमित्यापत्तेः, तादृशनिश्चयस्य वह्नित्वमात्रावच्छिन्नप्रकारकत्वाभावात् । न चेष्टापत्तिः, अनुभवविरोधात् । अत एव 'गवाश्रितत्वे साध्ये सकलगवाश्रितत्वं न हेतुः, अवि-

---

अथवा प्रतियोगितासम्बन्धेन नानाएकत्वानवगाहिविभुविशेषगुणनाशत्वावच्छिन्नं प्रति कालिकस्वप्रतियोगिमत्तादात्म्योभयसम्बन्धेन ध्वंसस्य कारणता, नानाएकत्वावगाहिविभुविशेषगुणनाशत्वावच्छिन्नं प्रति कालिकस्वप्रतियोगिवृत्तिध्वंसप्रतियोगिमत्तादात्म्योभयसम्बन्धेन ध्वंसस्य कारणत्वोपगमेन अपेक्षाबुद्धिनाशसम्भवात्, स्वप्रतियोगिमत्तादात्म्यनिवेशात् स्वपूर्वक्षणोत्पन्नसुखादिव्यक्तिध्वंसस्य कारणत्वसम्भवेऽपि न द्वितीयक्षणे नाशापत्तिः । कालिकनिवेशाद् द्वितीयक्षणोत्पन्नसुखादिव्यक्तिध्वंसस्य स्वप्रतियोगिवृत्तित्वसम्बन्धेन, स्वपूर्वक्षणोत्पन्नसुखादिध्वंसस्य स्वप्रतियोगिमत्तादात्म्यसम्बन्धेन प्रथमक्षणावच्छेदेनापेक्षाबुद्धौ सत्त्वेऽपि न द्वितीयक्षणे नाशापत्तिः । एवं च सर्वत्रैवापेक्षाबुद्धेः स्वक्षणोत्पन्नसुखादिध्वंसस्य कालिकस्वप्रतियोगिमत्तादात्म्योभयसम्बन्धेन नाशकस्य तृतीयक्षणे जननात् चतुर्थक्षणे नाशोपगमान्न कोपि दोष इति विभावनीयम् ।

अपेक्षाबुद्धेस्त्रिक्षणनाशस्वीकर्तृनये विशेषत एव कार्यकारणभावः तद्व्यक्तिनाशत्वावच्छिन्नं प्रति स्वोत्तरक्षणवृत्तितद्व्यक्तित्वेन कारणता, अत एव न चरमाविभुविशेषगुणनाशानुपपत्तिः । एवं चापेक्षाबुद्धिसत्त्वे द्वित्वप्रत्यक्षोत्पत्तिः तत्र स्वोत्तरक्षणवृत्तितद्व्यक्तेर्नाशकत्वानभ्युपगमात् । यत्रापेक्षाबुद्धिसत्त्वे द्वित्वप्रत्यक्षं न जायते तत्र स्वोत्तरक्षणवृत्तित्वस्यैव नाशकत्वोपगमादिति तृतीयक्षणे एवापेक्षाबुद्धिनाशः, तन्मते परंपरायाः संसर्गत्वानभ्युपगमेन स्वत्वस्याननुगतत्वेन च सामान्यकार्यकारणभावासम्भवादिति ध्येयम् ।

अतएव–विशिष्टसाध्यवत्तानिश्चयदशायामविशिष्टसाध्यवत्तानुमितेरनुभवविरोधादेव। सकलगवाश्रितत्वं न हेतुरिति । गवाश्रितत्वव्याप्यसकलगवाश्रितत्ववती गौरिति विशिष्टसाध्यात्मकहेतुमत्तापरामर्शस्यैव गवाश्रितत्ववती गौरित्यनुमितिविरोधित्वादिति भावः । अथात्र गवाश्रितत्वं गोसमवेतत्वं तदेव साध्यम्, हेतुश्च सकलगवाश्रितत्वं तच्च गोनिष्ठभेद-

शिष्टसाध्यवत्त्वानुमितौ विशिष्टसाध्यवत्ताग्रहस्यापि विरोधितया पक्षधर्मताग्रहदशायां सिद्धसाधनादि'ति शक्तिवादे मिश्रैरप्युक्तम् । यदि च साध्यप्रतियोगिकाभावाप्रकारकत्वे सति साध्यप्रकारकत्वमेव साध्यनिश्चयत्वं तदाऽरुणवह्निशून्यः पर्वतो वह्निमानित्येवं निश्चयेऽपि पर्वतो वह्निमानित्यनुमित्यापत्तिः, उक्तनिश्चयस्य वह्निप्रतियोगिकाभावप्रकारकत्वेनाऽविरोधित्वात् ।

तथापि वह्नित्वावच्छिन्नविधेयकानुमितिं प्रति वह्निसामान्याभावाप्रकारकवह्नित्वावच्छिन्नप्रकारकत्वेन कापिलवह्न्यभावाप्रकारककापिलवह्नित्वावच्छिन्नप्रकारकत्वादिना च प्रत्येकधर्मेणैव प्रतिबन्धकत्वात्तत्तत्सिद्ध्यभावकूटस्यैव पक्षतात्वम्, विरोधिनिश्चयानामनुगतैकधर्माभावात् ।

---

प्रतियोगितानवच्छेदकत्वरूपमिति हेतोः साध्याघटिततया कथं दृष्टान्तसङ्गतिः । न च गोनिष्ठभेदप्रतियोगितानवच्छेदकत्वहेतोर्गगनेऽपि सत्त्वात्तत्र च निरुक्तसाध्यस्याभावाद्व्यभिचार इति वाच्यम् । तावतापि समवेतत्वे सतीति विशेषणदानेनैव तद्वारणाक्षिति चेन्न ।

सकलगवाश्रितत्वं यावद्गोसमवेतत्वम्, तच्च यावत्त्वावच्छिन्नगोनिष्ठाधिकरणताकवृत्तित्वम्, साध्यीभूतं गोसमवेतत्वं च गोनिष्ठाधिकरणताकवृत्तित्वमिति हेतोः साध्यघटिततया दृष्टान्तसङ्गतिरिति ।

अथ शुद्धगवाश्रितत्वस्य हेतुतायामपि गवाश्रितत्वव्याप्यसकलगवाश्रितत्ववती गौरिति परामर्शस्यैव व्याप्तिविशिष्टगवाश्रितत्वविषयकतया विशिष्टसाध्यवत्तापरामर्शस्याविशिष्टसाध्यवत्त्वानुमितिविरोधित्वसम्भवात्, सकलपदं व्यर्थमिति चेन्न ।

मीमांसकमते साध्यव्याप्यो हेतुः हेतुमान्पक्ष इति ज्ञानस्यानुमितिजनकतया तादृशहेतुमत्ताज्ञानस्य विशिष्टसाध्यवत्तानिश्चयरूपत्वाभावेन अविशिष्टसाध्यकानुमितौ विशिष्टसाध्यवत्ताग्रहस्य विरोधित्वमित्यत्र दृष्टान्ताभावेनाऽसङ्गतिः स्यादतः सकलपदमिति ध्येयम् ।

तथापीति । नन्वेतत्कल्पं परित्यज्य वस्तुतस्तुकल्पानुधावने किं बीजमिति चेन्न । तस्यानुगतत्वात् । न चाऽस्याप्यनुगतरूपेण निवेशः शक्यः, स च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानत्वमेव साध्यनिश्चयत्वम्, वै० स्वनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वस्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसम्बन्धेन, एवं च पर्वतो वह्निमानित्यस्य वह्निनिश्चयत्वमिति वाच्यम् । पर्वतो वह्निमान् वह्न्यभाववानित्यादिसमुच्चयस्य च वह्निनिश्चयत्वानुपपत्तेः ।

अत्र संशये एकांशे पक्षतावच्छेदकसामानाधिकरण्यं भासते एकांशे च पक्षतावच्छेदकावच्छेद्यत्वम्, उभयत्र वा पक्षतावच्छेदकावच्छेद्यत्वं भासते, समुच्चये तु पक्षतावच्छेदकसामानाधिकरण्यमेवोभयत्र भासते, तथाच तदवच्छेदेन साध्यनिश्चयत्वस्य तत्सामानाधिकरण्येन साध्यनिश्चयत्वस्य भिन्नतया विभिन्नरूपेणैव तयोर्निवेशः । तत्र सामानाधिकरण्येन साध्यनिश्चयत्वं च साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानत्वम्, वै० स्वनिरूपिता या साध्यतावच्छेदकसंसर्गतावच्छेदकीभूतधर्ममात्रावच्छिन्नसंसर्गता तन्निरूपितपक्षतावच्छेदकावच्छि-

न्नविशेष्यताकत्व-स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्नपक्षतावच्छेदकव्यापकसाध्याभावप्रतियोगिताकत्वोभयधर्मावच्छिन्नसंसर्गतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता तच्छून्यत्वोभयसम्बन्धेन । अवच्छेदकावच्छेदेन साध्यनिश्चयत्वन्तु तादृशप्रकारताविशिष्टज्ञानत्वम्, वै० स्वनिरूपितावच्छेदकव्यापकसाध्यप्रतियोगिकत्व-साध्यतावच्छेदकसंसर्गतावच्छेदकोभयधर्मावच्छिन्नसंसर्गतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्व-स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसम्बन्धेन, तथाच पर्वतो वह्निमान् वह्न्यभाववांश्चेतिसमुच्चये सामानाधिकरण्येन वह्निनिश्चयत्वसत्त्वान्न तस्य निश्चयत्वानुपपत्तिः । न च पर्वतो वह्निमान् महानसीयवह्न्यभाववांश्चेतिसमुच्चयेऽव्याप्तिः, तत्र वह्निमत्त्वं सामानाधिकरण्येन महानसीयवह्न्यभाववत्त्वं चाऽवच्छेदकावच्छेदेनेति तज्ज्ञाने वह्नित्वावच्छिन्नप्रकारताविशिष्टत्वविरहात् स्वनिरूपितसंयोगत्वमात्रावच्छिन्नसंसर्गतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वसत्त्वेऽपि स्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकमहानसीयवह्न्यभावत्वावच्छिन्नप्रकारतेत्यादिद्वितीयसम्बन्धाभावादिति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रकारताविशिष्टज्ञानत्वस्यैव साध्यनिश्चयत्वपदेन विवक्षितत्वात्, वै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकव्यापकसाध्याभावप्रतियोगिकत्वस्वरूपत्वोभयधर्मावच्छिन्नसंसर्गतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशून्यत्वघटितोभयसम्बन्धेन, तथाच पर्वतो वह्निमान् महानसीयवह्न्यभाववांश्चेति समुच्चयस्य न वह्निनिश्चयत्वानुपपत्तिरिति । न च पर्वतः कपिलवह्निमानितिनिश्चयस्य वह्निनिश्चयत्वं न स्यात्, तत्र वह्नित्वगतैकत्ववृत्तिप्रकारताविशिष्टत्वविरहादिति वाच्यम् । साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानस्यैव साध्यनिश्चयपदेन विवक्षितत्वात्, वै० स्वनिरूपितसाध्यतावच्छेदकसंसर्गतावच्छेदकीभूतधर्ममात्रावच्छिन्नसंसर्गतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्व स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकव्यापकसाध्याभावप्रतियोगिकत्वस्वरूपत्वोभयधर्मावच्छिन्नसंसर्गतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसम्बन्धेन, तथाच नोक्तसमुच्चयस्य वह्निनिश्चयत्वानुपपत्तिः, साध्यतावच्छेदकवह्नित्वमात्रावच्छिन्नप्रकारतावैशिष्ट्यसत्त्वात् । एवमवच्छेदावच्छेदेन साध्यनिश्चयत्वं च तादृशप्रकारताविशिष्टज्ञानत्वमेव, वै० पूर्वोक्तविशेष्यताकत्वस्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसम्बन्धेन, तथाच न काप्यनुपपत्तिरिति ।

केचित्तु संशयसमुच्चययोर्वैलक्षण्याय संशये विरोधावगाहित्वस्वीकर्तृनये पर्याप्तिं विहाय साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानत्वमेव साध्यनिश्चयत्वं वाच्यम्, वै० स्वनिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्व-स्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशून्यत्वोभयसम्बन्धेन, एवं च पर्वतो वह्निमान् महानसीयवह्न्यभाववांश्चेतिसमुच्चयस्य वह्निनिश्चयत्वोपपत्तिः, तथापि एतादृशनिश्च

वस्तुतस्तु साध्यतावच्छेदकावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपितपक्षनिष्ठविशेष्यताकज्ञानत्वमेव साध्यनिश्चयत्वं वाच्यम्, पर्वतः कपिलवह्निमान्नवेत्यादिसंशये तु पर्वतनिष्ठविशेष्यत्वं वह्नित्वावच्छिन्नप्रकारताभिन्नेन कपिलवह्न्यभावत्वावच्छिन्नप्रकारत्वेन निरूपितमतस्तद्व्युदासः, संशये विशेष्यतामात्रस्यैव प्रकारताद्वयनिरूपितत्वात् । एवं च निर्वह्निर्वह्निमांश्च पर्वत इत्यादिसमुच्चयस्यापि साध्यनिश्चयत्वसम्भवात्तत्सत्त्वेऽपि न वह्न्यनुमितिः, समुच्चयस्थले प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमात्, भूतले घटवत्पटवच्चेत्यादिस्थले भूतलस्य द्विधा भानवदत्रापि पर्वतस्य प्रकारताद्वयांशे द्वैविध्येन भानादित्यन्यत्र विस्तरः ।

---

यत्त्वस्यानुगतरूपत्वसम्भवे किं कल्पान्तरानुसरणेनेति चेन्न ।

अग्रे विवक्षणीयस्य 'सामानाधिकरण्येनाऽनुमितिं प्रति सिद्धिमात्रस्य विरोधित्वं तच्चैकरूपेण सामानाधिकरण्येन वह्निनिश्चयस्याऽवच्छेदकावच्छेदेन वह्निनिश्चयस्य चे'ति ग्रन्थस्य वैयर्थ्यापत्तेः, इदानीं सामानाधिकरण्येन वह्निनिश्चयस्यावच्छेदकावच्छेदेन वह्निनिश्चयस्य च विभिन्नतया तयोरेकरूपेण प्रतिबन्धकत्वासम्भवादतो वस्तुतस्त्वित्यादिकल्पानुसरणम् ।

अथवा भावद्वयकोटिकसंशयस्वीकर्तृमते पर्वतो वह्निमान् धूमवान्वेतिसंशयस्य निश्चयत्वापत्तिः, तत्र तादृशपर्वतत्वावच्छिन्नविशेष्यताकत्व–वन्ह्यभावप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशून्यत्वयोः सत्त्वेन साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानत्वसत्त्वादित्याहुः ।

परे तु अवच्छेदावच्छेदेन वह्निमत्त्वावगाहितदवच्छेदेन वह्न्यभावावगाहि-पर्वतो वह्निमान् वह्न्यभाववांश्चेति समुच्चयस्यावच्छेदावच्छेदेन वह्निनिश्चयत्वानुपपत्तिः, तत्र प्रथमसम्बन्धसत्त्वेऽपि द्वितीयसम्बन्धाभावेन साध्यप्रकारताविशिष्टत्वविरहात् । न च तज्ज्ञानस्य विरोधावगाहित्वेन न वह्निनिश्चयत्वम्, अपितु संशयत्वमेवेति न दोष इति वाच्यम् । पर्वतत्वावच्छेदेन वह्न्यंशेऽव्याप्यवृत्तित्वज्ञानकाले तज्ज्ञानस्य निश्चयत्वसम्भवात् । अत एव सत्प्रतिपक्षग्रन्थे 'मूलावच्छेदेन कपिसंयोगतदभावयोर्न निश्चयोऽपि तु तत्तदवच्छेदेनैवे'ति भट्टाचार्येणोक्तम् । अत एव एकांशेऽव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वं वाच्यम्, तथाच तादृशसमुच्चयस्यावच्छेदावच्छेदेन वह्निनिश्चयत्वानुपपत्त्या वस्तुतस्तु इत्यादिकल्पान्तरानुधावनमिति वदन्ति ।

**वस्तुतस्त्विति** । अथात्र समानाधिकरणविशेष्यतयोरैक्यमते वह्नित्वावच्छिन्नप्रकारत्वान्यनिरवच्छिन्नपर्वतत्वनिष्ठप्रकारतानिरूपितत्वस्य वह्निमान् पर्वत इतिज्ञानीयवन्हिप्रकारतानिरूपितपर्वतनिष्ठविशेष्यतायां विरहेण पर्वतो वह्निमानित्यस्य वन्हिनिश्चयत्वानुपपत्तिरिति चेन्न ।

धर्मितावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यताधर्मितावच्छेदकतानात्मकप्रकारतानिरूपितविशेष्यतयोर्नैक्यमिति मताभिप्रायेणाऽनुपपत्त्यभावात्, अत एव वन्हिमत्पर्वतो घटवानितिज्ञानस्यापि वन्हिनिश्चयत्वसम्भवोऽन्यथा वन्हित्वावच्छिन्नप्रकारत्वान्यघटत्वावच्छिन्नप्रकारत्वानिरूपितत्वस्य वन्हित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायां विरहात् तस्य वन्हिनिश्चयत्वानुपपत्तिः । एतेन धर्मितावच्छेदकतानात्मकतदन्यप्रकारता निवेश्येत्यपि नि-

त्त्वम् । वन्हिघटवत्पर्वतवान् देश इति ज्ञानस्य वान्हिनिश्चयत्वाऽनुपपत्तिश्च, वान्हित्वावच्छिन्नप्रकारत्वान्यधर्मितावच्छेदकतानात्मकघटत्वावच्छिन्नप्रकारतानिरूपतपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वाविरहात । यद्यपि तदन्यप्रकारतायां सामान्यतोऽवच्छेदकतानात्मकत्वनिवेशे न तद्दोषवारणं सम्भवति, साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्याऽवच्छेदकतानात्मकप्रकारत्वानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानस्यैव साध्यनिश्चयत्वात् , तथाचोक्तस्थले वह्नित्वावच्छिन्नप्रकारत्वान्यघटत्वावच्छिन्न प्रकारताया अवच्छेदकतानात्मकत्वान्न तस्य वह्निनिश्चयत्वानुपपत्तिः, एवं च धर्मितावच्छेदकनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकतानात्मकप्रकारतानिरूपितविशेष्यतयोरैक्येऽपि न पर्वतो वह्निमानितिज्ञानस्य वह्निनिश्चयत्वानुपपत्तिः । नचैवं सति वह्निमत्पर्वतो घटवानितिज्ञानस्य तन्निश्चयत्वानुपपत्तिः, वह्नित्वावच्छिन्नप्रकारत्वान्याऽवच्छेदकतानात्मकघटप्रकारत्वानिरूपितविशेष्यताकत्वविरहादिति वाच्यम् । साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यावच्छेदकतानात्मकप्रकारत्वानिरूपिता सती अवच्छेदकतानात्मकसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतभिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वस्यैव साध्यनिश्चयरूपत्वात् , तथा च वह्निमत्पर्वतो घटवानिति ज्ञानस्य वह्निनिश्चयत्वसम्भवात् तदीयपर्वतविशेष्यतायां वह्निप्रकारत्वान्यावच्छेदकतानात्मकघटप्रकारतानिरूपितत्वसत्त्वेऽपि अवच्छेदकतानात्मकसाध्यप्रकारतानिरूपितत्वविरहाद्, भवति च यादृशी विशेष्यता तद्भिन्नत्वस्यैतज्ज्ञानीयवह्निप्रकारतानिरूपितपर्वतविशेष्यतायां सत्त्वेन तज्ज्ञानत्वसत्त्वात् । न चान्यप्रकारतायामवच्छेदकतानात्मकत्वं किमर्थमिति वाच्यम् । घटवत्पर्वतो वह्निमानितिनिश्चयस्य वह्निनिश्चयत्वानुपपत्तेः तदीयपर्वतत्वावच्छिन्नविशेष्यतायां साध्यप्रकारत्वान्यघटप्रकारतानिरूपितत्व–अवच्छेदकतानात्मकसाध्यप्रकारतानिरूपितत्वयोः सत्वेन तद्भिन्नत्वाविरहात्, अतस्तन्निवेशः, तथाच तदीयघटत्वावच्छिन्नप्रकारतायामवच्छेदकतानात्मकत्वविरहात् । एवं साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वस्यापि सार्थक्यम्, अन्यथा घटवान् पर्वत इतिज्ञानस्य वह्निनिश्चयत्वापत्तेः । तथापि प्रकारावच्छिन्नवादिनो मते अवच्छेदकतानात्मकप्रकारत्वाप्रसिद्ध्याऽसम्भवापत्तिरिति चेन्न । साध्यतावच्छेदकावच्छिन्नप्रकारतान्यमुख्यविशेष्यतानिरूपितप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वनिवेशात् तज्ज्ञानीयघटत्वावच्छिन्नप्रकारताया मुख्यविशेष्यकत्वविरहेण तद्वारणादिति ।

न च तथापि वह्निघटवानित्येकत्र द्वयमिति रीत्या ज्ञानस्य वह्निनिश्चयत्वानुपपत्तिरिति वाच्यम् । स्वमते मुख्यविशेष्यांशे एकत्र द्वयं मितिरीत्या ज्ञानानभ्युपगमादिति ।

अथैवमपि घटवत्पर्वतवान् देश इत्यस्य साध्यानिश्चयत्वापत्तिः, साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यत्वस्य घटत्वावच्छिन्नप्रकारतायामवच्छेदकतानात्मकत्वविरहात अवच्छेदकतात्मकात्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वात् । न च न्यग्भूतनीयप्रकापक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिवेशेनैव तद्वारणमिति वाच्यम् । तथासति वह्निमत्पर्वतवान देश इत्यस्य निश्चयत्वानुपपत्तिः पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताकत्वविरहात् इति चेन्न । तादृशप्रकारत्वानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छि-

न्नविशेष्यताकज्ञानत्वस्य निश्चयत्वपदार्थत्वात् तस्य साध्यतावच्छेदकावच्छिन्नप्रकारतानिरू-पितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वविरहेण वारणा(१)दत एव च पर्वते वह्निं जानामी-त्यनुभवः पर्वते वह्निं निश्चिनोमीति सामान्यघटितविशेषवत्तानुभवात् ।

अथ वह्निमत्पर्वतो घटवानित्यस्य साध्यनिश्चयत्वानुपपत्तिः, तादृशप्रकारत्वान्यमुख्यवि-विशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताकत्व-विरहादिति चेन्न । साध्यतावच्छेदकावच्छिन्नावच्छेदकत्वानिरूपितमुख्यविशेष्यतानिरूपित-तदन्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वाविवक्षणात्तदन्यघटत्वावच्छिन्नप्र-कारतायां तादृशावच्छेदकत्वानिरूपितमुख्यविशेष्यतानिरूपितत्वविरहेण वारणात् ।

नन्वेवं वह्नितदभाववत्पर्वतवान् देश इति विशेषणांशे संशयात्मकनिश्चयस्य साध्यनिश्चय-त्वापत्तिः ज्ञानीयतदन्यप्रकारतायां तादृशावच्छेदकत्वानिरूपितमुख्यविशेष्यत्वानिरूपितत्वात् । न च विशेषणांशे संशयात्मकज्ञाने मानाभाव इति वाच्यम् । तथासति समानाधिकरणाभा-वप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणतदभाववद्धूमवान् पर्वत इति विशेषणांशे संशयात्मकज्ञानात् अनुमित्यनुपपत्त्या व्यभिचारवारणाय विशेषणांशे निश्चयत्वनि-वेश इति गदाधरभट्टाचार्येण विशिष्टवैशिष्ट्यवादे लिखितत्वादिति चेन्न ।

विशेषणांशे संशयानभ्युपगन्तृमते साध्यनिश्चयत्वस्यैव परिष्कारकरणादिति ध्येयम् ।

केचित्तु—तदन्यप्रकारतानिरूपितत्वाभावस्याव्याप्यवृत्तित्वाभिरवच्छिन्नपर्वतानिष्ठाविशेष्यता-त्वावच्छेदेन तदन्यपर्वतप्रकारतानिरूपितत्वसत्त्वेऽपि पर्वतत्वानवच्छिन्नविशेष्यतात्वावच्छेदेन तद-भावसत्त्वान्न पर्वतो वह्निमानित्यत्र साध्यनिश्चयत्वानुपपत्तिः । पर्वतो वह्निमान्नवेति संशयस्य निरवच्छिन्नपर्वतनिष्ठविशेष्यतात्वावच्छेदेन तदन्याभावत्वावच्छिन्नप्रकारतानिरूपितत्वाभावस-त्त्वेऽपि साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वावच्छेदकीभूतधर्मावच्छेदेन तदन्यप्रकारता-निरूपितत्वाभावानिवेशात् तादृशावच्छेदकीभूतपर्वतत्वावच्छिन्नविशेष्यतात्वावच्छेदेन तादृशनिरू-पितत्वाभावविरहेण निश्चयत्वविरहात् । न च शुद्धपर्वतत्वावच्छिन्नविशेष्यतात्वस्य वह्नित्वावच्छिन्न-प्रकारतानिरूपितत्वस्यातिप्रसक्ततया न वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वस्यावच्छेदकत्वमपि तु वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वपर्वतत्वावच्छिन्नविशेष्यतात्वोभयधर्म एव, निरूपित-त्वांशेऽवच्छेदकत्वं चोपलक्षणविधया ग्राह्यम्, एवं च तदुभयधर्मावच्छेन तदन्यवह्न्यभाव-त्वावच्छिन्नप्रकारतानिरूपितत्वाभावसत्त्वात् तस्यापि निश्चयत्वापत्तिः । तदीयवह्न्यभावत्वा-वच्छिन्नप्रकारताया पर्वतत्वावच्छिन्नविशेष्यतायाश्च वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वत-त्वावच्छिन्नविशेष्यतात्वेन वह्न्यभावत्वावच्छिन्नप्रकारतात्वेनैव निरूप्यनिरूपकभाव—इति वाच्यम् ।

संशयीयवह्न्यभावत्वावच्छिन्नप्रकारताया वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वाव-च्छिन्नविशेष्यतात्वेनेव विनिगमनाविरहात् वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नवि-शेष्यतात्वेनापि निरूप्यनिरूपकभाव इति वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशे-ष्यतात्वावच्छेदेन तदन्यवह्न्यभावत्वावच्छेदेन तदन्यवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितत्व-

---

(१) साध्यतावच्छेदकावच्छिन्नप्रकारतानिवेशादेव ।

सत्त्वेन वन्हिमान्नवेतिसंशये निश्चयत्वापत्तिविरहात् । न चैवमपि वन्हिघटवान् पर्वत इति निश्चयेऽपि घटत्वावच्छिन्नप्रकारताया विनिगमनाविरहात् घटत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतात्वेनेव वन्हित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतात्वेनाऽपि निरूप्यनिरूपकभावेन वन्हित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतात्वावच्छेदनापि तदन्यघटत्वावच्छिन्नप्रकारतानिरूपितत्वसत्त्वात् तस्य साध्यनिश्चयत्वानुपपत्तिरिति वाच्यम् । संशयातिरिक्तज्ञाने मुख्यविशेष्यांशे एकत्र द्वयमिति रीत्या ज्ञानाभ्युपगन्तुमते साध्यनिश्चयत्वस्यैव तादृशपरिष्कारकरणात् । न च तथापि वन्हिघटवत्पर्वतवान् देश इत्यस्य साध्यनिश्चयत्वाऽनुपपत्तिः, तदन्यघटत्वावच्छिन्नप्रकारतानिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतात्वावच्छेदेन पक्षतावच्छेदकावच्छिन्नविशेष्यतायां सत्त्वेनाऽनिरूपितत्वविरहादिति वाच्यम् । तथासति तदन्यप्रकारतायां मुख्यविशेष्यतानिरूपितत्वनिवेशात् , एवं च घटवत्पर्वतवान्देश इति ज्ञाने तदन्यघटत्वावच्छिन्नप्रकारतायां मुख्यविशेष्यतानिरूपितत्वविरहादेव तस्य वारणात् अन्यज्ञानीयान्यप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसत्त्वेन तस्यापि साध्यनिश्चयत्वापत्तिः । अत एव पक्षतावच्छेदकावच्छिन्नविशेष्यतायां स्वतन्त्रसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वनिवेशनमित्याहुः ।

साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वावच्छिन्नं यत्तदन्यप्रकारतानिरूपितत्वं तदभाववत्पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वं साध्यनिश्चयत्वम् , पर्वतो वह्निमान्नवेतिसंशयीयप्रकारताद्वयनिरूपितद्वयोरेवावच्छेद्यावच्छेदकभावेन तदीयतदन्यप्रकारतानिरूपितत्वस्यैव साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वावच्छिन्नतया तदभाववत्त्वस्य निश्चयीयविषयतायां सत्त्वेन पर्वतो वह्निमानित्यादौ निश्चयत्वोपपत्तिः, पर्वतो घटवानित्यादौ तादृशनिरूपितत्वाभाववत्पक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसत्त्वेऽपि तादृशविशेष्यतायां स्वतन्त्रसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वनिवेशान्न तत्र तन्निश्चयत्वापत्तिरिति केचिदाहुः ।

स्वनिरूपितत्वस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारत्वावच्छिन्नप्रतिबध्यतावच्छेदकीभूतप्रकारत्वानिरूपितत्वोभयसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमेव साध्यनिश्चयत्वम् , पर्वतो वह्निमानितिनिश्चयीयपर्वतत्वावच्छिन्नविशेष्यतायां वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वस्य स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारत्वावच्छिन्नप्रतिबध्यतावच्छेदकीभूतवन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्य च सत्त्वेन साध्यनिश्चयत्वोपपत्तिः ।

निर्वह्निः पर्वतो वह्निमानिति समुच्चये प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमाद्वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायां तादृशप्रतिबध्यतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्नप्रकारत्वानिरूपितत्वसत्त्वेन निश्चयत्वोपपत्तिः, पर्वतो वह्निमान्नवेति संशये च वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायां तादृशप्रतिबध्यतावच्छेदकीभूतसंशयीयप्रकारतानिरूपितत्वसत्त्वेनानिरूपितत्वविरहात् न निश्चयत्वापत्तिः ।

अथ वह्निघटवान् पर्वत इति ज्ञानीयघटत्वावच्छिन्नप्रकारताया अपि वह्नित्वावच्छिन्न-

प्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितघटवान् वह्न्यभाववान् घटवान्पर्वत इति ज्ञाननिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतघटत्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतावच्छेदकतया तन्निरूपितत्वेन न तत्र साध्यनिश्चयत्वानुपपत्तिरिति चेन्न ।

तादृशप्रतिबध्यतावच्छेदकीभूतप्रकारतायां स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वनिवेशात्, तथाहि—साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताकज्ञानत्वं साध्यनिश्चयत्वम् । वैशिष्ट्यं च स्वनिरूपितत्वस्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन । प्रकारतायां स्ववैशिष्ट्यं च स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्व—स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारत्वावच्छिन्नप्रतिबध्यतावच्छेदकत्वोभयसम्बन्धेन । एवञ्च वह्निघटवान्पर्वत इति ज्ञानीयघटत्वावच्छिन्नप्रकारतायां तादृशप्रतिबध्यतावच्छेदकत्वेऽपि स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वविरहात् तादृशप्रतिबन्धकतानवच्छेदकीभूततादृशप्रतिबध्यतावच्छेदकीभूतसंशयीयवह्न्यभावत्वावच्छिन्नप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वे सत्त्वेन साध्यनिश्चयत्वोपपत्तिः । तादृशप्रतिबध्यतावच्छेदकीभूतप्रकारतानिवेशात् निर्वह्निः पर्वतो वह्निमान् इत्याहार्यज्ञानीयवह्न्यभावत्वावच्छिन्नप्रकारतायास्तादृशप्रतिबन्धकतानवच्छेदकत्वेऽपि न तत्र साध्यनिश्चयत्वानुपपत्तिः तादृशप्रकारतायास्तादृशप्रतिबध्यतावच्छेदकत्वविरहात् ।

वस्तुतस्तु साध्यतावच्छेदकावच्छिन्नप्रकारतान्यधर्मितानवच्छेदकतात्मकप्रकारत्वानिरूपितविशेष्यताशाल्यप्रामाण्यज्ञानानास्कन्दितज्ञानवृत्तित्वोपलक्षितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वं साध्यनिश्चयत्वम्, एवञ्च मुख्यविशेष्यांशे एकत्र द्वयमिति ज्ञानस्वीकारेऽपि क्षतिविरहः । साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यधर्मितावच्छेदकतात्मकप्रकारत्वानिरूपितविशेष्यताशाल्यप्रामाण्यज्ञानानास्कन्दित—पर्वतो वह्निमान् वह्निघटवांश्च पर्वत—इति समूहालम्बनज्ञानवृत्तित्वोपलक्षितवह्निघटवानितिज्ञानीयवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानत्वस्य तत्र सत्त्वात्, समानाकारकज्ञानीयविषयतयोरैक्येऽपि अप्रामाण्यज्ञानानास्कन्दितत्वनिवेशात् वह्निमान्न वा वह्निमान् पर्वत इति अप्रामाण्यज्ञानास्कन्दिततादृशप्रकारत्वानिरूपितविशेष्यताकज्ञानवृत्तित्वोपलक्षितशुद्धवह्निमान्नवेति संशयीयवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानत्वस्य वह्निमान्नवेति संशये सत्त्वेऽपि न तत्र साध्यनिश्चयत्वापत्तिः । न चाप्रामाण्यज्ञानानास्कन्दितत्वनिवेशेऽपि वह्निमान्न वा वह्निमान्पर्वत इत्याद्याहार्यज्ञानमादाय तत्समानाकारकवह्निमान्नवेति संशये साध्यनिश्चयत्वापत्तिर्दुर्वारैवेति वाच्यम् । तथासति अनाहार्यत्वनिवेशात् ।

अथ तथापि महानसीयवह्निमानितिज्ञानस्य तादृशतया तत्समानाकारकमहानसीयवह्निमान्नवेति संशये साध्यनिश्चयत्वापत्तिरिति चेन्न ।

साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतानिवेशात् महानसीयवह्निमान्नवेति संशये साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारतानिरूपित-

विशेष्यताविरहेणापत्तिविरहादित्याहुः । (१)

अन्ये तु साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वानवच्छिन्नयदन्यप्रकारतानिरूपितत्वं तदभाववत्पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वं साध्यनिश्चयत्वम्, वह्न्यभाववान् पर्वत इति निश्चयस्य पर्वतत्वधर्मितावच्छेदकवह्निप्रकारताकवह्निमान् पर्वत इत्यादिज्ञानं प्रत्येव विरोधित्वम्, न तु वह्निधर्मितावच्छेदककपर्वतत्वप्रकारकवह्निपर्वतत्वोभयधर्मितावच्छेदककघटादिप्रकारकपर्वतत्ववद्वह्निमान् घटवानित्यादिज्ञानं प्रत्यपि, वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वेन प्रतिबध्यत्वोक्तौ तत्राऽपि घटत्वावच्छिन्नप्रकारतानिरूपितउभयधर्मावच्छिन्नपर्वतनिष्ठविशेष्यतायाः वह्नित्वावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नपर्वतनिष्ठविशेष्यतायाः समानाधिकरणतया ऐक्येन वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायाः सत्त्वात् प्रतिबध्यत्वापत्त्या पर्वतो वह्निमानितिज्ञाने वह्नित्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितत्व—पर्वतत्वनिष्ठावच्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितत्वयोरवच्छेद्यावच्छेदकभावं स्वीकृत्य वह्नित्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितत्वावच्छिन्नपर्वतत्वनिष्ठावच्छेदकतावच्छिन्ननिरूपकतानिरूपितत्ववद्विशेष्यताकज्ञानत्वेन प्रतिबध्यत्वस्योक्तत्वात् ।

एवञ्च पर्वतत्वप्रकारतानिरूपितस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वानवच्छिन्नत्वविरहान्न तमादाय निश्चयत्वानुपपत्त्या तदन्यप्रकारतायां धर्मितावच्छेदकतानात्मकत्वम् वह्निमत्पर्वतो घटवानितिज्ञानीयवह्नित्वावच्छिन्नावच्छेदकतात्मकप्रकारतानिरूपितत्व—घटत्वावच्छिन्नप्रकारतानिरूपितत्वयोरवच्छेद्यावच्छेदकभावेन तदन्यघटत्वावच्छिन्नत्वावच्छिन्नप्रकारतामादायान्यप्रकारतायाः मुख्यविशेष्यतानिरूपितत्वविशेषणमिति घटवत्पर्वतवान्देश इति ज्ञाने निश्चयत्वापत्त्या स्वतन्त्रसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वविशेषणं पक्षतावच्छेदकावच्छिन्नविशेष्यतायामिति । न च वह्निघटवत्पर्वतवान्देश इत्येकत्रद्वयंरीतिज्ञानीयप्रकारताद्वयनिरूपितत्वद्वयोरवच्छेद्यावच्छेदकभावविरहेण तत्र निश्चयत्वानुपपत्त्या तदन्यप्रकारतायां मुख्यविशेष्यतानिरूपितत्वस्यावश्यकतया घटवत्पर्वतवान्देश इत्यत्र साध्यनिश्चयत्वापत्त्या स्वतन्त्रसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वविशेषणमिति वाच्यम्, एकत्र द्वयमिति रीत्या ज्ञानानभ्युपगन्तृमते एतादृशपरिष्कारकरणादिति विभावनीयमिति ।

अथ पर्वतपक्षकसंयोगेनाभावसाध्यकस्थले अभाववान्नवेति संशयस्य साध्यनिश्चयत्वापत्तिरस्याभावत्वावच्छिन्नप्रकारतायां साध्यतावच्छेदकीभूताऽभावत्वावच्छिन्नत्वेन तदन्यत्वविरहात्, तथाच तत्र साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारतानिरूपितत्वानवच्छिन्ना नाऽभावत्वावच्छिन्नप्रकारता अपि तु वह्नित्वावच्छिन्नप्रकारतैव तन्निरूपितत्वाभाववत्पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वसत्त्वात् । न च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकारत्वान्यप्रकारतानिवेशात् द्वितीयाभावत्वावच्छिन्नप्रकारतायां साध्यतावच्छेदकसम्बन्धावच्छिन्न

---

(१) न च तादृशरीत्या निवेशे कपिलवान्वह्निमानित्यस्य निश्चयत्वानुपपत्तिरिति वाच्यम् । यादृशसाध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारता प्राथमिकी तादृश्य एव साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तिनिरूपकतानिवेशान्नानुपपत्तिः ।

न्नत्वविरहेण तदन्यत्वसत्त्वात्, तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमेव साध्यनिश्चयत्वम्, वै० स्वनिरूपितत्व-स्वविशिष्टविशेष्यताभिन्नत्वोभयसं०, वै० स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपव्याप्तिप्रकारत्वान्यप्रकारतानिरूपितत्व स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपव्याप्तिप्रकारतानिरूपितत्वोभयसम्बन्धेन तथाचोक्तसंशयीयपर्वतत्वावच्छिन्नविशेष्यतायां न किंचिदपि साध्यतावच्छेदकावच्छिन्नविशिष्टत्वमतो न तस्य साध्यनिश्चयत्वापत्तिः । इदं च मुख्यविशेष्यांशे एकत्र द्वयमितिरीत्या ज्ञानानङ्गीकर्तृमते बोध्यम्, तत्स्वीकर्तृमते तु वह्निघटवान् पर्वत इति ज्ञानस्य वह्निनिश्चयत्वानुपपत्त्याऽन्यप्रकारतापदेन साध्याभावत्वावच्छिन्नप्रकारताया एव विवक्षणीयत्वात्, तथाचोक्तसाध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यसाध्याभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्य तज्ज्ञानीयपर्वतत्वावच्छिन्नविशेष्यतायां विरहेण तेन सम्बन्धेन स्वविशिष्टत्वविरहान्न तस्य वह्निनिश्चयत्वानुपपत्तिः । एवं पर्वतो वह्निमान् वह्न्यभाववांश्चेति समुच्चयस्थले तादृशप्रकारत्वान्यसाध्याभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्वनिरूपितत्वयोस्तदीयविशेष्यतायां विरहेण तेन स्वविशिष्टविशेष्यताभिन्नत्वसत्त्वान्न तस्य निश्चयत्वहानिः, एवंसति ह्रदे वह्न्यभावस्यानुमाने ह्रदो वह्निमान्नवेति संशयस्य साध्यनिश्चयत्वापत्तिः, तदीयह्रदत्वावच्छिन्नविशेष्यतायां स्वनिरूपितत्वसत्त्वेऽपि तादृशप्रकारत्वान्यसाध्याभावत्वावच्छिन्नप्रकारतानिरूपितत्वविरहेण स्वविशिष्टविशेष्यताभिन्नत्वसत्त्वात् । न च तादृशप्रकारत्वान्यसाध्याभावनिष्ठप्रकारतानिरूपितत्वमेव निवेश्यम्, तथाच साध्याभावस्य वह्निस्वरूपतया तत्संशयीयवह्नित्वावच्छिन्नप्रकारतायाः साध्याभावनिष्ठत्वात्तापत्तिरिति वाच्यम् । तत्रैव ह्रदो वह्न्यभाववान् द्रव्यवानित्येकत्र द्वयमितिरीत्या ज्ञानस्य साध्यनिश्चयत्वानुपपत्तेः, तदीयह्रदत्वावच्छिन्नविशेष्यतायां स्वनिरूपितत्वतादृशप्रकारत्वान्यसाध्याभावनिष्ठद्रव्यत्वावच्छिन्नप्रकारतानिरूपितत्वयोः सत्त्वेन तेन संबन्धेन स्वविशिष्टविशेष्यताभिन्नत्वविरहात् । एवं भावद्वयकोटिकसंशयस्वीकर्तृमते पर्वतो वह्निमान् धूमवान्वेति संशयस्य वह्निनिश्चयत्वापत्तेश्च, साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यधूमत्वावच्छिन्नप्रकारतायां साध्याभावनिष्ठत्वविरहात्, अतः साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमेव साध्यनिश्चयत्वम् । वै० स्वनिरूपितत्वस्वविशिष्ट(१)प्रकारतानिरूपितत्वोभयसंबन्धेन, वै० स्वावच्छेद्यविशेष्यतानिरूपितप्रतियोगित्वसंबन्धावच्छिन्नप्रकारतावच्छेदकीभूतधर्मावच्छिन्नत्वस्वावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वस्वभिन्नत्वस्वनिरूपितविशेष्यतानिरूपितत्वान्यतमसंबन्धेन, तथाचोक्तह्रदो वह्निमान्नवेति संशयीयवह्नित्वावच्छिन्नप्रकारतायां तादृशान्यतमघटकस्वावच्छेद्यविशेष्यतानिरूपितत्वादिसंबन्धसत्त्वेन तेन स्वविशिष्टप्रकारतानिरूपितत्वस्य तदीयह्रदत्वावच्छिन्नविशेष्यतायां विरहान्न तस्य साध्यनिश्चयत्वापत्तिः । एवमुक्तभावद्वयकोटिकसंशयीयधूमत्वावच्छिन्नप्रकारतायां तादृशान्यतमघटकस्वानिरूपिताविशेष्यतानिरूपितविशेष्यतानिरूपितत्वसत्त्वेनोक्तसंब-

---

(१) वस्तुतः संशयीयप्रकारतायोरवच्छेद्यावच्छेदकभावस्वीकर्तृमते स्ववै० प्रकारतायां स्वावच्छेद्यत्वमात्रसम्बन्धेन बोध्यम् ।

न्वेन स्वविशिष्टप्रकारतानिरूपितत्वस्य तदीयहृदत्वावच्छिन्नाविशेष्यतायां विरहान्न तस्य साध्यनिश्चयत्वापत्तिरिति वाच्यम् । तथासति स्वरूपेण साध्यतायामभाववान्नवेति संशये पि- निश्चयत्वस्यापत्तेः ।

न च स्वरूपेणाभावस्य केवलान्वयितया तन्निश्चयसामग्र्याः नियतत्वेन तत्कोटिनिश्चये तस्याहार्यत्वमिति वाच्यम् । तथासति द्वितीयाऽभावकोटिकसंशयेऽतिव्याप्तिः । न च केवलान्व- यिप्रतियोगिकाभावाऽप्रसिद्ध्या द्वितीयाभावकोटिकसंशयाऽप्रसिद्धिरिति वाच्यम् । गगनाभाव- स्य प्रसिद्धेः सम्भवादिति चेन्न ।

स्वनिरूपितत्वस्वान्यप्रकारतानिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वोभ- यसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताशा।लि- ज्ञानत्वविवक्षणात् प्रथमाभावत्वावच्छिन्नप्रकारत्वान्यद्वितीयाभावत्वावच्छिन्नप्रकारतानिरूपित- त्वस्य पक्षविशेष्यतायां सत्वेन स्वनिष्ठावच्छेदकताकभेदवत्त्वविरहात् , एवं द्वितयिाभावत्वाव- च्छिन्नप्रकारतान्यतृतीयाभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्य पक्षनिष्ठविशेष्यतायां सत्वेन तत्सम्बन्धावच्छिन्नावच्छेदकताकभेदवत्त्वविरहात् , प्रथमाभावकोटिकसंशये द्वितयिाभावको टिकसंशये च आपत्तिविरहादिति सङ्क्षेपः । एवञ्चेति । तादृशसाध्यनिश्चयत्वकथने चेत्यर्थः । अत्र वह्नित्वावच्छिन्नाभावाप्रकारकत्वे सति वह्नित्वावच्छिन्नप्रकारकत्वस्य निश्चयत्वोक्तौ निर्वह्निः पर्वतो वह्निमानित्यस्य साध्यनिश्चयत्वानुपपत्तिरिति भावः ।

अथ स्वनिरूपितत्वस्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नाभावत्वावच्छिन्नाप्रकार त्वानिरूपितत्वोभयसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्न- विशेष्यताकत्वस्य निश्चयत्वोक्तौ तद्दोषवारणसम्भवेन पूर्वकल्प एव परिष्कर्तुं शक्यते किमनुरोधेन वस्तुतस्तुकल्पानुधावनमिति । न च वन्ह्यभावसाध्यकस्थले वान्हिमान्नवेति संशयस्य साध्यनिश्चयत्वापत्तिः, साध्याभावत्वावच्छिन्नप्रकारत्वानिरूपितत्वादिति वाच्यम् । तथासति साध्यतावच्छेदकावच्छिन्नप्रकारतावैशिष्ट्यं स्वनिरूपितत्वस्वविशिष्टप्रकारत्वानि- रूपितत्वोभयसम्बन्धेन निवेश्यम् । प्रकारतायां स्ववैशिष्ट्यं च स्वावच्छेदकतापर्य्याप्त्यधिक रणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्व—स्वावच्छेदकीभूतानुयोगितानिरूपितप्रतियो- गितावच्छेदकीभूतधर्मावच्छिन्नत्वान्यतरसम्बन्धेन, तथाच वन्हिमान्नवेति संशयीय- विशेष्यतायां साध्यतावच्छेदकीभूतवन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्वविशिष्टवन्ह्यभा- वत्वावच्छिन्नप्रकारतानिरूपितत्वसत्त्वेन स्वविशिष्टप्रकारतानिरूपितत्वघटितोभयसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारतावैशिष्ट्यविरहेण साध्यनिश्चयत्वापत्तिविरहात् । न च केवलान्वयिसाध्यकस्थले स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाप्र सिद्ध्या साध्यवानितिज्ञाने साध्यनिश्चयत्वानुपपत्तिरिति वाच्यम् । तथासति स्वावच्छेद कतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताव च्छेदकधर्मावच्छिन्नत्वनिवेशात् केवलान्वयितावच्छेदकीभूतधर्मावच्छिन्नाभावाप्रसिद्धावपि प्रमास्मदुक्तानीयप्रतियोगित्वसम्बन्धावच्छिन्नस्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्र- कारत्वाप्रसिद्ध्याऽनुपपत्तिवारणात् ।

न च तथापि प्रतियोगित्वप्रकारकसंशये निश्चयत्वापत्तिरिति वाच्यम् । तथासति स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितत्वस्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वावच्छिन्नप्रकारतानिरूपितत्वान्यतरसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टविशेष्यतावच्छेदकधर्मावच्छिन्नत्वघटितान्यतरसम्बन्धनिवेशात् प्रतियोगिताप्रकारकसंशये निश्चयत्वापत्तिविरहात् ।

न च वह्न्यभाववान् पर्वत इत्येकत्र द्वयरीतिज्ञाने निश्चयत्वानुपपत्तिः तादृशप्रकारतानिरूपितविशेष्यतावच्छेदकीभूताभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्य पर्वतत्वावच्छिन्नविशेष्यतायां सत्त्वादिति वाच्यम् । तथासति तादृशप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वनिवेशात् वह्न्यभाववानितिज्ञानीयाऽभावत्वावच्छिन्नप्रकारत्वस्यैव तथात्वात् वह्न्यभाववान् वह्निमानिति समुच्चये विशेष्यताद्वयोपगमेन तथात्वोपपत्तिः, एकत्र द्वयरीत्या वह्निवह्न्यभावावगाहने तस्याहार्य्यतया स्वविशिष्टप्रकारतायां किञ्चित्प्रतिबन्धकताऽवच्छेदकत्वविशेषणादेव वारणात्, तस्य तत्रापि आवश्यकत्वात् । न च तथापि समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववह्निप्रकारकज्ञाने निश्चयत्वानुपपत्तिरिति वाच्यम् । स्वावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगितायां स्वावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात्, तथाहि साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वमेव साध्यनिश्चयत्वम् । वै० स्वनिरूपितत्वविशिष्टप्रकारतानिरूपितत्वोभयसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यं च स्वावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नत्वस्वविशिष्टप्रतियोगिताविशिष्टत्वान्यतरसम्बन्धेन, प्रतियोगितायां स्ववैशिष्ट्यं च स्वावच्छेदकधर्मावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, प्रतियोगितावैशिष्ट्यं च त्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वस्वविशिष्टप्रकारकत्वानिरूपितविशेष्यत्वावच्छिन्नत्वान्यतरसम्बन्धेन, स्ववैशिष्ट्यं च प्रकारतायां स्वावच्छेदकधर्मावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति ।

न चैवमपि विषयतासम्बन्धेन महानसीयवह्निसाध्यकस्थले विषयतासम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावविषयकमहानसीयवह्निविषयकज्ञाने साध्यनिश्चयत्वानुपपत्तिः, न्यूनवारकपर्य्याप्तिनिवेशात् पक्षतावच्छेदकावच्छिन्नविशेष्यतायां साध्यतावच्छेदकावच्छिन्नप्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नप्रकारतानिरूपितत्वसत्त्वात् । न्यूनवारकपर्य्याप्तिनिवेशे तत्र वारणेऽपि संयोगेन वह्निसाध्यकस्थले संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावकोटिकमहानसीयवह्निकोटिकसंशये साध्यनिश्चयत्वापत्तिः । महानसीयवह्नित्वावच्छिन्नप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्य पक्षविशेष्यतायां विरहादस्माकं सिद्धान्तकल्पे तादृशप्रकारत्वानिरूपितविशेष्यताशाल्यप्रामाण्यज्ञानानास्कन्दितसमूहालम्बनज्ञानवृत्तित्वोपलक्षितसाध्यतावच्छेदकावच्छिन्नप्रकारतामादाय साध्यनिश्चयत्वोपपत्तेः । न चास्माकमपि साध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टविशेष्यताशाल्यप्रामाण्यज्ञानानास्कन्दितज्ञानवृत्तित्वोपलक्षितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिज्ञानत्वानिवेशात् तद्दोषवारणं सम्भवतीति वा-

पाषाणमयत्वादिना पर्वते तेजस्त्वादिना च वह्नेः सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन च तस्यानुमितेर्धर्मित्वसाध्यत्वयोरवच्छेदकावनुप्रवेशनीयौ ।

---

तत्र—पर्वते—तस्य वह्नेः । धर्मित्वेति । नचैवं वह्निमान् वह्निमानित्येवमप्यनुमितिः स्यात्, धर्मितावच्छेदकमनन्तर्भाव्य वह्निमत्तानिश्चयस्याऽविरोधित्वादिति वाच्यम् । इष्टत्वात्, वह्निमत्पक्षकवह्निसाध्यकानुमितिमन्तर्भाव्य पक्षताया हेतुत्वाकल्पनेन तदापत्त्यसंभवाच्च । अत्र धर्मितेत्युपलक्षणम् । एकसंबन्धेन साध्यवत्त्वानिश्चयेऽपि संबन्धान्तरेण साध्यानुमितेरुत्पादात्संबन्धविशेषोऽप्यनुसरणीयः ।

---

व्यम् । तथासति अन्यतरस्य गुरुशरीरतया द्विधान्यतरत्वस्य निवेशादतिगौरवादिति ध्येयम् ।

समुच्चये प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमादिति । अथ संशये एव प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमादित्येव कथं नोक्तमिति चेन्न ।

ईश्वरज्ञानस्य भ्रमत्वापत्तेः, ईश्वरस्य पर्वतो वह्निमान् वह्न्यभाववांश्चेति समुच्चयस्य सत्त्वेन तस्य च वह्न्यभाववन्निष्ठविशेष्यतानिरूपितवह्निप्रकारताकत्वात् । अतः समुच्चये एव प्रकारताद्वयनिरूपितविशेष्यताद्वययोः संशयसमुच्चयवैलक्षण्याय मन्तव्यम् । तथाचेश्वरीयसमुच्चये वह्न्यभावनिष्ठप्रकारतानिरूपितविशेष्यता भिन्ना, एवं वह्निनिष्ठप्रकारतानिरूपितविशेष्यता भिन्ना । एवं च वह्न्यभाववन्निष्ठविशेष्यतानिरूपितवह्निनिष्ठप्रकारताकत्वविरहेण न तस्य भ्रमत्वमिति दिक् ।

दीधितौ सिद्धावपि—पाषाणमयो वह्निमान् पर्वतस्तेजस्वीत्याद्यसमानाकारकनिश्चयेऽपि । अनुमितेः—पर्वतो वह्निमानित्यनुमितेः । आनुभविकतयेति शेषः । धर्मित्वसाध्यत्वयोः—उद्देश्यत्वविधेयत्वयोः । अनुप्रवेशनीयौ, पक्षताशरीरे इत्यादिः । तथाच पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति तद्रूपावच्छिन्नविशेष्यतानिरूपिततत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नस्य सिषाधयिषाविरहविशिष्टस्य अभावो हेतुरिति पर्यवसन्नम्, पर्वतो वह्निमानित्यादिसिद्धिदशायां वह्निमान् पर्वतो घटवानित्यनुमितेरुदयात्, प्रतिबध्यतावच्छेदककोटौ प्रकारतामुपेक्ष्य विधेयतानिवेशनम् । विधेयता च न प्रकारतानियता, किन्तु वह्निमनुमिनोमीत्यनुव्यवसायनियामको विषयताविशेषः । अत्र प्रतिबध्यताप्रतिबन्धकतावच्छेदककोटौ धर्मित्वसाध्यत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये । तदर्थश्च विशेष्यत्वादौ पर्वतत्वादिनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वम्, तेन पर्वतो वह्निमानितिनिश्चयदशायां जातिमान् वह्निमान् पर्वतो जातिमद्वानित्यनुमित्युपपत्तिः । एवं जातिमान् वह्निमान् पर्वतो जातिमद्वानितिनिश्चयदशायां पर्वतो वह्निमानित्यनुमित्युपपत्तिरिति ध्येयम् ।

तदापत्त्यसंभवाच्चेति । नन्वत्र वह्निमानित्यनुमितेः सर्वथैवाऽप्रसिद्ध्या कथमापत्तिसंभव इति चेन्न ।

यदि च पर्वतत्वसामानाधिकरण्येन एकत्र साध्यसिद्धावपि विनानुमित्सामन्यत्र तादृशानुमितिरानुभविकी तदा धर्मिविशेषोऽपि निवेश्यो, नान्यथा।

---

पर्वतत्वस्याऽवच्छेदकत्वं विषयीकृत्य एकत्र पर्वते साध्यसिद्धावपि अन्यत्र पर्वते सर्वदैवानुत्पत्तेः पर्वतत्वसामानाधिकरण्येनेत्युक्तम् । अवच्छेदकत्वमविषयीकृत्य पर्वतत्वप्रकारेणेति तदर्थः । तादृशानुमितिः—पर्वतत्वसामानाधिकरण्येन साध्यानुमितिः । धर्मिविशेषोऽपीति । तथाच पर्वतत्वप्रकारेण तत्पर्वतधर्मिकवह्न्याद्यनुमितौ पर्वतत्वप्रकारेण तत्पर्वतधर्मिकवह्न्यादिनिश्चयत्वेनैव प्रतिबन्धकत्वं वाच्यमिति भावः । इदमुपलक्षणम् । साध्यतावच्छेदकरूपेणैकसाध्यव्यक्तेः सिद्धावपि विनानुमित्सामन्यसाध्यव्यक्तेरनुमितेरानुभविकत्वे साध्यविशेषोऽपीति द्रष्टव्यम् । नान्यथा—धर्म्यन्तरेऽनुमित्यनुत्पादे तु धर्मिविशेषोऽपि न निवेश्य इत्यर्थः ।

अथ तत्पुरुषीयवह्न्यादिविधेयकानुमितिं प्रति तदीयानुमित्साविरहविशिष्टतदीयवह्न्यादिमत्तानिश्चयत्वेनैव समानविशेष्यताप्रत्यासत्त्या प्रतिबन्ध-

---

सिषाधयिषासत्त्वे तादृशानुमितिर्भवति तस्या एव सिषाधयिषायाः पूर्वमापत्तेः, पक्षताया हेतुत्वाकल्पनेनेत्यादिना तादृशस्थले पक्षतैव कारणमिति सूचितम् ।

ननु पर्वतत्वावच्छिन्नविशेष्यताकानुमितौ पर्वतत्वावच्छिन्नविशेष्यताकसिद्धेः प्रतिबन्धकत्वे पर्वतत्वेन एकपर्वतविशेष्यकासिद्धिदशायां तेन रूपेणाऽन्यपर्वतेऽपि साध्यानुमित्यनुदयापत्तिरत आह दीधितौ यदि चेति । एकत्र पर्वते साध्यसिद्धावपि—यत्किंचिद्व्यक्तिविशेष्यकसिद्धिदशायामपि । अन्यत्र पर्वते सर्वदैवानुत्पत्तेः, तेन रूपेण धर्म्यन्तरेनुमित्यनुत्पादस्य निर्विवादत्वादिति भावः । दीधितौ एकत्र—एकधर्मिणि, अनुमित्सासत्त्वे विशेषणाभावादेव विशिष्टाभावनिर्वाहाद् धर्मिविशेषनिवेशनमफलमतो विनानुमित्सामिति । अन्यत्र—अन्यधर्मिणि । धर्मिविशेषानन्तर्भावेपि सामानाधिकरण्येन सिद्धिदशायामवच्छेदकावच्छेदेनानुमितौ बाधकाभावात् । तादृशेति । सामानाधिकरण्यमात्रावगाहीत्यर्थः । धर्मिविशेषोपीति । तथाच पर्वतत्वावच्छिन्नतत्पर्वतादिनिष्ठोद्देश्यताकानुमितौ पर्वतत्वावच्छिन्नतत्पर्वतादिविशेष्यकसाध्यमत्तानिश्चयत्वेन प्रतिबन्धकत्वं कल्प्यमिति भावः ।

अथेति । ननु अनुमित्सायां तत्पुरुषीयत्वनिवेशनमनर्थकम् , समवायसंबन्धावच्छिन्नप्रतियोगिताकान्यपुरुषीयानुमित्साविरहस्य स्वात्मनि वर्त्तमानतया तत्पुरुषीयवह्न्यादिमत्तानिश्चयस्याऽन्यपुरुषीयानुमित्साविरहविशिष्टत्वेन प्रतिबन्धकत्वात् अन्यपुरुषीयानुमित्सामादाय साध्यनिश्चयकाले नानुमित्यापत्तिरिति चेन्न ।

कालिकसंबन्धावच्छिन्नप्रतियोगिताकानुमित्साविरहस्य क्षणान्तर्भावेन वैशिष्ट्यनिवेशात् , एकक्षणावच्छिन्नान्यदीयानुमित्सामादाय वह्निनिश्चयकाले वह्न्यनुमित्यापत्त्या तत्पुरुषीयत्वनिवेशात् । न च यद्यदिच्छासत्त्वे तत्पुरुषीयविशेष्यतासंबन्धेन साध्यनिश्चयसत्त्वे तत्पुरुषीयपरसा-

कत्वम्, न तु सामानाधिकरण्यप्रत्यासत्त्या तथात्वम्, तथासति पर्वतस्था-दिविशिष्टविशेष्यकवह्न्यादिप्रकारकानुमितौ पर्वतत्वादिविशिष्टविशेष्यक-वह्न्यादिमत्तानिश्चयत्वेन विरोधित्वे धर्मितावच्छेदकविधया पर्वतत्वमहान-सत्वाद्यनेकधर्मान्तर्भावेणाऽनन्तकार्यकारणभावकल्पनापत्तेः। न च तत्रापि पुरुषभेदेन कार्यकारणभावः। तत्पुरुषस्यापि क्वचित्पक्षतया तद्भेदेन कार्य-कारणभावनानात्वस्य त्वयाप्यङ्गीकर्त्तव्यत्वात्, तथाचार्थवशात्संपन्न एव ध-र्मिविशेषस्य निवेश इति वाच्यम्।

पाषाणमयत्वेन पर्वते वह्निनिश्चयेऽपि पर्वतत्वेन तत्र वह्न्यनुमित्युत्पत्तेः समानविशेष्यतया प्रतिबन्धकत्वासंभवात्। न चैकधर्मावच्छिन्नविशेष्यत्व-मेव प्रत्यासत्तिरित्यदोषः, पाषाणमयत्वस्याप्येकधर्मतया तदवच्छिन्नविशे-ष्यत्वस्याप्यव्यावर्त्तकत्वात्, तत्तद्धर्मावच्छिन्नविशेष्यतात्वेन प्रत्यासत्ति-तायान्तु तत्तद्धर्मघटितसंबन्धभेदेन कार्यकारणभावानन्त्यम्, अत्रापि तत्पु-रुषस्याप्यवच्छेदकधर्मविधया प्रवेशे गौरवं पुनराधिक्यं विनिगमनाविरहेण प्रकारताप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावकल्पनापत्तिश्च।

वस्तुतः समानविशेष्यतया विरोधित्वे यत्र पर्वतत्वचत्वरत्वाभ्यां पर्वत-चत्वरयोरेव साध्यवत्तानिश्चयात्मकः साध्यव्याप्यवत्तापरामर्शः, तदनन्तरं च पर्वतांशे साध्यवत्तानिश्चयस्याऽप्रामाण्यज्ञानं पर्वतधर्मिकानुमितिर्जाय-तामितीच्छा वा तत्रोत्तरकाले पर्वते इव चत्वरेऽपि साध्यानुमितिः स्यात्, अप्रामाण्यज्ञानाभावविशिष्टस्यानुमित्साविरहविशिष्टस्य च साध्यनिश्च-यस्य विशेष्यतासंबन्धेन चत्वरे विरहात्, तादृशाऽप्रामाण्यज्ञानव्यक्तेरनु-मित्साव्यक्तेर्वाऽनुत्तेजकत्वे पर्वतेऽप्यनुमित्यनुत्पत्तेरिति दिक्।

ध्यकानुमितिः प्रामाणिकी तदनुमित्साविरहविशिष्टसाध्यनिश्चयाभावस्तत्पुरुषीयतत्साध्यकानुमि-तौ पक्षतेति निवेशस्यावश्यकतया अन्यपुरुषीयानुमित्सासत्त्वे तत्पुरुषीयसिद्धिसत्त्वे तत्पुरुषीयव-ह्न्यनुमितेरप्रामाणिकतयाऽन्यपुरुषीयानुमित्साव्यक्तेरुत्तेजकानन्तर्गतत्वान्नान्यपुरुषीयानुमित्सा-मादायापत्तिः संभवतीति वाच्यम्। पर्वते वह्न्यनुमितिर्जायतामितीच्छाया अनुगतरूपेणोत्तेज-कतया तत्पुरुषीयपर्वते वह्न्यनुमितिर्जायतामितीच्छादशायां तत्पुरुषीयवह्न्यनुमितेः प्रामाणि-कतया अन्यपुरुषीयवह्न्यनुमितीच्छादशायामपि तादृशानुगतरूपेणोत्तेजकान्तर्गतत्वात्। न च समवायसंबन्धावच्छिन्नप्रतियोगिकानुमित्साविरहस्यात्मान्तर्भावेन सामानाधिकरण्यनिवेशात्तत्पु-रुषायत्वोनवेशे प्रयोजनविरह इति वाच्यम्। तथासति नानापुरुषीयनानेच्छासत्त्वे तत्पुरुषीया-नुमित्सासत्त्वेऽनुमितेः प्रामाणिकतया तत्तदनुमित्साव्यक्तीनामुत्तेजकविधया प्रवेशे गौरवाद्, अस्माकं तु तत्तत्पुरुषीयानुमित्साव्यक्तेरेवोत्तेजकविधया प्रवेशेन लाघवादिति संक्षेपः।

ननु विशेष्यतावच्छेदकतासंबन्धेन वह्निविधेयकानुमितिं प्रति तादृशसंबन्धेन तन्निश्चयस्यैव प्रतिबन्धकत्वान्नोक्तदोष इत्यत आह वस्तुत इति। चत्वरेऽपि साध्यानुमिति स्यादिति। ननु अप्रामाण्यज्ञानविशिष्टान्यविशेष्यतावच्छेदकतासंबन्धेनाऽनुमितिं प्रति नि-

पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनाऽनुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेः, सामानाधिकरण्यमात्रेणाऽनुमितिं प्रति तु सिद्धिमात्रस्य विरोधित्वम् ।

---

पक्षतेत्यादि । पक्षतावच्छेदकीभूतपर्वतत्वादिधर्मावच्छेद्यत्वमविषयीकृत्य साध्यसिद्धावपीत्यर्थः । तदवच्छेदेनेति । पक्षतावच्छेदकीभूतपर्वतत्वावच्छेद्यत्वं विषयीकृत्यानुमितेर्दर्शनादित्यर्थः । तदवच्छेदेन सिद्धेरिति । पर्वतत्वावच्छेद्यत्वावगाहिसिद्धेरित्यर्थः । विरोधित्वमित्यग्रेऽन्वयः । तथाच पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निविधेयकानुमितिं प्रति पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निमत्तानिश्चयत्वेन प्रतिबन्धकत्वम् । तत्र पर्वतविशेष्य-

---

त्वसंबन्धेन सिद्धेः प्रतिबन्धकत्वान्न चत्वरे वह्न्यनुमित्यापत्तिः, विशेष्यतायां अप्रामाण्यज्ञानप्रतियोगिवै० स्वविशेष्यीभूतज्ञाननिरूपितत्वस्वविशिष्टधर्मावच्छिन्नत्वोभयसंबन्धेन, धर्मे स्ववै० स्वीयवह्नित्वावच्छिन्नप्रकारकत्वनिष्ठप्रकारतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वस्वीयवन्ह्यभावप्रकारतानिरूपितविशेष्यतावच्छेदकत्वोभयसंबन्धेन, तथाचेदृशविशेष्यतायाश्चत्वरे सत्वात्पर्वते चाऽसत्त्वान्नापत्त्यनुपपत्ती । न चैवमपि पर्वते वह्न्यनुमितिर्जायतामितीच्छायाः सत्वे चत्वरे वह्न्यनुमितिः स्यादिति वाच्यम् । सिषाधयिषाविरहवैशिष्ट्यस्यापि विशेष्यतायां विवक्षितत्वात् । वै० स्वप्रतियोगिविशिष्टधर्मावच्छिन्नत्वसंबन्धेन । वै० स्वीयानुमितिनिष्ठविशेष्यतानिरूपितप्रकारकत्वनिष्ठप्रकारतानिरूपितप्रकारकत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वसंबन्धेनेति चेन्न ।

ईदृशपरंपरायाः संसर्गत्वानभ्युपगमादिति ध्येयम् ।

केचित्तु ननु स्वीयविषयतानिरूपितानुमितित्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता याऽवच्छिन्नत्वसंबन्धावच्छिन्नावच्छेदकता तद्वत्त्वसंबन्धावच्छिन्नप्रतियोगिताकानुमित्साभावविशिष्टसिद्धेर्विशेष्यतावच्छेदकतासंबन्धेनाऽनुमितित्वावच्छिन्नं प्रति तेन संबन्धेन प्रतिबन्धकत्वकल्पनेनैव चत्वरत्वेऽनुमित्यापत्तिवारणसंभवाच्चत्वरत्वे तादृशसम्बन्धावच्छिन्नप्रतियोगिताकानुमित्साभावविशिष्टसिद्धिसत्वेन प्रतिबन्धकत्वात्कथमेतत्कल्पपरित्याग इति । एवं स्वीयविशेष्यतानिरूपितनिश्चयत्वनिष्ठावच्छेदकतानिरूपितप्रकारत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्याभावस्यापि वैशिष्ट्य सिद्धौ निवेश्यम्, स्वपदमनुमित्सापरम्, अप्रामाण्यज्ञानपरं चेति चेन्न ।

पर्वतो वन्हिमान् वन्हिव्याप्यधूमवान्वितिपरामर्शसत्वेऽनुमितेर्जायतामितीच्छासत्वे पर्वते वन्ह्यनुमितिर्न स्यात्, उक्तसम्बन्धेन तदनुमित्सायाः कुत्राप्यसत्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य केवलान्वयितया तद्विशिष्टसिद्धेः पर्वतत्वादौ सत्वात्, एवं तत्परामर्शसत्वे

कत्वं पर्वतत्वविशिष्टविशेष्यकत्वमात्रं, तेन पर्वतत्वावच्छेदेन वह्निनिश्चयेऽपि पर्वतो वह्निमानित्याकारिकाया इव नीलपर्वतो वह्निमानित्याकारिकाया अपि अनुमितेर्नोत्पत्तिः। पर्वतत्वावच्छेद्यत्वं न स्वरूपसंबन्धविशेषो, मानाभावात् किन्तु पर्वतत्वव्यापकसाध्यप्रतियोगिकत्वं तदपि संसर्गमर्यादयैव भासते, पर्वतो वह्निमानित्याकारकानुमितौ पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगत्वेनैव संयोगस्य संबन्धविधया भानस्वीकारात्। न च पक्षतावच्छेदकव्यापकत्वमेव तदवच्छेद्यत्वमस्तु साध्यप्रवेशो व्यर्थ इति वाच्यम् ×, पर्वतत्वावच्छेदेन तद्रूपवत्त्वानुमितेः प्रमात्वापत्तेः, समवायस्यैकत्वात्, पर्वतत्वव्यापकसमवायेन पर्वतस्य तद्रूपव्यक्तिमत्त्वात्। न च पर्व

सिद्ध्यंशे इदं ज्ञानं निर्विशेष्यकं निष्प्रकारकं चेत्याद्यप्रामाण्यज्ञानसत्त्वे पर्वते वन्ह्यनुमितिर्न स्यात्, उक्तसम्बन्धेन तदप्रामाण्यज्ञानस्याविद्यमानतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य केवलान्वयित्वेन तद्विशिष्टायाः सिद्धेः पर्वतत्वे सत्त्वात्। न चाऽप्रामाण्यज्ञानस्येच्छायाश्च तद्व्यक्तित्वेनैवोत्तेजककोटौ निवेशनीयतया तज्ज्ञानस्येच्छायाश्चोत्तेजकत्वं नेव वाच्यम् विषयतासम्बन्धेनैवेति नानुपपत्तिरिति वाच्यम्। यत्र पर्वतो वन्हिमान् वन्हिव्याप्यधूमवान् चत्वरं न तद्वत् इति परामर्शसत्त्वे चत्वराविषयकं वह्निज्ञानं जायतामितीच्छासत्त्वे पर्वते वन्ह्यनुमितिर्न स्यात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदिच्छाभावस्य केवलान्वयितया तद्विशिष्टसिद्धेः पर्वतादौ सत्त्वात्। न च तत्रापि तादृशसम्बन्धेन तदिच्छाया नोत्तेजकत्वं देयमिति वाच्यम्। चत्वरेऽपि वन्ह्यनुमित्यापत्तेः, अतस्तस्यावश्यं तेन सम्बन्धेनोत्तेजकत्वं वाच्यम्, तथाचोक्तानुपपत्तिभियैतत्कल्पं परित्यज्य धर्मितावच्छेदकघटितकल्पानुसरणमिति प्राहुः।

**पर्वतत्वविशिष्टविशेष्यकत्वमात्रमिति।** प्रतिबध्यदिशि पक्षतावच्छेदकस्येतरवारकपर्याप्तिर्न निवेश्येति भावः। **नीलपर्वतो वन्हिमानित्याकारिकाया अपीति।** अथ नीलपर्वतो वह्निमानित्यनुमितेर्न पर्वतत्वावच्छेद्यत्वावगाहित्वं, धर्मितावच्छेदकावच्छेदेनानुमितौ धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते इति नियमात्, नीलपर्वतत्वावच्छेद्यत्वावगाहिपरामर्शदशायां नीलपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेनैव वह्न्यनुमितिः न तु पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेनेति चेन्न।

वह्निव्याप्यवत्तापरामर्शदशायां महानसीयवह्नेरितरबाधसहकारान्महानसीयवह्न्यनुमितिर्जायते, तथा नीलपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वह्निव्याप्यवत्तापरामर्शदशायां संयोगेन पर्वतत्वव्यापकत्वस्येतरबाधसहकारेण पर्वतत्वव्यापकसंयोगेन नीलपर्वतो वह्निमानित्यनुमितेरानुभविकत्वादिति दिक्।

**प्रमात्वापत्तेरिति।** अवच्छेदावच्छेदेन सिद्ध्यभावरूपपक्षतासहकृतशुद्धसमवायेन साधनव्यापकताघटितपक्षतावच्छेदकावच्छेदेन हेतुमत्तापरामर्शजन्यानुमितिर्यदि पर्वतत्वावच्छिन्नतत्पर्वतनिष्ठविशेष्यतानिरूपितपर्वतत्वव्यापकसमवायसंबन्धावच्छिन्नतद्रूपत्वावच्छिन्नप्रकारतावती स्यात् तदा स्वव्याधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपिका स्यात्, नित्यज्ञानावृत्तिविषयताशून्या वा स्यात्, पर्वतत्वव्यापकसमवायेन साधनव्यापकताघटिततादृश-

तत्त्वव्यापकवह्निसंयोगेन वह्नेः साधनव्यापकत्वाग्रहात्तादृशसंबन्धेन वह्न्यनुमित्यसंभव इति वाच्यम् पक्षविशेषबाधसहकाराद्व्यापकतानवच्छेदकप्रकारेणेव निरुक्तसिद्ध्यभावरूपपक्षतासहकाराद्व्यापकतानवच्छेदकसंबन्धेनापि साध्यानुमितेः सामान्यपरामर्शादेव संभवात् ।

न च पर्वतधर्मिकवह्न्यनुमितिमात्रं प्रत्येव पर्वतत्वावच्छेद्यत्वावगाहिनिश्चयस्य विरोधित्वात् प्रतिबध्यकोटौ पर्वतत्वावच्छेद्यत्वप्रवेशो व्यर्थ इति वाच्यम् । पर्वतत्वावच्छेदेन सिषाधयिषुणा तदवच्छेदेनाऽनुमितत्वया पर्वतत्वावच्छेदेनैव तत्सामानाधिकरण्येनाप्यनुमित्यापत्तेः ।

---

परामर्शजन्यतादृशानुमितित्ववदित्यत्र तात्पर्यम् । पक्षीभूततादृशानुमितिव्यक्तेः प्रमात्वं कैरपि नाभ्युपगम्यते इति ध्येयम् । अथ पर्वतत्वावच्छेदेन तद्वह्न्यनुमितेः प्रमात्वसंभवे तद्रूपानुमितिपर्यन्तानुधावनं व्यर्थम् । न च संयोगस्य नानात्वात्पर्वतत्वव्यापकत्वासंभव इति वाच्यम् । पर्वतत्वसमानाधिकरणविशिष्टसमवायाभावप्रतियोगित्वस्य समवाये सत्त्वेन समवायस्यैकत्वेऽपि पर्वतत्वव्यापकत्वासंभवात्तः पर्वतत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकत्वस्यावश्यकतया संयोगस्य नानात्वेऽपि तत्संभवादिति चेन्न ।

विशिष्टाभाववारणाय निरवच्छिन्नावच्छेदकताकपर्वतत्वसमानाधिकरणाभावाप्रतियोगित्वरूपव्यापकत्वनिवेशात् संयोगस्य नानात्वेन न व्यापकत्वं पर्वतत्वसमानाधिकरणसंयोगरूपतद्व्यक्तिर्नास्तीत्यभावप्रतियोगित्वस्य संयोगे सत्त्वात्, पर्वतत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकतापक्षे तद्व्यक्तेः स्वरूपतो भानात् संयोगे तद्व्यक्तिमान्नेतिभेदप्रतियोगितावच्छेदकत्वसत्त्वात्, समवायस्यैक्येन समवाये पर्वतत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वस्य सत्त्वादिति ध्येयम् ।

अनुमित्यापत्तेरिति । ननु यत्र पर्वतत्वावच्छेदेन शुद्धसंयोगेन सिद्धिदशायां वह्निव्याप्यधूमवानिति परामर्शः, ततो वह्नौ महानसीयसंयोगेन धूमव्यापकत्वज्ञानम्, तत्र महानसीयसंयोगेन वह्न्यनुमित्यनु(१)पपत्तिसंभवे आपत्तिदानमसंगतमिति चेन्न । पर्वतत्वावच्छेद्यत्वप्रवेशेऽपि यत्र पर्वतत्वावच्छेदेन शुद्धसंयोगेन सिद्धिसत्त्वे तदवच्छेदेन वह्निव्याप्यधूमवानिति परामर्शः ततो वह्नौ महानसीयसंयोगेन धूमव्यापकत्वज्ञानम्, तत्र पर्वतत्वावच्छेदेन महानसीयसंयोगेन वह्न्यनुमितिर्न स्यात्, तत्रापि पर्वतत्वव्यापकवह्निप्रतियोगिकसम्बन्धावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशाल्यनुमितित्वसत्त्वेन तां प्रति तत्सिद्धेः प्रतिबन्धकत्वात्, अतः संयोगत्वनिष्ठावच्छेदकताभिन्ना सती पर्वतत्वव्यापकवह्निप्रतियोगिकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसंयोगत्वनिष्ठावच्छेदकताकसंसर्गताकवह्निविधेयकानुमितिं प्रति अवच्छेदकावच्छेदेनानुमित्साविरहविशिष्टावच्छेदकावच्छेदेन वह्निनिश्चयस्य विरोधित्वं भवता विवक्षणीयम्, तथा च महानसीयसंयोगेन पर्वतो वह्निमानित्यनुमितौ तादृशानुमितित्वविरहात् तदनुमितिं प्रत्यवच्छेदकावच्छेदेन वह्निनिश्चयस्य प्रतिबन्धकत्वाभावात्तादृशानुपपत्तिविरहात् । न च पर्वतत्वव्यापकत्वस्य संसर्गतावच्छेदककुक्षौ प्रवेशेऽनुपपत्तिवारणेऽपि

---

(१) तत्रापि पर्वतधर्मिकवह्न्यनुमितित्वसत्त्वात् तां प्रति तत्सिद्धेर्विरोधित्वात् ।

पर्वतत्वावच्छेद्यत्वावगाहित्वप्रवेशो व्यर्थ इति ग्रन्थाऽसंगतिरिति वाच्यम् । पर्वतत्वावच्छेद्यत्व-स्येतरवारकपर्याप्तिनिवेशेऽपि न्यूनवारकनिवेशो व्यर्थ इत्यत्रैव तात्पर्यात् ।

अथ तथापि अनुमित्युत्पत्तौ प्रतिबन्धकाभावकूटस्याप्यपेक्षणीयतया यत्राऽवच्छेदका-वच्छेदेनानुमित्सा सामानाधिकरण्येन सिद्ध्यात्मकपरामर्शः तत्र सामानाधिकरण्येनानुमित्याप त्तिवारणाय सामानाधिकरण्येनानुमितौ सामानाधिकरण्येनाऽनुमित्साविरहविशिष्टसिद्ध्यभाव-स्य कारणत्वं वाच्यम्, एवं चोक्तस्थले सामानाधिकरण्येनानुमित्साविरहविशिष्टसिद्धेः सत्त्व-त्कथं सामानाधिकरण्येनाऽनुमित्यापत्तिः, प्रत्युत यत्र सामानाधिकरण्येनाऽनुमित्साऽवच्छेद-कावच्छेदेन सिद्ध्यात्मकपरामर्शः तत्र सामानाधिकरण्येनानुमित्यनुपपत्तिरेव, पर्वतधर्मिकवह्न्य-नुमितिमात्रे एवाऽवच्छेदकावच्छेदेनानुमित्साविरहविशिष्टस्यावच्छेदकावच्छेदेन सिद्धेः प्रति-बन्धकत्वादिति चेत् ।

अत्र केचित् तादृशानुमितिं प्रति सामान्यतोऽनुमित्साविरहविशिष्टावच्छेदकाव-च्छेदेन सिद्धविरोधित्वे तात्पर्यात्, सामान्यतोऽनुमित्साविरहविशिष्टसिद्धेरभावात् तत्र वह्न्यनुमित्यापत्तिरिति । न चैवं पर्वतत्वावच्छेदेन सिद्धिदशायां घटानुमित्सादशायां वह्न्यनु-मितिप्रसङ्गः सामान्यतोऽनुमित्साविरहविशिष्टसिद्धेरभावादिति वाच्यम् । तथासति यद्यदिच्छा-सत्त्वे अवच्छेदकावच्छेदेन सिद्धिसत्त्वे तादृशानुमितिः प्रामाणिकी तत्तदिच्छाविरहविशिष्टावच्छे-दकावच्छेदेन सिद्धविरोधित्वोपगमान्नानुपपत्तिरिति विभावनीयम् । न च तथापि सामानाधि-करण्येनानुमितिकारणीभूतस्य सामानाधिकरण्येनानुमित्साविरहविशिष्टसिद्ध्यभावस्याऽसत्त्वा-त्कथमापत्तिः, अन्यथा पर्वतत्वावच्छेद्यत्वप्रवेशेऽपि तद्वारणाऽसंभवात् । न च सामानाधिक-रणमात्रेणानुमितिं प्रति नैतादृशविरोधित्वकल्पनं किन्तु संयोगत्वनिष्ठावच्छेदकताकसंसर्गताक वह्निविधेयताशाल्यनुमितित्वावच्छिन्नं प्रत्येवेति वाच्यम् । तत्रावच्छेदकावच्छेदेनानुमितिसंभ-वेन तादृशानुमितित्वावच्छिन्नस्यापत्त्यसंभवात् सामानाधिकरण्यमात्रेणानुमितेरेवापत्तिदान-परग्रन्थवर्णनानौचित्यादिति वाच्यम् । यत्र प्रथमक्षणेऽपेक्षाबुद्ध्यात्मकसामानाधिकरण्येन बाधनिश्चयः ततो लौकिकसन्निकर्षजन्यापेक्षाबुद्ध्यात्मकावच्छेदकावच्छेदेन सिद्ध्यात्मकपरामर्शः ततोऽवच्छेदावच्छेदेनानुमित्सा तत्र क्षणैकविलंबेनानुमितिः तत्र अनुमित्साक्षणे संयोगत्वनिष्ठा-वच्छेदकताकसंसर्गताकवह्नित्वावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नस्यापत्तेः(१) । न च बाधनिश्चयस्य प्रतिबन्धकत्वान्न तादृशानुमितिरिति वाच्यम् । पर्वतत्वव्यापकवह्निप्रतियोगि-कत्वसंयोगत्वोभयधर्मावच्छिन्नसंसर्गताकवह्नित्वावच्छिन्नप्रकारताशालिबुद्धित्वस्य सामाना धिकरण्येन बाधनिश्चयप्रतिबध्यतावच्छेदकतया सद्धर्मावच्छिन्नस्यापत्त्यदानात् । न च व्याप्यधर्मावच्छिन्नसामग्र्याः व्यापकधर्मावच्छिन्नप्रयोजकत्वे तद्विरहादेव न तत्रानुमित्यापत्तिः तत्र व्याप्यधर्मः सामानाधिकरण्येन तादृशानुमितित्वं, तद्धर्मावच्छिन्नसामग्री च सामाना धिकरण्येनाऽनुमित्साविरहविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभाव एवेति वाच्यम् । एतादृशनिया-मस्याऽप्रामाणिकत्वादिति वदन्ति ।

अपरे तु पर्वतत्वविशिष्टविशेष्यतानिरूपितपर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्ब

(१) फलतः सामानाधिकरण्येनेत्यर्थः ।

यत्तु पर्वतत्वावच्छेद्यत्वमवच्छेद्यतासंबन्धेन पर्वतत्वादिकं वा साध्यांशे प्रकारतयैव भासते, तथाच पर्वतः पर्वतावच्छेद्यवह्निमानित्येव पर्वतत्ववद्वह्निमानित्येव वाऽनुमितिरिति प्राचीनाः । तच्चिन्त्यम् ।

शिखरावच्छेदेन पर्वतो वह्निमानित्यनुमितौ तु पक्षतावच्छेदकीभूताशिखरावच्छिन्नत्वं स्वरूपसंबन्धरूपमेव भासते न तु व्यापकत्वलक्षणम्, अननुभवात्, एवं च शिखरावच्छेद्यवह्निसंयोगेन वह्न्यनुमितौ शिखरावच्छेद्यवह्निसंयोगेनैव वह्निनिश्चयो विरोधी न तु संयोगमात्रेणेत्यवधेयम् ।

सामानाधिकरण्यमात्रेणेति । पक्षतावच्छेदकरूपेण पक्षे साध्यानुमितित्वमेव तत्सामानाधिकरण्येनानुमितित्वं, तच्च पक्षतावच्छेदकावच्छेदेनानुमितावप्यस्तीत्यतो मात्रपदम् । सिद्धिमात्रस्येति । तत्र पक्षतावच्छेदकसामानाधिकर-

---

ण्यावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशाल्यनुमितिं प्रति अवच्छेदावच्छेदेनाऽनुमित्सविरहविशिष्टतादृशनिश्चयत्वेनैकं प्रतिबन्धकत्वम्, अपरं च पर्वतत्वमात्रावच्छिन्नविशेष्यतानिरूपितसंयोगत्वमात्रावच्छिन्नसंसर्गताकवह्नित्वमात्रावच्छिन्नप्रकारताकानुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगत्वविशिष्टसंसर्गताकवह्नित्वावच्छिन्नविधेयताकनिश्चयत्वेन प्रतिबन्धकत्वम्, एवं च शुद्धसंयोगेन नीलपर्वतो वह्निमानित्यनुमितिं प्रति पर्वतत्वव्यापकवह्निसंयोगेन पर्वतो वह्निमानितिनिश्चयस्य प्रतिबन्धकत्वमनुभवसिद्धं नोक्तप्रतिबध्यप्रतिबन्धकभावद्वयकल्पनेन निर्वहति, अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यतावच्छेदककोटौ पर्वतत्वावच्छेद्यत्वप्रवेशात् सामानाधिकरण्येन सिद्धेः प्रतिबध्यतावच्छेदककोटौ च पर्वतत्वमात्रावच्छिन्नविशेष्यतायाः प्रवेशात्, अतः पर्वतत्वविशिष्टविशेष्यताकसंयोगत्वमात्रावच्छिन्नसंसर्गताकवह्निविधेयताकानुमितौ पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निविधेयकनिश्चयत्वेन प्रतिबन्धकत्वं सिद्धान्ते कल्पनीयम्, इदानीं यदि अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यतावच्छेदककोटौ पक्षतावच्छेद्यत्वं न दीयते तदा तृतीयं प्रतिबन्धकत्वं न कल्पनीयम्, उक्तप्रतिबध्यप्रतिबन्धकभावद्वयेनैव निर्वाहात्, एवं च यत्रावच्छेदावच्छेदेनानुमित्सा तदवच्छेदेन सिद्ध्यात्मकपरामर्शः तत्र शुद्धसंयोगेन नीलपर्वतो वह्निमानित्यनुमित्यापत्तिरिति प्राहुः ।

श्रीचरणास्तु—उक्तानुपपत्तिवारणाय पर्वतधर्मिकवह्न्यनुमितिसामान्येऽनुमित्साविरहविशिष्टावच्छेदकावच्छेदेन सिद्धेः प्रतिबन्धकत्वं वाच्यम्, एवं यत्र सामानाधिकरण्येनानुमित्सा अवच्छेदावच्छेदेन सिद्ध्यात्मकः सामानाधिकरण्येनावच्छेदावच्छेदेन च परामर्शः तत्र सामानाधिकरण्येनानुमितिर्भवति इदानीमवच्छेदावच्छेदेनानुमित्यापत्तिः तत्प्रयोजकस्य परामर्शस्याऽनुमित्साविरहविशिष्टसिद्ध्यभावस्य च सत्त्वादतः प्रतिबध्यदिशि पर्वतत्वावच्छेद्यत्वं प्रवेश्य पृथक् पृथगेव प्रतिबध्यप्रतिबन्धकभावो वाच्य इति पाठयन्तिस्म ।

यत्त्विति । पर्वतत्वावच्छेद्यत्वस्य प्रकारतया भाने पर्वतत्वावच्छेद्यत्वज्ञानस्य पूर्वमपेक्षणात्तज्ज्ञानकाले पर्वतत्वावच्छेद्यत्वावगाह्यनुमित्यसम्भवादाह अवच्छेद्यतासम्बन्धेनेति । सम्बन्धविधया भाने तज्ज्ञानानपेक्षणादिति भावः । पर्वतत्वावच्छेदेन शुद्धवह्नित्वावच्छिन्नविधेयताशाल्यनुमित्यसम्भवादित्यस्वरसात्तिन्त्यमित्यनेन सूचितः ।

इत्थं च लिङ्गभेदन्यायोऽनुसरणीयः ।

पक्षमात्रेणाऽनुमितित्वं न तदवच्छेद्यत्वानवगाह्यनुमितित्वं पर्वतत्वावच्छेदेन तत्सामानाधिकरण्येन च परामर्शद्वयात्पर्वतत्वावच्छेद्यत्वावगाहितदनवगाह्यनुमित्योर्युगपदुत्पादप्रसंगात् सामग्रीसत्त्वात्, किन्तु यद्रूपेण साध्यतावच्छेदकसंबन्धत्वं तादृशधर्ममात्रावच्छिन्नसंसर्गताकपक्षधर्मिकसाध्यानुमितित्वम्, निरुक्तस्थले च संयोगनिष्ठद्विविधसंसर्गताकसमूहालम्बनानुमितित्वीकारात् । तथाच संयोगत्वमात्रावच्छिन्नसंसर्गताकपर्वतधर्मिकवह्निविधेयकानुमितिं प्रति संयोगत्वविशिष्टसंसर्गताकपर्वतधर्मिकवह्निमत्तानिश्चयत्वेनैकरूपेण सिद्धिद्वयं प्रतिबन्धकम्, पर्वतत्वावच्छेदेनानुमितौ तु संयोगनिष्ठसंसर्गता न संयोगत्वमात्रावच्छिन्ना किन्तु पर्वतत्वावच्छेद्यवह्निसंयोगत्वावच्छिन्नैवेति पर्वतत्वसामानाधिकरण्येन सिद्धिसत्त्वेऽपि तदुत्पत्तिः । न चैवं संयोगमात्रेण वह्निनिश्चयेऽपि पर्वतीयसंयोगेन वह्न्यनुमितिः स्यात्, न स्याच्च पर्वतीयत्वविशिष्टसंयोगेन वह्निनिश्चयेऽपि संयोगमात्रेण पर्वते वह्न्यनुमितिरिति वाच्यम् । इष्टत्वात् । सामान्यघटितविशेषप्रकारेणैव तादृशसंबन्धेनापि सिद्धेः सामान्यानुमितिविरोधित्वात् । एवमनयैव दिशाऽन्यत्रापि प्रतिबन्धकत्वमूह्यमिति संक्षेपः ।

न च पर्वतधर्मिकवन्ह्यनुमितिमात्रं प्रत्येव पर्वतत्वावच्छेद्यत्वावगाहिनिश्चयस्य विरोधित्वात् प्रतिबध्यकोटौ पर्वतत्वावच्छेद्यत्वप्रवेशो व्यर्थ इति वाच्यम् । पर्वतत्वावच्छेदेन सिद्ध्युत्तरं तदवच्छेदेनाऽनुमित्सया पर्वतत्वावच्छेदेनेव तत्सामानाधिकरण्येनाप्यनुमित्यापत्तेः ।

इत्यवेति । पक्षतावच्छेदकावच्छेदेन सिद्ध्युत्तरं तत्सामानाधिकरण्यमात्रे-

एकरूपेण सिद्धिद्वयं प्रतिबन्धकमिति । अथात्र पर्वतत्वावच्छेदेन सिद्धिसत्त्वे पर्वतत्वावच्छेदेनाऽप्रामाण्यज्ञानदशायां सामानाधिकरण्यमात्रेणानुमित्युदयात्पर्वतत्वावच्छेदेनाऽप्रामाण्यज्ञानसत्त्वे सामानाधिकरण्येनानुमित्युदयात्सामानाधिकरण्येनाऽप्रामाण्यज्ञानस्य च द्वयोः सामानाधिकरण्येनानुमितिं प्रति उत्तेजकतया अवच्छेदकावच्छेदेन सिद्धिसत्त्वे सामानाधिकरण्येनाऽप्रामाण्यज्ञानदशायां सामानाधिकरण्यमात्रेणाऽनुमित्यापत्तिः, तादृशसिद्धेरप्रतिबन्धकत्वादिति चेन्न ।

अवच्छेदावच्छेदेन वह्निमत्तानिश्चयधर्मिकावच्छेदावच्छेदेनाऽप्रामाण्यज्ञानस्य सामानाधिकरण्येन वह्निमत्तानिश्चयधर्मिकसामानाधिकरण्येनाऽप्रामाण्यज्ञानस्य च द्वयोरेवोत्तेजकत्वात्, अवच्छेदावच्छेदेन वह्निमत्तानिश्चयसत्त्वे सामानाधिकरण्येनाऽप्रामाण्यग्रहदशायामापत्त्यसम्भवात् ।

अथवा अप्रामाण्यज्ञानस्य तत्तद्व्यक्तित्वेनोत्तेजकत्वे तादृशाप्रामाण्यज्ञानव्यक्तेरुत्तेजकविषयाऽप्रवेशेनाऽपत्त्यभावादिति संक्षेपः ।

दीधितौ इत्थं चेति । पक्षतावच्छेदकावच्छिन्नत्वतत्सामानाधिकरण्यमात्रावगाह्यनु-

नानुमित्सायामपि तदवच्छेदेनानुमित्यनुत्पत्तेस्तादृशानुमितौ पक्षतावच्छेदकावच्छेदेनानुमित्सैवोत्तेजिका वाच्या, एवं पक्षतावच्छेदकसामानाधिकरण्यमात्रेण सिद्ध्युत्तरं तदवच्छेदेनाऽनुमित्सायामपि तत्सामानाधिकरण्येनानुमित्यनुत्पत्तेस्तादृशानुमितौ पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमित्सैवोत्तेजिका वाच्येति लिङ्गविशेषनियन्त्रितमिवानुमितिविशेषेणापि नियन्त्रितं पक्षत्वम् ।

यद्वा तत्पक्षकतत्साध्यकानुमितिं प्रत्येव सामान्यतः पक्षता हेतुः, पक्षमित्योः सिद्धेः पृथक् पृथक् प्रतिबन्धकत्वे च । लिङ्गविशेषनियन्त्रितमिवेति । यथा तत्तल्लिङ्गकानुमितौ सिद्धेः प्रतिबन्धकतायां तत्तल्लिङ्गकानुमितीच्छैवोत्तेजिका न त्वन्यलिङ्गकानुमितीच्छापि, तथा साध्यतावच्छेदकपर्याप्तविधेयतावच्छेदकताकपक्षोद्देश्यकानुमितौ सिद्धेः प्रतिबन्धकतायां तादृशपक्षोद्देश्यकत्वावच्छिन्नविषयताकेच्छात्वेन, पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यतावच्छेदकपर्याप्तविधेयतावच्छेदकताकपक्षोद्देश्यकानुमितौ तादृशानुमित्सात्वेनोत्तेजकत्वमित्यर्थः ।

यद्वेति । अत्रायमाशयः—यद्रूपावच्छिन्नसंसर्गताकवह्नित्वावच्छिन्नविधेयताकपर्वतत्वावच्छिन्नविशेष्यताकानुमितौ सिषाधयिषाविरहविशिष्ट तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकसंसर्गताकवह्नित्वावच्छिन्नप्रकारताकपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयाभावः कारणम् । प्रतिबध्यतावच्छेदककोटौ संसर्गतावच्छेदकतायां न्यूनेतरवारकपर्याप्ती निवेश्येते, प्रतिबन्धकतावच्छेदककोटौ च संसर्गतावच्छेदकतायाः केवलन्यूनवारकपर्याप्तिरेव निवेश्यते न तु इतरवारकेति, नातः संयोगेन वह्निमानिति निश्चयसत्त्वे पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगेन वह्निमानित्यनुमितेरनुपपत्तिरिति ध्येयम् ।

यत्तु सामानाधिकरण्येन सिद्धिदशायामवच्छेदावच्छेदेन वह्निव्याप्यवत्तापरामर्शदशाया अवच्छेदावच्छेदेनानुमित्यनुत्पादप्रसङ्गः सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाः प्रागसत्त्वात्, अतोऽवच्छेदावच्छेदेनानुमितौ अनुमित्साविरहविशिष्टावच्छेदावच्छेदेन सिद्ध्यभावस्य पक्षत्वात्वोपगम आवश्यकः तथाच नानुपपत्तिः, भवन्मते तु अवच्छेदावच्छेदेन सामानाधिकरण्येन चेच्छायास्तत्तदनुमितिकारणतावच्छेदककोटौ उत्तेजकत्वेन गौरवानस्या अपि तत्तद्व्यक्तित्वेनैवोत्तेजकत्वम्, यद्यदिच्छासत्त्वे सिद्धिसत्त्वेऽवच्छेदकावच्छेदेन वन्ह्यनुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभावत्वेनावच्छेदकावच्छेदेनानुमितौ हेतुत्वं कल्पनीयम्, एवं सामानाधिकरण्येनाऽनुमितौ तादृशकूटविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभावत्वेन तादृशकूटविशिष्टसामानाधिकरण्येन तदभावत्वेन च हेतुत्वं कल्पनीयम्, तथाच त्रितयरूपेण प्रतिबन्धकत्वकारणत्वयोः कल्पनापेक्षयाऽस्माकमेकरूपेण तत्कल्पनाप्रयुक्तलाघवमेवास्तीति, तथाहि—सामानाधिकरण्यने सिद्धिकालीनावच्छेदावच्छेदेन परामर्शोत्तरमवच्छेदकावच्छेदेनानुमितिर्भवत्येव, सामान्यतः सिषाधयिषाविरहविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभावसत्त्वात् । न च यत्र सामानाधिकरण्येन सिद्ध्यात्मकावच्छेदकावच्छेदेन वह्निव्याप्यधूमवत्तापरामर्शः ततो घटानुमितिर्जायतामितीच्छा ततोऽवच्छेदकावच्छेदेनानुमितिः स्यात्, तत्रापि

तावच्छेदकावच्छेदेनानुमितौ तु तदवच्छिन्नसिद्धिकालीना तत्सामानाधिकरण्यमात्रेणानुमित्सा पृथक् प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितावपि सामानाधिकरण्येन सिद्धिकालीना तदवच्छेदेनानुमित्सा पृथक् प्रतिबन्धिका वाच्या । यदि चाऽसत्यामपि समानाकारकसिद्धौ पक्षतावच्छेदकावच्छेद्यत्वानवगाह्यनुमित्सायां सत्यां तत्सामानाधिकरण्यावगाह्यनुमितेर्नोत्पत्तिस्तदा सिद्धिकालीनत्वं प्रतिबन्धकत्वे न प्रवेश्यमिति भावः ।

---

सिषाधयिषाविरहविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभावसत्त्वादिति वाच्यम् । तत्रावच्छेदकावच्छेदेनानुमितिं प्रति तादृशसिद्धिकालीनानुमित्साया इव पर्वतो वह्निमानितिकालीनघटानुमित्साया अपि पृथक् २ प्रतिबन्धकत्वकल्पनात्, तथाचोक्तस्थले तादृशघटानुमित्साया एव प्रतिबन्धकतया न पर्वतधर्मिकवह्न्यनुमित्यापत्तिः, तथाहि–यद्यदिच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिरप्रामाणिकी तत्तदिच्छाविरहकूटत्वावच्छिन्नाभावत्वेनानुगतरूपेण अतिबन्धकीभूतनानेच्छानां प्रतिबन्धकत्वं कल्पनीयमतो न कोऽपि दोषः । एतादृशप्रतिबध्यप्रतिबन्धकभावो अवतामप्युक्तदोषभिया कल्पनीय इति संक्षेपः । नहि अवच्छेदावच्छेदेन सिद्ध्यभावस्य पक्षतात्वोपगमे "सामान्यतः पक्षता हेतु"रिति ग्रन्थासङ्गतिः सामान्यत्वस्यानुमित्सांशे प्रवेशादिति ।

तन्न । अवच्छेदकावच्छेद्यत्वसामानाधिकरण्यादेरनुमित्यंशे प्रवेश्यानुमितिविशेषानियन्त्रितकार्यकारणभावे यद्वाक्यानुसरणात्, अनुमित्यंशेऽवच्छेदकावच्छेद्यत्वमप्रवेश्य कार्यकारणभावे यद्वाक्यस्य तात्पर्योपगमात् ।

अस्तु वा अनुमितिविशेषनियन्त्रितकार्यकारणभावे यद्वाक्यस्य तात्पर्यम्, तथापि महानसे सिद्ध्यनात्मकपर्वते सिद्ध्यात्मकपरामर्शदशायामनुमितिर्जायतामितीच्छादशायां पर्वते वह्न्यनुमित्यापत्तेः, सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतासत्त्वात् । न च यद्यदिच्छासत्त्वे अवच्छेदावच्छेदेन सिद्धिसत्त्वे यत्पक्षकयत्साध्यकानुमितिः प्रामाणिकी अवच्छेदकावच्छेदेन तत्पक्षकतत्साध्यकानुमितौ तदिच्छाविरहविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभावस्य पक्षतात्वोपगमात् उक्तस्थले न पर्वते वह्न्यनुमित्यापत्तिः, तादृशेच्छासत्त्वे पर्वते वह्न्यनुमितेरप्रामाणिकतया तादृशेच्छाया उत्तेजकानन्तर्गतत्वादिति वाच्यम् । तथासति अवच्छेदावच्छेदेन सिद्धिदशायां सामानाधिकरण्येनेच्छादशायामवच्छेदकावच्छेदेनानुमितेरप्रामाणिकतया अवच्छेदावच्छेदेनानुमितौ अवच्छेदावच्छेदेन सिद्धिकालीनसामानाधिकरण्येनेच्छाव्यक्तेः पृथग्विरोधित्वकल्पनाऽसङ्गतिप्रसङ्गात्, न च पर्वते वह्न्यनुमितिर्जायतामितीच्छाया अनुगतरूपेणोत्तेजकत्वे अवच्छेदावच्छेदेन सिद्धिदशायां सामानाधिकरण्येन पर्वते वह्न्यनुमितिर्जायतामितीच्छासत्त्वेऽवच्छेदकावच्छेदेन वह्न्यनुमित्यापत्त्या तत्कल्पनमिति वाच्यम् । तादृशसिद्धिसत्त्वे तादृशेच्छाकाले तादृशवह्न्यनुमितेरप्रामाणिकतया तादृशेच्छाया अनुगतरूपेणाप्युत्तेजकत्वासम्भवादिति चेन्न ।

अवच्छेदावच्छेदानुमितौ सामान्यतोऽनुमित्साविरहविशिष्टावच्छेदकावच्छेदेन सिद्ध्यभावः पक्षता, यद्यदिच्छासत्त्वे सिद्धिसत्त्वे यत्पक्षकयत्साध्यकानुमितेरनुत्पादः तत्पक्षकतत्साध्यकाप-

साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी, एवं च पक्षविशेष्यकसिद्ध्यनन्तरमपि साध्यविशेष्यिकानुमितिर्जायते, तुल्यन्यायात्समानाकारायाः सिद्धेः प्रतिबन्धकत्वे

---

साध्यविशेष्यकेति । विनाऽनुमित्सामित्यादिः । तां प्रतीति-पक्षविशेष्यकानुमितिं प्रतीत्यर्थः । समानाकारेति । तथाच संयोगसंबन्धावच्छिन्नाधेयतासंबन्धेन पर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति तादृशसंबन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताकनिश्चयत्वेन विरोधित्वम्, विधेयत्वं तु न प्रकारतानियतं किन्तु पर्वते वह्निः, पर्वतो वह्निमानित्याद्यनुमितौ पर्वते वह्निमनुमिनोमि नतु वह्नौ पर्वतमित्यनुभवसाक्षिको विषयताविशेषः क्वचिद्विशेष्यवृत्तिरपीति नासिद्धिः, अत एव गुणानां गुणत्वमित्यत्र विशेष्यीभूतस्यापि गुणत्वस्य विधेयत्वमुक्तमुपाध्यायैरिति ध्येयम् । ननु पक्षविशेष्यकसिद्ध्युत्तरं साध्यविशेष्यकानुमितिर्न क्वाप्यनुभवसिद्धेत्यत आह तादृशेति । पक्षनिष्ठप्रकारतानिरूपितसा-

---

ध्यच्छेदकावच्छेदेन सिद्धिकालीनतदिच्छाद्यक्तेः प्रतिबन्धकत्वोपगमान्निरुक्तापत्तिवारणादिति विभावनीयम् ।

यदि पर्वते वह्निरित्याकारकसाध्यनिश्चयानन्तरं पर्वतो वह्निमानित्याकारानुमितिर्जायते तदा साध्यविशेष्यकानुमितौ साध्यविशेष्यकसिद्धिरेव प्रतिबन्धिका, सामान्यतः साध्यपक्षवैशिष्ट्यावगाह्यनुमितौ तादृशसिद्धित्वेन नैकं प्रतिबन्धकत्वम्, अपि तु विशिष्य प्रतिबन्धकताद्वयम्, अगत्या गौरवस्याऽदोषत्वादित्याशयवानाह दीधितौ साध्यविशेष्यकेति । द्वयोः समानविषयकत्वे विशेषणविशेष्यभाववैपरीत्यमकिंचित्करमित्यभिप्रेत्याऽनिर्भरसूचनाय प्रामाणिकत्वे इत्युक्तम् । दीधितौ पक्षविशेष्यिकैवेति । तथाच प्रकारताविशेष्यते निवेश्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति भावः । एवञ्च-साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमित्युत्पत्तेः प्रामाणिकत्वे च । नन्वत्र प्रतिबध्यतावच्छेदककोटौ विधेयतानिवेशो व्यर्थः, विशेष्यतानिवेशस्यैव सम्यक्त्वादिति चेन्न । संयोगसम्बन्धावच्छिन्नाधेयत्वसबन्धेन पर्वतविशिष्टवह्निपक्षकशुक्लत्वसाध्यकस्थले शुक्लत्वव्याप्यतद्धर्मिमान् पर्वतविशिष्टो वह्निः शुक्ल इत्यनुमितिर्न स्यात् परामर्शांशेऽनुमित्यंशे च संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन वह्नौ पर्वतस्य भासमानतयां तादृशसम्बन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताशाल्यनुमितित्वस्य तादृशानुमितावपि सत्त्वेन तस्यां तादृशरूपेण तादृशपरामर्शस्यैव प्रतिबन्धकत्वापातात् अतो वह्निविधेयकत्वानुधावनम्, तथाच तादृशानुमितौ वह्न्यंशे विधेयत्वविरहान्नानुमित्यनुपपत्तिरिति दिक् । न क्वाप्यनुभवसिद्धेति । व्यतिरेकिसाध्यकस्थले विशेषणज्ञानादिविरहेण साध्यविशेषणकानुमितेरनुपपत्त्या साध्यविशेष्यकानुमितिरुपेयते, अन्वयपरामर्शात्तु पर्वतो वह्निमानित्याद्याकारिकाया एवानुमितेरनुभवात्, एवं च पक्षविशेष्यकसिद्धिदशायामपि

पर्यवसानात् । तादृशानुमितिं प्रति सिद्धिमात्रं विरोधि, साध्यप्रसिद्धिरेव वा ।

अत एव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयते इति ।

---

ध्यविशेष्यकानुमितिं प्रतीत्यर्थः । सिद्धिमात्रमिति । साध्यविशेष्यिका पक्षविशेष्यिका च सिद्धिर्विरोधिनीत्यर्थः । पर्वतो वह्निमानितिनिश्चयोत्तरं वह्नौ पर्वतव्याप्यवत्तापरामर्शाद्वह्निः पर्वते इत्यनुमितौ च वह्नेर्न विधेयत्वं किन्तु पर्वतस्यैव तथात्वम्, वह्निव्याप्यवत्ताज्ञानजन्यत्वमनुमितेस्तदंशे एव विधेयताख्यविषयतास्वीकारादिति भावः । नन्वेवं प्रसिद्धसाध्यकपरामर्शात्सर्वत्रैव पक्षसाध्योभयविशेष्यकानुमितिः स्यात्पक्षताद्वयसत्त्वेनोभयधर्मावच्छिन्नसामग्रीसत्त्वादित्यस्वरसात्, लाघवाच्च साध्यज्ञानत्वेनैव साध्यविशेष्यकानुमितिं प्रति विरोधित्वमाह साध्यप्रसिद्धिरेवेति । एवकारेणानुमित्साया उत्तेजकत्वस्यापि प्रतिक्षेपः सूचितः ।

साध्यज्ञानमात्रस्य विरोधितायामनुभवमपि प्रमाणमाह अत एवेति । साध्यविशेष्यकानुमितौ तज्ज्ञानमात्रस्य विरोधित्वादेवेत्यर्थः । इत्थं च धूमव्यापकवह्न्यभाववान् ह्रद इत्यादिव्यतिरेकपरामर्शजन्याया ह्रदे धूमाभाव इत्याद्यभावसाध्यकानुमितेरेव साध्यविशेष्यकत्वात्तत्रैव साध्यज्ञानं विरोधीति मन्तव्यम् । वह्न्याद्यभावसाध्यकस्थले तु विशेष्यात्रिधया वह्न्यादिविधेयकानुमितेरलीकतया तां प्रति साध्यज्ञानत्वेन विरोधित्वासम्भवादिति ध्येयम् । विशेष्यत्वाख्यविधेयतावच्छेदकत्वसम्बन्धेनाऽनुमितिसामा-

---

साध्यविशेष्यकानुमितेरप्रामाणिकत्वादिति भावः । पक्षताद्वयसत्त्वेनेति । उभयविषयसिद्ध्यभावरूपपक्षतायाः सत्त्वेनेत्यर्थः । लाघवाच्चेति । निश्चयत्वस्य सिषाधयिषाविरहस्य चाऽनिवेशेनेति शेषः । साध्यज्ञानत्वेनैव—साध्यतावच्छेदकप्रकारकज्ञानत्वेनैव, तेन इतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्यादिपरामर्शाद् भेदत्वादिना साध्यज्ञानसत्त्वेऽपि पृथिव्यामितरभेद इत्याकारकानुमितेर्नानुपपत्तिः, नहि तत्र पृथिवी इतरभिन्ना इत्यनुमितेः संभवः, विशेषणतावच्छेदकीभूतेतरभेदत्वप्रकारकज्ञानविरहादिति । तज्ज्ञानमात्रस्य—साध्यज्ञानमात्रस्य । विशेष्यत्वाख्यविधेयतावच्छेदकसम्बन्धेनेति । नन्वत्र सामान्यतो विशेष्यतासम्बन्धेनानुमितिं प्रति प्रतिबन्धकत्वकल्पनेनैव निर्वाहे विधेयतावच्छेदकत्वपर्यन्तानुसरणं व्यर्थमिति चेन्न ।

ह्रदवृत्तिधूमाभावपक्षकतादात्म्येन प्रमेयसाध्यकस्थले ह्रदवृत्तिधूमाभावः प्रमेयवानित्यनुमितिर्न स्याद् विशेष्यतासंबन्धेन तादृशानुमितेर्ह्रदवृत्तिधूमाभावे सत्त्वेन तत्र प्रकारतासंबन्धेन तद्व्यक्तिव्यापकप्रमेयसमानाधिकरणतद्व्यक्तिमान् ह्रदवृत्तिधूमाभाव इति परामर्शस्य प्रकारतासम्बन्धेन प्रमेयमात्रे सत्त्वात्तस्यैव प्रतिबन्धकत्वापत्तिः, अतो विधेयतावच्छेदकत्वनिवेशः, तथाच विशेष्यत्वाख्यविधेयतावच्छेदकत्वसम्बन्धेन तादृशानुमितेः कुत्राप्यस-

त्वेन तां प्रति प्रतिबन्धकत्वाभावादिति । न च तथापि विशेष्यतावच्छेदकत्वसंबन्धेनानुमितिं प्रति प्रतिबन्धकत्वकल्पनेनैव सामंजस्ये विधेयत्वांशो विफल इति वाच्यम् । धूमाभावपक्षक-ह्रदवृत्तित्वसाध्यकस्थले धूमाभावो ह्रदवृत्तिरित्यनुमित्यनुपपत्तेः, विशेष्यतावच्छेदकतासम्बन्धेन तादृशानुमितेर्धूमाभावत्वे सत्त्वेन तत्र प्रकारतासंबन्धेन ह्रदवृत्तित्वव्याप्यतद्व्याक्तिमान् धूमा-भाव इति ज्ञानात्मकपरामर्शसत्त्वेन प्रतिबन्धकत्वादतो विधेयत्वनिवेशः ।

ननु विशेष्यत्वाख्यविधेयत्वमात्रनिवेशेनैव निर्दोषत्वसंभवेऽवच्छेदकतापर्यन्तं किमर्थ-मिति चेन्न ।

धूमव्यापकवह्न्यभाववान् ह्रद इति व्यतिरेकपरामर्शसत्त्वे तत्रैव धूमाभाव इति ज्ञान-सत्त्वे ह्रदे धूमाभाव इत्यनुमित्यापत्तेः, विशेष्यत्वाख्यविधेयतासम्बन्धेन तादृशानुमितेर्धूमा-भावे सत्त्वेन तत्र प्रकारतासंबन्धेन ज्ञानविरहादतोऽवच्छेदकत्वनिवेश इति ध्येयम् । ननु ह्रदे धूमाभाव इत्यनुमितौ केवलमभाव इति ज्ञानमपि प्रतिबन्धकं स्यादिति चेन्न ।

विशेष्यत्वाख्यविधेयत्वाभिन्नविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावच्छे-दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन अनुमितिं प्रति स्वीयाऽ-भावत्वावच्छिन्नविशेष्यतानिरूपितप्रतियोगित्वसंबन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्र-तियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानमात्रस्य प्रतिबन्धकत्वकल्पनात् । न च पर्वते वह्निरित्यनुमितिः कथं न स्यादिति वाच्यम् । साध्यविशेष्यकानुमितौ व्यतिरेकपराम-र्शस्यैव हेतुत्वकल्पनेन तदापत्त्यसंभवादिति । केचित्तु ननु अभाव इति ज्ञानस्य प्रकारतासंब-न्धेनाऽभावत्वे वर्त्तमानतया तज्ज्ञानदशायां ह्रदे धूमाभाव इति विशेष्यत्वाख्यविधेयतावच्छे-दकत्वसबन्धेनाभावत्वेऽनुमित्यनुपपत्तिः, एवं धूमव्यापकवह्न्यभाववान् पर्वत इति व्यतिरेक-परामर्शात्पर्वते धूमाभाव इत्यमित्यनुपपत्तिश्च विशेष्यत्वाख्याविधेयतावच्छेदकत्वसंबन्धेन तादृ-शानुमितेर्धूमादौ सत्त्वेन तत्र परामर्शघटकधूमाधिकरणे प्रकारतया प्रकारतासंबन्धेन पराम-र्शात्मकज्ञानस्य तत्र सत्त्वेन प्रतिबन्धकत्वात् । न च—स्वीयविशेष्यत्वाख्याविधेयतावच्छेदकत त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनानुमितिसामान्यं प्रत्येव स्वीय-प्रकारतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानस्य प्रतिबन्धक-त्वम्, प्रथमं स्वपदमनुमितिपरम्, द्वितीयं च प्रतिबन्धकत्वेनाभिमतज्ञानपरम्, तथाच ह्रदे धू-माभाव इत्यनुमितिस्तादृशसंबन्धेन धूमप्रतियोगिकत्वअभावत्वगतद्वित्वे वर्तते तत्राऽभाव इति ज्ञानस्याऽप्रतिबन्धकत्वान्न दोषः, अभाव इति ज्ञानस्याऽभावत्वगतैकत्वे वर्त्तमानत्वात्, एवं द्वितीयस्थलेऽपि नानुपपत्तिः, स्वीयविशेष्यत्वाख्याविधेयतेत्यादिसंबन्धेन तादृशानुमितेर्धू-मत्वाऽभावत्वगतसमुदायत्वे सत्त्वेन तत्रोक्तसंबन्धेन परामर्शात्मकज्ञानाभावात्, तच्च धूमव्या-पकत्ववह्नित्वअभावत्वगतसमुदायत्वे एवेति न तस्य प्रतिबन्धकत्वमिति । नचैवंसति यत्र धूमव्यापकवह्न्यभाववान् ह्रदो धूमाभावश्चेति समूहालम्बनव्यतिरेकिपरामर्शः तत्र ह्रदे धूमा-भाव इत्यनुमित्यापत्तिः, तत्सम्बन्धेन तादृशानुमितेः धूमधूमत्वअभावत्वगतत्रित्व एव सत्त्वेन तत्र तादृशपरामर्शात्मकज्ञानविरहादिति वाच्यम् । स्वीयप्रकारताविशिष्टज्ञानमात्रस्यैव प्रतिबन्धकत्वात्, वै० स्वनिरूपितविशेष्यतानिरूपितप्रकारतात्वावच्छिन्नप्रतियोगिता-कपर्याप्त्यनुयोगितावच्छेदकत्वसबन्धेन, तथाच नोक्तापत्तिः । स्वीयनिरवच्छिन्न-

धूमाभावत्वनिष्ठप्रकारताविशिष्टतादृशपरामर्शात्मकज्ञानस्योक्तसम्बन्धेन धूमधूमत्वअभावत्वगतत्रित्वे सत्त्वात्-इति वाच्यम् । तथासति धूमाभाव इति ज्ञानदशायां ह्रदे धूमाभावः घटाभावश्चेत्यनुमित्यापत्तेः, तथाविधसंबन्धेन धूमप्रतियोगिकत्वअभावत्वगतसमुदायत्वे तादृशानुमितेर्वर्त्तमानतया तत्र तादृशसम्बन्धेन तज्ज्ञानासंभवेन प्रतिबन्धकत्वासंभवात्, यद्यपि स्वीययत्किंचिद्विशेष्यत्वाख्यावधेयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताऽपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनानुमितिं प्रति ज्ञानमात्रस्य प्रतिबन्धकत्वोक्तौ तद्वारणं संभवति, तथापि धूमः अभावश्चेति ज्ञानदशायां ह्रदे धूमाभाव इत्यनुमित्यापत्तिश्च, यत्किंचित्प्रकारतानिवेशे तद्वारणेऽपि असंभवापत्तेः, धूमाभाव इति ज्ञानस्य यत्किंचित्प्रकारतावच्छेदकतासंबन्धेन एकत्वे वर्त्तमानतया प्रतिबन्धकत्वासम्भवात् । न च तादृशनिरुक्तसंबन्धेनानुमितिसामान्यं प्रति स्वविशिष्टयत्किंचित्सम्बन्धितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानमात्रस्य प्रतिबन्धकत्वं वाच्यम्, एवं च धूमवान् अभावश्चेति ज्ञाने विषयतासम्बन्धेन धूमत्वावच्छिन्ननिरूपकताकाभावत्वावच्छिन्ननिरूपकताकसम्बन्धिताद्वयोपगमात् । किंचित्सम्बन्धितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तादृशज्ञानस्य प्रत्येकमेकत्वादौ वर्त्तमानतया प्रतिबन्धकत्वासम्भवेन धूमवान् अभावश्चेति ज्ञानदशायां न ह्रदे धूमाभाव इत्यनुमित्यनुपपत्तिः, धूमाभाव इति ज्ञाने च धूमत्वाभावत्वोभयधर्मावच्छिन्ननिरूपकताकैकसंम्बन्धितास्वीकारात् । तादृशसम्बन्धितानिरूपितनिरूपकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन धूमत्वाऽभावत्वगतद्वित्वे धूमाभाव इति ज्ञानस्य, धूमाभावः घटश्चेति ज्ञानस्य तु वर्त्तमानतया प्रतिबन्धकत्वसंभवेनैतज्ज्ञानदशायां न तादृशानुमित्यापत्तिः । अभावत्वेन घटावगाहि—ह्रदे धूमाभाव इत्यनुमितेः घटत्वादिगतबहुत्वादौ सत्त्वेन अभावत्वेनाऽभावत्वावगाहि—धूमाभाव इति ज्ञाने सत्त्वात् प्रतिबन्धकत्वाऽसंभवेन तज्ज्ञानदशायामभावत्वेन घटावगाहि—ह्रदे धूमाभाव इत्यनुमित्यापत्तिरिति तु नाशंकनीयम्, तादृशविषयतानिरूपितनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनानुमितिसामान्यं प्रति तादृशनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वविवक्षणात्, धूमत्वअभावत्वगतद्वित्वे अनुमितौ धूमाभाव इति ज्ञानस्य प्रतिबन्धकत्वसम्भवात् तज्ज्ञानदशायां तादृशानुमित्यापत्तिविरहादिति वाच्यम् । तथासत्यभावीयधूमवानितिज्ञानस्य प्रतिबन्धकत्वसम्भवेन तज्ज्ञानदशायां ह्रदे धूमाभाव इत्यनुमित्यनुपपत्तेः, अभावत्वत्वेन घटावगाहि भ्रमात्मकज्ञानस्य प्रतिबन्धकत्वानुपपत्तेश्च, तत्राभावत्वविशिष्टघटत्वावच्छिन्ननिरूपकताकसम्बन्धिताविरहादिति चेन्न ।

स्वीय(१)विशेष्यत्वाख्यविधेयत्वावच्छिन्नविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्न

---

(१) केचित्तु धूमव्यापकवह्न्यभाववान्ह्रद इति परामर्शसत्त्वे धूमत्वेन घटावगाहि-धूमाभाव इति सत्त्वे च ह्रदे धूमाभाव इत्यनुमित्यापत्तिः, तादृशसम्बन्धेन तदनुमितेरुक्तत्रित्वे सत्त्वेन तत्र भ्रमात्मकधूमाभाव इति ज्ञानाभावात् तस्य च तादृशसम्बन्धेन धूमघटत्वअभावत्वगतत्रित्वे सत्त्वेन प्रतिबन्धकत्वविरहात्,

अत्र च व्याप्तिस्मरणादिना पूर्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैवाऽनुमितिः, तथैव कारणीभूतस्य विशिष्टाभावस्य संपत्तिरित्युपाध्यायाः ।

---

त्यं प्रत्येव वा प्रकारतासंसर्गेण ज्ञानमात्रस्य प्रतिबन्धकत्वं वाच्यम् । न चैवमपि गोत्वाभावो गोत्वव्यापकतासामान्याशून्य इत्याकारकपरामर्शाद् गोत्वाभावे गोत्वं नेत्येवं पक्षनिष्ठप्रकारतानिरूपितसाध्यविधेयकानुमितिर्न स्यात्परामर्शस्यैव साध्यज्ञानत्वेन विरोधित्वादिति वाच्यम् । इष्टत्वात् । गोत्वाभावो न गोत्ववानित्येवं पक्षनिष्ठविशेष्यतानिरूपितसाध्यविधेयकानुमितेरेव तत्रोत्पादात् । साध्यतावच्छेदकधर्मानवच्छिन्नपक्षनिष्ठप्रकारतानिरूपितसाध्यविधेयकानुमितित्वेनैव वा प्रतिबध्यत्वं वाच्यमित्यपि कश्चित् ।

वस्तुतस्तु अप्रसिद्धसाध्यकपरामर्शस्य विशेष्यविधया साध्यविधेयकानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वम् , अन्यथा गोत्वाभावव्याप्यवत्ताप्रकारकपरामर्शजन्यायां विशेष्यविधया गोत्वाभावविधेयकानुमितौ व्यभिचारापत्तिः । तथाचोक्तस्थले गोत्वाभावो न गोत्ववानित्यपि नानुमितिः, विशेषणविधया गोत्वाभावविधेयकानुमितौ गोत्वव्यापकाभाववत्तापराम-

---

प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानमात्रस्य प्रतिबन्धकत्वविवक्षणात् , धूमत्वगतैकत्वे तादृशसम्बन्धेन ह्रदे धूमाभाव इत्यनुमितौ धूमाभाव इति ज्ञानस्यैव प्रतिबन्धकत्वम् , अभावीयधूमवानितिज्ञानदशायामनुत्पत्तिविरहात् । अथवा वाकारोऽनास्थायामिति दिक् ।

**तत्रोत्पादादिति** । नन्वत्र गोत्वाभावो न गोत्ववानित्यनुमितेरपि कथं सम्भवः, तस्या अपि साध्यविशेष्यकत्वादिति चेन्न ।

पक्षतावच्छेदकावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपिता या साध्यतावच्छेदकावच्छिन्नविधेयतात्वावच्छिन्ननिरूपकता तद्विधेयताशाल्यनुमितिं प्रति साध्यज्ञानत्वेन प्रतिबन्धकत्वकल्पनात् , उक्तानुमितौ च पक्षतावच्छेदकावच्छिन्नप्रकारतया सार्धं तादृशविधेयतात्वेन निरूप्यनिरूपकभावविरहात् ।

**अप्रसिद्धसाध्यकपरामर्शस्य**—व्यतिरेकिपरामर्शस्य । **अन्यथा**—तादृशकार्यकारणभावानङ्गीकारे । **व्यभिचारापत्तिरिति** । परस्परजन्ये व्यभिचारः स्यादिति भावः ।

---

एवं धूमव्यापकवह्न्यभाववान् ह्रद इति व्यतिरेकपरामर्शसत्त्वे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभाव इति निश्चयसत्त्वे च ह्रदे धूमाभाव इत्यनुमितिर्न स्यात् , तादृशसम्बन्धेनोक्तानुमितेः प्रित्वे [illegible] तत्रोक्तसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभाव इति ज्ञानत्वेन च प्रतिरोधसम्भवात् , अतः स्वीयानिरवच्छिन्नप्रकारतानिरूपिता या विशेष्यत्वाख्यविधेयत्वाभिन्नविशेष्यता तदभिन्नविशेष्यतानिरूपितयत्सम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितयत्सम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन ज्ञानमात्रस्य विरोधित्वं वाच्यम् , तथाचोक्तदोषद्वयानवकाश इति प्राहुः ।

अथात्र साध्यविशेष्यकानुमितौ व्यतिरेकपरामर्शस्य हेतुत्वकल्पनेऽपि नानाहेतुकव्यतिरेकपरामर्शजन्यानुमितिषु प्रत्येकं व्यभिचारवारणाय तद्धेतुकपरामर्शाव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटावश्यं निवेशनीयतया तेनैवोक्तव्यभिचारवारणसम्भव इति चेन्न ।

तद्धेतुकपरामर्शाव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ प्रवेशे पक्षसाध्याविषयितायाः कार्यतावच्छेदककोटौ निवेशे प्रयोजनाविरहः, अतो धूमान्यलिङ्गकपरामर्शविशिष्टान्यपर्वतपक्षकवह्निसाध्यकानुमितौ वह्निव्याप्यधूमवत्तानिश्चयत्वेन कारणत्वं वाच्यम्, वै० स्वाव्यवहितोत्तरत्वसम्बन्धेन, एवं च पक्षसाध्याविषयितायाः कारणतावच्छेदकेऽप्रवेशे घटव्याप्यधूमवानितिपरामर्शजन्यघटाऽनुमितौ व्यभिचारवारणाय साध्यविषयितायाः कार्यतावच्छेदककोटौ निवेश आवश्यकः, तथा च प्रकृतहेतुकव्यतिरेकपरामर्शजन्यप्रकृतसाध्यविशेष्यकानुमितौ प्रकृतसाध्यान्वयव्याप्यवत्तापरामर्शविरहाद्व्यभिचारोऽतस्तद्वारणाय धूमान्यलिङ्गकपरामर्शविशिष्टान्यपर्वतधर्मिकवह्निविधेयकानुमितौ वह्न्यन्वयव्याप्यवत्तापरामर्शः कारणम्, एवं धूमान्यलिङ्गकपरामर्शविशिष्टान्यपर्वतप्रकारकवह्निविधेयकानुमितौ वह्निव्यतिरेकव्याप्यधूमवत्तानिश्चयः कारणम्, एवं च न कोऽपि दोष इति ध्येयम् ।

अपरे तु अथ लिङ्गान्तरधर्मिकव्यतिरेकपरामर्शजन्यायां गोत्वव्यापकीभूताभावप्रतियोगित्वाभाववत्त्वपरामर्शस्य लिङ्गान्तरधर्मिकान्वयपरामर्शजन्यायामन्यधर्मिकपरामर्शस्य च व्यभिचारवारणायाव्यवहितोत्तरत्वघटितकार्यकारणभावनिवेशस्यावश्यकतया व्यभिचारदानमसङ्गतमिति चेद् ।

अस्तु तथापि यत्राप्रामाण्यज्ञानास्कन्दितव्यतिरेकपरामर्शः, ततोऽप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानं ततोऽनुमितिः, तत्राप्रामाण्यज्ञानकाले अनुमित्यापत्तिवारणायाप्रामाण्यज्ञानानास्कन्दितपरामर्शत्वेन कारणत्वस्यावश्यकतया व्यतिरेकान्वयसमूहालम्बनपरामर्शदशायां व्यतिरेकांशेऽप्रामाण्यज्ञानदशायां साध्यप्रकारकानुमित्युत्पादेन व्यभिचारः, तादृशानुमितेर्व्यतिरेकपरामर्शाव्यवहितोत्तरत्वेन तत्राप्रामाण्यज्ञानानास्कन्दितव्यतिरेकपरामर्शाभावात् । न च कार्यतावच्छेदककोटौ अप्रामाण्यज्ञानानास्कन्दितत्वं निवेशनीयमिति वाच्यम् । प्रयोजनाभावात् । न चाऽप्रामाण्यज्ञानस्य तत्तव्यक्तित्वेनोत्तेजकत्वे एतादृशाऽप्रामाण्यज्ञानस्यानुत्तेजकतयैव व्यभिचारवारणं सम्भवतीति वाच्यम् । तथा सति यत्रापेक्षाबुद्ध्यात्मकाप्रामाण्यज्ञानास्कन्दितव्यतिरेकपरामर्शः, तदनन्तरं चान्वयपरामर्शः ततोऽप्रामाण्यज्ञानास्कन्दितसाध्यप्रकारकानुमितिः अन्वयपरामर्शधर्मिकाप्रामाण्यज्ञानं पूर्वाप्रामाण्यज्ञानं च ततः साध्यविशेष्यकानुमितिः, तत्र पूर्वक्षणे साध्यविशेष्यकानुमित्यापत्तिः, अतो व्यतिरेकपरामर्शधर्मिकाप्रामाण्यज्ञानव्यक्तेरुत्तेजकविधया प्रवेशस्यावश्यकतया व्यभिचारात्, व्यतिरेकपरामर्शाव्यवहितोत्तरसाध्यप्रकारकानुमितौ तादृशाप्रामाण्यज्ञानानास्कन्दितव्यतिरेकपरामर्शाभावात् । न च साध्यविशेष्यकानुमितिं प्रति व्यतिरेकपरामर्शत्वेन कारणतास्वीकारेऽपि यत्राप्रामाण्यज्ञानास्कन्दितवह्निव्यतिरेकव्याप्तिविशिष्टधूमविषयकोऽप्रामाण्यज्ञानानास्कन्दितवह्निव्यतिरेकव्याप्तिविशिष्टघटविषयकोऽपेक्षाबुद्ध्यात्मकसमूहालम्बनपरामर्शः ततोऽप्रामाण्यज्ञानास्कन्दितानुमितिः घटवत्तापरामर्शांशेऽप्रामाण्यज्ञानं च ततो धूमवत्तापरामर्शधर्मिकाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानं तदनन्तरं सा·

ध्यविशेष्यकानुमितिः, तस्याः पूर्वक्षणे आपत्तिवारणाय कारणतावच्छेदककोटौ अप्रामाण्यज्ञानानास्कन्दितत्वप्रवेशस्यावश्यकतया साध्यविशेष्यकपूर्वानुमितौ व्यभिचारात्, अतः कार्यतावच्छेदककोटौ तन्निवेशस्यावश्यकतया साध्यप्रकारकानुमितावपि न व्यभिचार इति वाच्यम्। तत्राऽप्रामाण्यज्ञानव्यक्तेः कार्यतावच्छेदककोटौ प्रवेशोऽस्तु सर्वत्र तत्राऽप्रामाण्यज्ञानव्यक्तीनां उत्तेजकविधया प्रवेशापेक्षया साध्यविशेष्यकानुमितित्वस्य कार्यतावच्छेदककोटौ प्रवेशे लाघवादिति प्राहुः।

केचित्तु नन्वत्र व्यतिरेकपरामर्शाव्यवहितोत्तरानुमितिं प्रति व्यतिरेकपरामर्शत्वेन कारणत्वस्य कल्पनीयतया उक्तान्वयपरामर्शाव्यवहितोत्तरानुमितौ व्यतिरेकपरामर्शाव्यवहितोत्तरत्वाभावेन व्यभिचाराभावादनुमितौ साध्यविशेष्यकत्वप्रवेशो व्यर्थ इति चेन्न।

यत्रैकक्षणे गोत्वाभावव्याप्यसास्नाभाववान् गोत्वाभाव इत्यन्वयपरामर्शः, गोत्वव्यापकसास्नाशून्यो गोत्वाभाव इति व्यतिरेकपरामर्शश्च तत्र व्यतिरेकपरामर्शांशेऽप्रामाण्यज्ञानं तत्र पक्षविशेष्यकानुमितौ व्यभिचारात् अतः साध्यविशेष्यकत्वनिवेशः, तथाच तदनुमितौ साध्यविशेष्यकत्वाभावेन व्यभिचाराभावात्। न चात्र व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानस्योत्तेजकत्वान्न व्यभिचार इति वाच्यम्। यत्र प्रथमं गोत्वाभावस्यान्वयपरामर्शः ततो व्यतिरेकपरामर्शः तत्रैव व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानं तदनन्तरं गोत्वाभावरूपपक्षविशेष्यकानुमितौ व्यभिचारापत्तेः, तदनुमितौ व्यतिरेकपरामर्शाव्यवहितोत्तरत्वेन तत्राप्रामाण्यज्ञानानास्कन्दितव्यतिरेकपरामर्शाभावात्। न च व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानस्योत्तेजकत्वं न देयमिति वाच्यम्। तत्रैवानुमितिधर्मिकाऽप्रामाण्यज्ञानात्पुनरनुमित्यापत्तेः, तदनुमित्युत्तरानुमितौ व्यतिरेकपरामर्शोत्तरत्वसत्त्वेन प्रथमानुमितिक्षणं व्यतिरेकपरामर्शरूपकारणसत्त्वात्। न च प्रथमानुमितिरेव विरोधिनीति नापत्तिरिति वाच्यम्। तादृशानुमितिधर्मिकाऽप्रामाण्यज्ञानस्योत्तेजकत्वात्, अन्यथा तादृशानुमित्युत्तरोत्पन्नपरामर्शादनुमितिर्न स्यात्सिद्धेः प्रतिबन्धकत्वात्, तथाचानुमित्युत्तरानुमितिवारणाय व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानस्योत्तेजकत्वेनोक्तव्यभिचारापत्त्याऽनुमितौ साध्यविशेष्यकत्वनिवेशः। न च तादृशव्यभिचारवारणाय कारणतावच्छेदककोटावेवाऽप्रामाण्यज्ञानस्योत्तेजकत्वं वाच्यम्, तथाचोक्तानुमितावप्रामाण्यज्ञानास्कन्दितव्यतिरेकपरामर्शाभावाद्व्यभिचाराभावेनाऽलं साध्यविशेष्यकत्वदलेनेति वाच्यम्। यत्र प्रथमक्षणे गोत्वव्यापकसास्नाशून्यो गोत्वाभाव इत्यपेक्षाबुद्ध्यात्मकव्यतिरेकपरामर्शः ततः क्वचित्प्रतिबन्धकवशादनुमितिमविधाय गोत्वाभावव्याप्यव्याप्यसास्नाभाववान् गोत्वाभाव इत्यन्वयपरामर्शः व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानं च ततो गोत्वाभावात्मकपक्षविशेष्यकानुमितौ व्यभिचारापत्तेः, स्वोत्पत्तिक्षणेऽप्रामाण्यज्ञानास्कन्दितव्यतिरेकपरामर्शसत्त्वेन तदव्यवहितोत्तरत्वस्य स्वोत्पत्तितृतीयक्षणोत्पत्तिकानुमितौ सत्त्वात्, अव्यवहितोत्तरत्वस्य त्रिक्षणसाधारणत्वात्, तथाच तादृशानुमितिपूर्वक्षणेऽप्रामाण्यज्ञानानास्कन्दित व्यतिरेकपरामर्शाभावात्। नन्वत्रापि व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानस्य कारणतावच्छेदककोटौ नोत्तेजकत्वमिति नोक्तव्यभिचार इति चेन्न। पूर्वोक्तरीत्या यदा यत्र प्रथमानुमित्युत्पत्तिक्षणे तद्धर्मिकाऽप्रामाण्यज्ञानं तत्रैवान्वयपरामर्शधर्मिकाप्रामाण्यज्ञानं च तदा तत्र पुनरनुमित्यापत्तिरतः कारणतावच्छेदककोटावप्रामाण्यज्ञानस्योत्तेजकत्वं वाच्यम्, एवं प्रथ-

अन्येतु द्वित्रिक्षणान्तरितायामप्यनुमित्सायामनुमीतिदर्शनात् अनुमित्सायोग्यता वाच्या, सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः, अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे दिवसादिविलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिंगपरामर्शादनुमितिप्रसंगात् ।

---

र्शस्याऽहेतुत्वात्, तथाविधगोत्वाभावानुमितिहेतोर्गोत्वाभावान्वयव्याप्यवत्तापरामर्शस्य विरहेण कारणबाधाच्च । प्रसिद्धाप्रसिद्धसाध्यकोभयपरामर्शयोः प्रसिद्धाप्रसिद्धसाध्यकोभयानुमित्यनुगतधर्मावच्छिन्नं प्रति अनुगतरूपेण हेतुत्वस्य दुर्वचत्वादित्यन्यत्र विस्तरः ।

व्याप्तिस्मरणादिनेति । यत्रानुमित्सोत्तरं व्याप्तिस्मरणं ततः सिद्धयत्प्रकपरामर्शस्तत्रेत्यर्थः । तथैव–तथासत्येव । विशिष्टाभावस्येति । अनुमित्साविरहविशिष्टसिद्ध्यभावस्येत्यर्थः ।

मिश्रमतमाह अन्येत्विति । अनुमित्सायामिति । सिद्धिदशायामिति शेषः । वाच्येति, सिषाधयिषापदेनेत्यादिः । स्वोत्पत्तीत्यादि, स्वपदं तत्तदनुमित्सापरम् , तथा

---

मानुमितिधर्मिकाऽप्रामाण्यज्ञानस्योत्तेजकत्वं पूर्वोक्तरीत्या बाध्यम्, तथाचोक्तव्यभिचारवारणायाऽनुमिता साध्यविशेष्यकत्वानिवेश इति तादृशव्यतिरेकपरामर्शाव्यवहितोत्तरं साध्यविशेष्यकानुमितिरेव न स्यादतो न व्यभिचारः । यद्यप्यत्रानुमितौ साध्यविशेष्यकात्वदानेऽपि यत्र प्रथमं धूमव्यापकवह्न्यभाववान्पर्वत इति व्यतिरेकपरामर्शः ततो धूमव्यापकालोकाभाववान् पर्वत इति व्यतिरेकपरामर्शः तत्रैवाऽतीतव्यतिरेकपरामर्शधर्मिकाप्रामाण्यज्ञानं ततःवं पते धूमाभाव इत्यनुमितौ व्यभिचारापत्तिस्तत्राऽप्रामाण्यज्ञानानास्कन्दितव्यतिरेकपरामर्शस्य पूर्वेमसत्त्वात् । न च तत्र व्यतिरेकपरामर्शधर्मिकाप्रामाण्यज्ञानस्य नोत्तेजकत्वमतो न व्यभिचार इति वाच्यम् । यत्र पूर्ववदनुमितावप्यप्रामाण्यज्ञानं तत्रैव द्वितीयपरामर्शधर्मिकाऽप्रामाण्यज्ञानं च तदनन्तरं पुनरनुमित्यापत्तेः, तत्रानुमितिधर्मिकाप्रामाण्यज्ञानस्य पूर्ववदत्राप्युत्तेजकत्वात् । तथाप्यनुमितिक्षणवृत्तित्वविशिष्टाप्रामाण्यज्ञानत्वेनैव व्यतिरेकपरामर्शधर्मिकाऽप्रामाण्यज्ञानस्योत्तेजकत्वमत्र वाच्यम्, तथाचानुमितिक्षणवृत्तित्वविशिष्टं यदप्रामाण्यज्ञानं तदनुमितिक्षणे एव तदभावविशिष्टव्यतिरेकपरामर्शस्यानुमितिपूर्वं सत्वेन कारणसत्त्वान्नानुमितेर्व्यभिचारः । एवमनुमितिक्षणे तादृशव्यतिरेकपरामर्शरूपकारणाभावान्न पुनरनुमित्यापत्तिरिति ।

वस्तुतः साध्यविशेष्यकानुमितिं प्रति साध्यज्ञानस्य प्रतिबन्धकतया साध्यविशेष्यकानुमित्युत्तरं न तदनुमित्यापत्तिः, प्रथमानुमितेरेव प्रतिबन्धकत्वादित्युक्तस्थले परामर्शधर्मिकाऽप्रामाण्यज्ञानस्य नोत्तेजकता, तथाच न व्यभिचार इति प्राहुः ।

व्याप्तिस्मरणादीत्यादिनाऽनुमित्साद्वितीयक्षणं यत्र पक्षधर्मताज्ञानं तत्स्थलीयतादृशज्ञानपरिग्रहः, परामर्शदशायामसत्यां सिद्धौ विशेष्याभावादेव विशिष्टाभावनिर्वाहेण नानुमित्यनुपपत्तिरतः परामर्शकाले च सिद्धिसत्त्वे इति ।

'अन्ये त्विति'। दीधितौ अनुमित्सायां कस्यान्तरितत्वमितिजिज्ञासायामनुमिते.

च तत्तदनुमित्सोत्पत्त्यनन्तरत्वविशिष्टतत्तदनुमित्साविषयसिद्धिप्रागभावो योग्यतेत्यर्थः । सिद्धिकालीनयद्यदनुमित्साव्यक्तिदशायामुत्तरकालमनुमितिर्भाविता तत्तदनुमित्साव्यक्तिविषयीभूतसिद्धिप्रागभावस्य वर्त्तमानसिद्ध्यन्तरदशायामपि सत्वात्तदानीमनुमितेर्वारणाय विशिष्टान्तम् । तत्तदनुमित्सोत्तरत्वविशिष्टत्वविवक्षणे तत्तदनुमित्सासमकालेऽनुमितिर्न स्यादतस्तदुत्पत्तीति । तत्तदनुमित्सोत्पत्त्यनन्तरत्वन्तु न तत्तदनुमित्सोत्पत्तिक्षणध्वंसविशिष्टत्वं, तथासति अनुमित्सोत्पत्त्यनन्तरक्षणे नुमित्यपलापापत्तेः, सिषाधयिषोत्पत्तिक्षणेऽनुमित्सोत्पत्तिध्वंसविशिष्टस्य तद्विषयसिद्धिप्रागभावस्याऽसत्वात्, किन्तु तत्तदनुमित्साप्रागभावविरहविशिष्टत्वम्, वैशिष्ट्यं चैककालावच्छेदेनैकात्मवृत्तित्वमिति नातिप्रसंगः । तत्तदनुमित्सा-

---

रध्याहारः, तथाचानुमितेरन्तरितत्वमनुमित्सायां बोध्यम् । तत्र द्वित्रिक्षणान्तरितत्वं अनुमितिपूर्वद्विक्षणोत्पत्तिकध्वंसप्रतियोगिक्षणोत्पत्तिकत्वम्, अनुमितितृतीयक्षणोत्पत्तिकध्वंसप्रतियोगिक्षणोत्पत्तिकत्वम् । अत्रानुमित्सायामित्यत्र सप्तम्यर्थो न सामानाधिकरण्यम्, तथा सति द्वित्रिक्षणान्तरितानुमित्सानाशस्थलेऽनुमितिर्न स्यात्, तादृशानुमित्तेरेकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तादृशानुमित्सासामानाधिकरण्यविरहात्, किन्तु अनुमित्साप्रयोज्यत्वमत्रानुमितौ सतिसप्तम्यर्थः, तथाच द्वित्रिक्षणान्तरितानुमितावपि तादृशानुमित्साप्रयोज्यत्वसत्वादिति भावः ।

किन्त्विति । स्वस्योत्पत्तिर्यस्मादिति व्युत्पत्त्या स्वोत्पत्तिपदस्य प्रागभावपरत्वात् तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयसिद्धिप्रागभावो योग्यतेति फलितम् । तदनुमित्साप्रागभावविरहविशिष्टो यस्तदनुमित्साविषयीभूतसिद्धिप्रागभावस्तद्विरहविशिष्टायाः सिद्धेरभावः पक्षतेति यावत् ।

ननु प्रागभावस्य स्वप्रतियोगिनाश्यत्वस्वप्रतियोगिसामग्रीनाश्यत्वयोर्नियमः, तथाच स्वप्रतियोगिनाश्यत्वमतेऽनुमित्साप्रागभावस्याऽनुमित्साक्षणपर्यन्तस्थायितया यत्र प्रथमं सिद्ध्यात्मकपरामर्शः ततोऽनुमित्सा ततोऽनुमितिर्न स्यात्, तत्रानुमित्साक्षणेऽनुमित्साविषयसिद्धिप्रागभावसत्वेऽपि अनुमित्साप्रागभावविरहविशिष्टत्वविरहादिति चेन्न ।

तन्मते कार्यकालवृत्तित्वस्यैव पक्षतायां निवेशात्, तथाचानुमित्सोत्तरमनुमित्युत्पत्तिक्षणे तदनुमित्साप्रागभावविरहविशिष्टतदनुमित्साविषयस्वात्मकसिद्धिप्रागभावसत्वेन तद्विरहाविशिष्टसिद्धेरभावस्य सत्वान्नानुपपत्तिरिति ।

तत्तदनुमित्साप्रागभावविरहविशिष्टत्वमिति । तत्तदनुमित्साविषयसिद्धिप्रागभावे इति शेषः । यत्र प्रथमं सिद्ध्यात्मकपरामर्शः ततः सिषाधयिषा ततोऽनुमितिः, तत्र सिषाधयिषाक्षणेऽनुमित्यापत्तिः, तादृशानुमित्साविषयीभूतसिद्धिप्रागभावस्य परामर्शक्षणे सत्वात् अनुमित्सोत्पत्तिक्षणावच्छेदेन तस्मिन्नेवात्मनि अनुमित्साप्रागभावाभावस्य च सत्वात् एककालावच्छेदेनेति । एवमुक्तापत्तिवारणायैकात्मवृत्तित्वमित्यपि, तादृशसिद्धिप्रागभावस्य

प्रागभावाविरहाविशिष्टत्वमात्रोक्तौ अनुमित्सोत्तरमनुमित्युत्पादे पुनरनुमित्यापत्तिरतस्तदनुमित्साविषयसिद्धिप्रागभावपर्यन्तानुधावनम् ।

न च सिद्धिकालीनानुमित्सया स्वविषयीभूतैकानुमित्युत्पाददशायामपि दिनान्तरभाविस्वविषयीभूतानुमित्यन्तरप्रागभावसत्त्वात् उत्तरकालमनुमित्यन्तरापत्तिरिति वाच्यम् । तत्तदनुमित्साप्रागभावविरहविशिष्टस्य तत्तदनुमित्साविषयीभूतसिद्धिप्रागभावकूटस्य विवक्षितत्वात्, उक्तस्थले चोत्पन्नानुमितेरेव प्रागभावस्यासत्त्वादिति भावः ।

इन्द्रियादिनेति । अनुमानतः साध्यनिर्णये तु स्वविषयसिद्ध्युत्पाद एव स्थेयादिति भावः । यद्यपि स्वपदेन अनुमित्युपधायकतत्तदनुमित्साव्यक्तीनामुपग्रहे दिवसान्तरीयानुमित्साव्यक्तेर्योग्यतायामप्रवेशान्नैष दोषः, तथापि बह्वनुमितित्वप्रकारेणाऽतीतानागतानुमितिगोचरेच्छया सिद्धिकाले बह्वनुमितिर्न स्यात्तद्विषयानुमितिप्रागभावकूटस्य तदानीमसत्त्वात् । तत्तदनुमित्साव्यक्तिपूर्वक्षणावृत्तित्वेन तत्तदनुमित्साविषयसिद्धीनां, तत्तदनुमित्साकालीनत्वेन वा तत्तदनुमित्साविषयसिद्धिप्रागभावानां वि

---

परामर्शक्षणे सत्त्वात्, अनुमित्साप्रागभावाभावस्य च तत्क्षणावच्छेदेन परात्मनि सत्त्वादिति ध्येयम् ।

अनुगमस्तु स्वप्रागभावविरहनिष्ठा या वृत्तिता तादृशवृत्तिताविशिष्टा या वृत्तिता तद्विशिष्टो यः सिद्धिप्रागभाव इति । वै० स्वावच्छेदकक्षणावच्छिन्नत्व–स्वनिरूपकनिरूपितत्वोभयसम्बन्धेन, तथाच पुरुषान्तरनिरूपितानुमित्साप्रागभावविरहनिष्ठवृत्तितायाः स्वावच्छेदकक्षणावच्छिन्नत्व सम्बन्धेन एतत्पुरुषीयस्वविषयसिद्धिप्रागभावनिष्ठवृत्तितायां सत्त्वेनानुमित्यापत्तिरतो द्वितीयसम्बन्धप्रवेशः । एवं एतत्पुरुषीयस्वविषयसिद्धिप्रागभावनिष्ठवृत्तितायां एतत्पुरुषनिरूपितअनुमित्सोत्पत्तिक्षणावच्छिन्नानुमित्साप्रागभावविरहनिष्ठवृत्तितायाः सत्त्वेनोक्तापत्तिवारणाय प्रथमसम्बन्धप्रवेशः ।

यत्तु पुरुषान्तरीया याऽनुमित्सा तत्प्रागभावविरहनिष्ठा या एतत्पुरुषनिरूपितवृत्तिता तद्वैशिष्ट्यस्य स्वनिरूपकनिरूपितत्वसम्बन्धेन एतत्पुरुषीयस्वविषयसिद्धिप्रागभावनिष्ठवृत्तितायां सत्त्वेनोक्तस्थले एव सिषाधयिषोत्पत्तिक्षणेऽनुमित्यापत्तिवारणाय स्वावच्छेदकक्षणावच्छिन्नत्व निवेशः, तथाच तत्पुरुषे पुरुषान्तरीयानुमित्साप्रागभावविरहस्य व्याप्यवृत्तितया तन्निष्ठवृत्तितायाः स्वावच्छेदकीभूतक्षणाप्रसिद्ध्या स्वावच्छेदकक्षणावच्छिन्नत्वविरहादिति ।

तत्तुच्छम् । तादृशवृत्तितायां यत्किञ्चित्क्षणावच्छिन्नत्वनिवेशेनैव वारणसम्भवे स्वावच्छेदकक्षणावच्छिन्नत्वपर्यन्तानुधावनस्य वैयर्थ्यादिति दिक् ।

दीधितौ अनुमित्सानन्तरं दिवसादिविलंबेनाप्यनुमितिप्रसंगादित्यन्वयः । अन्तरानुमित्युत्पादे स्वविषयसिद्धिप्रागभावासत्त्वेन नापत्तिसंभव इत्यतोऽन्तरानुमित्यनुत्पादे इति । द्वित्रिक्षणादिविलंबेनानुमितेरिष्टत्वादिन्द्रियादिना निर्णीते इति । आदिना शब्दादिपरिग्रहः । सिद्धिप्रागभावकूटस्य विवक्षितत्वादिति । ननु तत्तदनुमित्साप्रागभावविर-

किन्तु अनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः, फलबलेन तथा कल्पनात् । अथवा अनु-

---

वक्षया कथञ्चिदुपपादनेऽपि अनुमितिद्वयं जायतामितीच्छायामनुमितिद्वयं न स्यात् तत्तदनुमित्साविषयीभूतानुमितिप्रागभावकूटस्य प्रथमानुमित्युत्पत्तिदशायामसत्त्वात्, तादृशानुमित्साया अपि मिश्रैरुत्तेजकत्वोपगमादित्यादि दूषणं द्रष्टव्यम् ।

उत्सर्गतः—बाधकं विना । तेनानुमित्सोत्तरं यत्र परामर्शविरोधिज्ञानापसरणक्रमेण चिरकालोत्तरं परामर्शोत्पादस्तत्र सिद्धिदशायां न योग्यता, अत एव वक्ष्यति फलबलेनेति । तावानेव काल इति । स्थित्यनुवज्यते । नन्वेतादृशकालस्योत्तेजकत्वे किं मानमत आह—फलेति । ननु यत्रानुमित्सोत्तरं परामर्शस्तत्रत्यकालानामुपादाने यत्र सिद्ध्यात्मकपरामर्शोत्तरमनुमित्सा तत्रानुमितिर्न स्यात्, तत्रत्यकालानामनुत्तेजकत्वादत आह—अथवेति ।

---

हवैशिष्ट्यावच्छिन्ना या तत्तदनुमित्साविषयसिद्धिप्रागभावत्वस्युभयावृत्तिधर्मावच्छिन्ना प्रतियोगिता तन्निरूपकाभावविशिष्टसिद्ध्यभावत्वेन पक्षताया हेतुत्वसंभवे कूटनिवेशनमफलम्, तथाच सिद्धिकालीनानुमित्सायाः स्वविषयीभूतैकानुमित्युत्पाददशायां दिनान्तरभाविस्वविषयीभूतानुमित्यन्तरप्रागभावसत्त्वेऽपि तत्तदनुमित्साविषयोत्पन्नानुमित्यात्मकसिद्धिप्रागभावत्वस्युभयावृत्तितत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावविशिष्टसिद्धेरुत्पन्नानुमितिक्षणे सत्त्वेन नानुमित्यन्तरापत्तिरिति चेन्न । एतादृशनिवेशे महागौरवात् । स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वरूपोभयावृत्तित्वस्य कारणतावच्छेदककोटौ प्रविष्टत्वात् । न च कूटत्वनिवेशेपि गौरवम्, कूटत्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपतया तस्य विषयभेदेनानन्त्यात्तन्निवेशापेक्षयोभयावृत्तित्वस्यैव लघुत्वादिति वाच्यम् । असमवेतसंख्यात्वाकर्तृमते तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयासिद्धिप्रागभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकसमुदायत्वस्यैव कूटत्वपदार्थत्वाद्, तथाच तादृशसमुदायत्वस्यैक्यतया उभयावृत्तित्वनिवेशापेक्षया लाघवादिति ध्येयम् । विवक्षयेति । ननु कूटपदेन तत्तदनुमित्साप्रागभावविरहवैशिष्ट्यसिद्धिप्रतियोगिकत्वप्रागभावत्वएतत्त्रितयधर्मावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वनिवेशादेव सर्वदोषवारणसम्भवे तत्तदनुमित्साव्यक्तिपूर्वक्षणावृत्तित्वादिनिवेशो व्यर्थः, तथाच तत्तदनुमित्साविषयसिद्धिप्रागभावत्वमेव धर्मितावच्छेदकीकृत्य तत्तदनुमित्साप्रागभावविरहवैशिष्ट्यं निवेश्यमिति चेन्न ।

सिद्ध्यात्मकपरामर्शादनुमित्यापत्तिः दिनान्तर्भाव्यानुमित्साविषयाग्रिमानुमितिरूपसिद्धिप्रागभावस्यैव तत्तदनुमित्साप्रागभावविरहविशिष्टतया तत्कूटसत्त्वात्। न च तथापि स्वविषयसिद्धौ तत्तदनुमित्सापूर्वक्षणावृत्तित्वनिवेशेपि भाव्यनुमित्साविषयपूर्वानुमितिरूपसिद्धौ तत्तदनुमित्सापूर्वक्षणावृत्तित्वविरहात् अग्रिमानुमितिरूपस्वविषयसिद्धिप्रागभावकूटसत्त्वात् सिद्ध्यात्मकपरामर्शाद-

मित्सोत्पत्त्यनन्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलक्षितः । यदि च सिद्ध्यनन्तरे तन्नाशेऽपि

---

उपलक्षित इति । तथा चानुमित्सानाशाधिकरणतत्तत्कालोऽनुमित्सा च द्वयमप्युत्तेजकमित्याशयः । मिश्रमतमुपदर्शयन्नाह यदि चेति । तावानेवेति । सिद्धिनाशोत्तरमपि यावत्कालमध्येऽनुमितिर्नोत्पद्यते तावानेव काल इत्यर्थः । ननु क्रियामकानान्तावत्समयानामभावस्य सर्वदैवात्मनि सत्त्वान्नोक्तयोग्यता-

---

नुमित्यापत्तिर्दुर्वारैवेति वाच्यम् । सिद्ध्यात्मकपरामर्शक्षणे भाव्यनुमित्साप्रागभावसत्त्वेन तादृशानुमित्साप्रागभावविरहवैशिष्ट्यस्वविषयसिद्धिप्रागभावकूटत्वोभयधर्मावच्छिन्ननिरूपकताकाधिकरणताविरहात्, तन्मते तदनुमित्साप्रागभावविरहवैशिष्ट्यस्य कूटत्वानुयोगितावच्छेदकतया निवेशेनाऽधिकरणतानिरूपकतावच्छेदकत्वाभावादिति । न च तादृशकूटत्वं धर्मितावच्छेदकीकृत्य तदनुमित्साविरहवैशिष्ट्यप्रवेशात् तादृशविरहवैशिष्ट्यस्याधिकरणतानिरूपकतावच्छेदकत्वात् तद्वारणं सम्भवतीति वाच्यम् । पूर्वक्षणावृत्तित्वनिवेशापेक्षया लाघवसम्भवे स्वविषयसिद्धिप्रागभावे तत्तदनुमित्सासमानकालीनत्वनिवेशापेक्षया लाघवानवकाशादिति दिक् ।

अथ तत्तदनुमित्साप्रागभावविशिष्टसिद्धिसामान्याभावविवक्षणादेव सर्वानुपपत्तिवारणसम्भवे स्वविषयसिद्धिप्रागभावकूटनिवेशस्य स्वविषयसिद्धौ अनुमित्सापूर्वक्षणावृत्तित्वनिवेशस्य च प्रयोजनविरहः, प्रथमानुमितिरूपतदनुमित्साप्रागभावविरहविशिष्टस्वविषयसिद्धिसत्त्वेन एकानुमित्यनन्तरमनुमित्यापत्तिविरहात्, अतीतानुमितिगोचरेच्छाविरहविशिष्टस्वविषयसिद्धिसामान्याभावस्य सत्त्वात्तत्रानुपपत्तिविरहात् । न च यत्रातीतानुमितिमात्रविषयकानुमित्साविरहव्यात्मकपरामर्शादयः तत्र तदनुमित्साप्रागभावविरहवैशिष्ट्यस्यानुमित्साविषयभूतानुमितिपरसिद्धौ विरहेणाऽनुमित्यनुपपत्तिरिति वाच्यम् । स्वविषयतावच्छेदकधर्मावच्छिन्नातीतभाव्यनुमितिरूपसिद्धौ तत्सम्भवादिति चेन्न ।

सिद्ध्यात्मकपरामर्शादनुमित्यापत्तेः, तत्तदनुमित्साविषयसिद्धिसामान्याभावसत्त्वात् । अथ तत्तदनुमित्साप्रागभावविरहविशिष्टस्वविषयसिद्धिप्रागभावे स्वविषयसिद्धिसामान्याभावत्वनिवेशात् अनुमित्यनन्तरानुमित्यापत्तिवारणसम्भवेन कूटनिवेशे प्रयोजनविरहेण अनुमित्सापूर्वक्षणावृत्तित्वनिवेशे प्रयोजनविरहः । न च सिद्ध्यात्मकपरामर्शादनुमित्यापत्तिः, तत्तदनुमित्साविषयसिद्धिप्रागभावे स्वविषयसिद्धिसामान्याभावसत्त्वात् स्वविषयपूर्वानुमितिरूपसिद्धिसत्त्वेऽपि अपरक्षणावच्छेदेन तादृशसिद्धिसामान्याभावसत्त्वात् सिद्ध्यभावस्याव्याप्यवृत्तित्वादिति वाच्यम् । तथासति तादृशप्रागभावे स्वविषयसिद्धिविशिष्टान्यत्वनिवेशान्न दोषः, भेदस्य व्याप्यवृत्तितया तादृशसिद्धिसत्त्वेन विशिष्टान्यत्वविरहात् । भेदस्याऽव्याप्यवृत्तित्वे तु निरवच्छिन्नत्वस्वरूपसम्बन्धेन विशिष्टान्यत्वं निवेशनीयम् । न च यत्रानुमितित्वेनाऽतीतानुमितिविषयकेच्छा तत्र स्वविषयातीतानुमितिविशिष्टत्वेनाऽनुमित्यनुपपत्तिरिति वाच्यम् । स्वविषयसिद्धौ स्वोत्तरक्षणवृत्तित्वनिवेशात्, अतीतानुमितिरूपसिद्धौ स्वोत्तरक्षणवृत्तित्वविरहात् भाव्यनुमितिमादाय

द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनुभवसिद्धः, तदा सिद्ध्यापि

---

विवक्षयापि अनुमित्सानाशोत्तरमनुमितेः सम्भव इत्यत आह—विशिष्येति । तथा च जन्यमात्रस्य कालोपाधितया आत्मसमवेतं तत्तज्ज्ञानादिकमेव तादृशसमयो वाच्य इत्यदोषः । अवहितैरिति भावे क्तः । अवधानैरित्यर्थः । सकर्मस्याऽवपूर्वस्य धातोः पचत्यादेरिव कर्त्तरि क्तस्याऽव्युत्पन्नत्वादिति

---

विशिष्टान्यत्वसत्त्वात् । न चानुमितित्वेनाऽतीतानुमितिमात्रविषयकेच्छा यत्र तत्र स्वोत्तरक्षण वृत्तित्वविषयसिद्ध्यप्रसिद्ध्याऽनुपपत्तिरिति वाच्यम् । स्वविषयतावच्छेदकधर्मावच्छिन्ने स्वोत्तर क्षणवृत्तित्वनिवेशात्, स्वविषयतावच्छेदकानुमितित्वरूपधर्मावच्छिन्नमाव्यानुमितौ स्वोत्तरक्ष· णवृत्तित्वाऽसत्त्वात् तादृशसिद्धिविशिष्टान्यत्वस्य स्वविषयसिद्धिप्रागभावे सत्त्वात् । न च यत्र शाब्दबोधविषयकानुमितिविषयकेच्छा तदुत्तरं शाब्दबोधात्मकपरामर्शः तत्रानुमितिर्न स्यात् स्वविषयतावच्छेदकधर्मावच्छिन्नशाब्दात्मकसिद्धिवैशिष्ट्यस्य स्वविषयसिद्धिप्रागभावे सत्त्वादिति वाच्यम् । स्वविषयतावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नविशिष्टान्यत्वनिवेशात् अनुमितित्वरूपय· त्किञ्चिद्धर्मावच्छिन्नविशिष्टान्यत्वसत्त्वात् । न च तथापि यत्र शाब्दबोधविषयकानुमितिविषय केच्छानन्तरमनुमितिः तत्रानुमित्यनन्तरमनुमित्यापत्तिः, स्वविषयतावच्छेदकशाब्दत्वरूपकि ञ्चिद्धर्मावच्छिन्नविशिष्टान्यभाव्यनुमितिप्रागभावसत्त्वादिति वाच्यम् । तथासति स्वविषयताव· च्छेदकानुमितिवृत्तिधर्मावच्छिन्नसिद्धिविशिष्टान्यत्वस्य विवक्षितत्वात्, शाब्देऽनुमितिवृत्तिधर्मा· वच्छिन्नत्वविरहात् अनुमितेरेव तथात्वेन तद्विशिष्टान्यत्वस्य स्वविषयसिद्धिप्रागभावे विरहा· दिति चेन्न ।

शाब्दत्वस्य ज्ञानत्वघटिततया स्वविषयतावच्छेदकानुमितिवृत्तिज्ञानत्वरूपयत्किञ्चिद्धर्माव· च्छिन्नविशिष्टान्यत्वस्य स्वविषयसिद्धिप्रागभावे सत्त्वात् शाब्दविषयकानुमितिविषयकेच्छाद· शायामनुमित्युत्तरमनुमित्यापत्तेर्दुर्वारत्वात् स्वोत्तरत्वनिवेशे लाघवानवकाशादिति ।

अथात्र तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयसिद्धिप्रागभावे तत्तदनुमि· त्साविषयीभूतसिद्धिविशिष्टान्यत्वं निवेश्यम्, वै० एकक्षणावच्छिन्नैककालवृत्तित्वसम्बन्धेन, तथाच सिद्धिकालीनानुमित्सायाः स्वविषयीभूतानुमित्युत्पाददशायां दिनान्तरभाविस्वविषयी· भूतानुमित्यन्तरप्रागभावे तत्तदनुमित्साविषयीभूतोत्पन्नप्रथमानुमित्यात्मकसिद्धिविशिष्टान्यत्व· विरहादनुमितिप्राक्क्षणे एव सत्त्वेनानुमित्यन्तराऽऽपत्तिर्विरहात् किं स्वविषयसिद्धिप्रागभावकूट· त्वनिवेशेनेति चेन्न ।

यत्रानुमितित्वेन प्रत्यक्षावगाहिनी पर्वतधर्मिकवह्न्यनुमितिर्जायतामितीच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यधूमवानिति प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शः ततः पर्वतधर्मिकवह्न्यनुमितिर्न स्यात्, सिद्ध्यात्मकपरामर्शक्षणे तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयसिद्धि· प्रागभावे तत्तदनुमित्साविषयप्रत्यक्षात्मकसिद्धिविशिष्टान्यत्वस्योक्तसम्बन्धेन विरहात् तादृश· प्रागभावविरहविशिष्टसिद्धेरुक्तपरामर्शक्षणे सत्त्वादतस्तत्तदनुमित्साविषयतावच्छेदकधर्मावच्छि·

तावानेव समय उपलक्षणीयः । विशिष्य क्षणनियमस्त्ववहितैः करणीय इति वदन्ति ।

---

ध्येयम् । अनुमित्सान्यक्तीनामिव तन्नाशाधिकरणक्षणानामपि उत्तेजकाविधया प्रवेशे गौरवम्, विनाऽनुमित्सामनुमित्युत्पादस्य सन्दिग्धत्वादित्यस्वरसो वदन्तीत्युक्त्या सूचितः ।

उत्तानास्तु द्वे द्रव्ये इत्यादिलौकिकप्रत्यक्षान्यथानुपपत्त्या अपेक्षाबुद्धीनामिव अनुमित्सानाशोत्तरसिद्धिदशोत्पन्नतत्तदनुमित्यन्यथानुपपत्त्या प्रागुत्पन्नसिषाधयिषाव्यक्तीनामेव तिचतुःक्षणावस्थायित्वं कल्पयितुमुचितम् विरोधिगुणानां नाश्यनाशकभावस्य विशेषत एव विश्रामाद् द्वितीयक्षणे विनाशसामग्रचनावश्यकत्वादिति प्राहुः ।

---

प्रविशिष्टान्यत्वं तत्तदनुमित्साविषयसिद्धिप्रागभावे निवेशनीयम्, तथाच सिद्ध्यात्मकपरामर्शक्षणे तत्तदनुमित्साविषयसिद्धिप्रागभावे तत्तदनुमित्साविषयतावच्छेदकानुमितित्वावच्छिन्नविशिष्टान्यत्वसत्त्वान्नानुपपत्तिः । नच यत्र पर्वते वह्न्यनुमितिर्जायतां प्रत्यक्षं च जायतामितीच्छा ततः प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शः तत्र पर्वते वह्न्यनुमितिर्न स्यात्, सिद्ध्यात्मकपरामर्शक्षणे तत्तदनुमित्साप्रागभावविशिष्टतत्तदनुमित्साविषयसिद्धिप्रागभावे स्वविषयतावच्छेदकं यत्प्रत्यक्षत्वं तदवच्छिन्नविशिष्टान्यत्वविरहादिति वाच्यम् । तादृशप्रागभावे स्वविषयतावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नविशिष्टान्यत्वस्यैव विवक्षणात्, तथाच स्वविषयतावच्छेदकीभूतानुमितित्वरूपयत्किञ्चिद्धर्मावच्छिन्नविशिष्टान्यत्वस्य सिद्ध्यात्मकपरामर्शक्षणे तादृशप्रागभावे सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वान्नानुमित्यनुपपत्तिः । एवंसति यत्र प्रथमं वन्ह्यनुमितिर्जायतां शाब्दं च जायतामिति समूहालम्बनेच्छा ततः प्रत्यक्षात्मकपरामर्शः ततः पर्वते वन्ह्यनुमितिः तत्र तदनन्तरमनुमित्यापत्तिः प्रथमानुमितिक्षणे तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयदिनान्तरभाविसिद्धिप्रागभावे स्वविषयतावच्छेदकीभूतशाब्दत्वरूपयत्किञ्चिद्धर्मावच्छिन्नविशिष्टान्यत्वसत्त्वेन तादृशप्रागभावविरहविशिष्टसिद्ध्यभावस्य प्रथमानुमितिक्षणे सत्त्वादतस्तत्तदनुमित्साविषयसिद्धिप्रागभावकूटनिवेशः, तथाच तदन्तर्गतस्य प्रथमानुमितिप्रागभावस्य प्रथमानुमितिक्षणे विरहान्न पुनरनुमित्यापत्तिरिति ध्येयम् ।

ननु यत्राऽनुमितित्वेन प्रत्यक्षावगाहिनी पर्वते वन्ह्यनुमितिर्जायतामितीच्छा ततः प्रत्यक्षात्मकासिद्ध्यात्मकपरामर्शः तत्र पर्वते वह्न्यनुमितिर्न स्यात्, तत्रोक्तपरामर्शक्षणे तत्तदनुमित्साप्रागभावविरहसत्त्वेऽपि तत्तदनुमित्साविषयप्रत्यक्षात्मकसिद्धिप्रागभावविरहेण तादृशकूटाविरहविशिष्टसिद्धेः सत्त्वादिति चेन्न ।

तत्तदनुमित्साविषयतावच्छेदकधर्मावच्छिन्नसिद्धेरेव तत्तदनुमित्साविषयसिद्धिपदेन विवक्षणीयत्वात्, तथाच तत्तदनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयतावच्छेदकधर्मावच्छिन्नप्रागभावविरहविशिष्टसिद्धेरभावः पक्षतेति फलितम्, एवं चोक्तस्थले तादृशपरामर्श-

क्षणे तत्तदनुमित्साविषयतावच्छेदकानुमितित्वरूपधर्मावच्छिन्नप्रागभावकूटसत्त्वेन तद्विरहवि-शिष्टसिद्ध्यभावस्य तत्र सत्त्वान्नोक्तानुपपत्तिः । न च यत्र पर्वते वह्न्यनुमितिर्जायतां प्रत्यक्षं जायतामितीच्छा ततः प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शः तत्र वह्न्यनुमितिर्न स्यात्, प्रत्यक्ष-त्वस्यापि तत्तदनुमित्साविषयतावच्छेदकतया तदवच्छिन्नप्रागभावकूटस्य परामर्शक्षणेऽसत्त्वेन तद्विरहविशिष्टसिद्धेः सत्त्वादिति वाच्यम् । तत्तदनुमित्साविषयतावच्छेदकयत्किञ्चिद्धर्मावच्छि-न्नप्रागभावकूटस्यैव तत्तदनुमित्साविषयसिद्धिप्रागभावकूटपदेन विवक्षणात्, तथाचोक्तस्थले तत्तदनुमित्साविषयतावच्छेदकयत्किञ्चिद्धर्मपदेनाऽनुमितित्वस्य गृहीतुं शक्यतया तदवच्छिन्न-प्रागभावकूटस्योक्तक्षणे सत्त्वान्नानुपपत्तिरिति दिक् ।

अथात्राऽनुमित्युपधायकीभूता या या अनुमित्सास्तदनुमित्सोत्तरा वास्तविकाः याः या अनुमितयो भवन्ति तत्तदनुमितिरेव तत्तदनुमित्साविषयसिद्धिपदेन ग्राह्या, तथाच तत्तदनु-मित्साप्रागभावविरहविशिष्टो यस्तदनुमित्साप्रागभावस्तद्विरहविशिष्टसिद्ध्यभावः पक्षतेति फ-लितार्थः । एवं च सिद्धिकालीनानुमित्सायाः स्वविषयीभूतैकानुमित्युत्पाददशायां दिनान्तर-भाविस्वविषयीभूतानुमित्यन्तरप्रागभावसत्त्वेऽपि तादृशदिनान्तरभाव्यनुमितेर्वास्तविकतत्तद-नुमित्सोत्तरत्वविरहात्, भवति चोत्तरोत्पन्नानुमितिरेव तादृशी तत्प्रागभावस्योत्पन्नानुमित्युत्तर क्षणे विरहान्नोक्तानुमित्युत्तरक्षणेऽनुमित्यापत्तिरिति कूटनिवेशो निरर्थकः, एवंसति यत्रानुमि-तिद्वयं जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमितिः ततः पुनरनुमितिर्भवत्येव प्रथमानुमित्युत्पादक्षणे तत्तदनुमित्साप्रागभावकूटविरहविशिष्टत्वे तत्तदनुमित्सोत्तरं द्वितीयानु मितेरप्यनुभवसिद्धतया तत्प्रागभावयोः सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वादित्येतत्कल्पप-रित्यागोऽप्यनुचित इति चेन्न ।

यत्र स्वचतुर्थक्षणे पर्वते वह्न्यनुमितिर्जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शः ततः क्षणैकविलम्बेन पर्वते वह्न्यनुमितिः तस्याः परामर्शक्षणे आपत्तिः, परामर्शक्षणे तत्तदनुमि-त्साप्रागभावविरहविशिष्टत्वस्य स्वोत्तरचतुर्थक्षणे तादृशानुमितेरानुभविकतया तत्तदनुमितिप्राग-भावस्य च सत्त्वेन तद्विरविशिष्टसिद्ध्यभावसत्त्वादत एतत्कल्पपरित्याग इति, परन्तु कूटनि वेशो व्यर्थ इति चिन्तनीयम् ।

ननु तत्तदनुमित्साविषयसिद्धौ अनुमितिविशिष्टान्यत्वं निवेशनीयम्, वै० एकक्षणाव च्छिन्नैकात्मवृत्तित्वस्वप्रागभाववत्त्वोभयसम्बन्धेन । फलितार्थस्तु तदत्तनुमित्साप्रागभावविरहावि शिष्टेच्छायाः सिद्धेरभावः पक्षतेति । तथाच यत्रानुमितिद्वयं जायतामितीच्छा ततः सिद्ध्या त्मकपरामर्शः ततोऽनुमितिस्तदनन्तरमनुमितिर्भवत्येव प्रथमानुमित्युत्पादक्षणे तत्तदनुमि-त्साप्रागभावविरहविशिष्टत्वसत्त्वात्, एवं तत्तदनुमित्साविषयीभूतसिद्धिपदेन प्रथमानुमितेर्धर्त्तु-मशक्यतया तस्योक्तसम्बन्धेन द्वितीयानुमितिविशिष्टत्वस्यैव सत्त्वेन विशिष्टान्यत्वाभावात्, अपि तु द्वितीयानुमितेरेवानुमितिविशिष्टान्यतया तत्प्रागभावस्य द्वितीयानुमितिक्षणे सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वादेतत्कल्पपरित्यागानौचित्यादिति चेन्न ।

यत्र प्रथमं सिद्ध्यात्मकपरामर्शः ततोऽनुमितिद्वयं जायतामितीच्छा, ततोऽनुमिति-स्ततो वह्निव्याप्यधूमवत्तापरामर्शात्पर्वते वह्न्यनुमितिर्न स्यात्तत्र प्रथमानुमितौ अनुमितिवि-

ष्टान्यत्वसत्त्वेन तदनुमितेरपि स्वविषयसिद्ध्यन्तर्गततया तत्प्रागभावकूटस्य तदुत्तरोत्पन्नपरामर्शक्षणेऽसत्त्वेन तद्विरहविशिष्टसिद्ध्यभाववत्त्वादत एतत्कल्पपरित्याग इति भावः।

अथात्र तत्तदनुमित्साविषयसिद्धौ सिद्धिविशिष्टान्यत्वं निवेशनीयम्, वै० स्वाव्यवहितपूर्वत्वसम्बन्धेन, तथाच यत्रानुमितिद्वयं जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमितिस्तदनन्तरं चानुमितिर्भवत्येव, तत्र तत्तदनुमित्साविषयप्रथमानुमितौ द्वितीयानुमितिविशिष्टत्वसत्त्वेन सिद्धिविशिष्टान्यत्वविरहाद्, भवति च तादृशी द्वितीयानुमितिः, तत्प्रागभावकूटस्य प्रथमानुमितिक्षणे सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वादेतत्कल्पपरित्यागोऽयुक्त इति चेन्न।

यत्र प्रथमं सिद्ध्यात्मकपरामर्शः ततोऽनुमितिद्वयं जायतामितीच्छा ततोऽनुमितिः तदनन्तर पर्वते वह्निसाध्यकपरामर्शात्पुनरनुमितिर्न स्यात्, तत्र द्वितीयपरामर्शक्षणे तत्तदनुमित्साप्रागभावविरहविशिष्टत्वेऽपि तत्तदनुमित्साविषयप्रथमानुमितिरूपसिद्धौ सिद्धिविशिष्टान्यत्वसत्त्वाद्, अव्यवहितपूर्वत्वस्य द्विक्षणसाधारणत्वात्, तादृशसिद्धिप्रागभावविरहेण तत्प्रागभावकूटविशिष्टसिद्ध्यभावविरहादेतत्कल्पपरित्यागादिति।

न चाऽव्यवहितपूर्वत्वस्य त्रिक्षणसाधारणत्वे नोक्तानुपपत्तिरिति वाच्यम्। यत्र प्रथमं पर्वतो वह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यव्याप्यवांश्चेति पर्वते वह्न्यनुमितिः वह्निव्याप्यानुमितिश्च मदिष्टसाधिकेति स्मरणम्, ततः पर्वते वह्न्यनुमितिः वह्निव्याप्यानुमितिश्च जायतामितीच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यवानित्यनुमितिः तदनन्तरं च वह्न्यनुमितिधर्मिकाऽप्रामाण्यज्ञानं ततः पर्वतो वह्निमानित्यनुमितिर्जायतामितीच्छा ततोऽनुमितिः, तस्या अप्रामाण्यज्ञानक्षणे आपत्तिः, तदप्रामाण्यज्ञानात्पूर्वं समूहालम्बनानुमितिक्षणे तत्तदनुमित्साप्रागभावविरहविशिष्टत्वसत्त्वात्, एवं तदनुमित्साविषयीभूता न समूहालम्बनात्मिकानुमितिः तस्या उक्तसम्बन्धेनोक्तानुमितिविशिष्टान्यत्वविरहाद्, भवति चोत्तरानुमितिरेव तादृशी तत्प्रागभावस्य समूहालम्बनानुमितिक्षणे सत्त्वेन तद्विरहाविशिष्टसिद्ध्यभावादत एतत्कल्पपरित्याग इति ध्येयम्।

अथात्र तत्तनुमित्साप्रागभावविरहविशिष्टतत्तदनुमित्साविषयीभूतसिद्धौ तत्तदनुमित्साप्रतिबन्धकत्वं निवेश्य तादृशसिद्धिप्रागभावविरहकूटाविशिष्टसिद्ध्यभावत्वेन पक्षताया हेतुत्वं वाच्यम् तावतैवानुमितिद्वयं जायतामितीच्छादशायां सिद्ध्यात्मकपरामर्शाद्वह्न्यनुमितिः तदुत्तरं पुनरनुमितिर्भवत्येव तत्तदनुमित्साविषयप्रथमानुमित्यात्मकसिद्धौ तादृशानुमित्साप्रतिबन्धकत्वविरहाद्, अपि तु द्वितीयानुमितिरेव प्रतिबन्धिका, अन्यथा परामर्शमात्रादनुमितिः तदनन्तरमनुमितिद्वयं जायतामितीच्छोत्पद्यते सा न स्यात्, तथा च स्वप्रतिबन्धकीभूतस्वविषयद्वितीयानुमितिप्रागभावस्य प्रथमानुमितिक्षणे सत्त्वेन तद्विरहाविशिष्टसिद्ध्यभावसत्त्वादित्येतत्कल्पपरित्यागो न युज्यते इति चेन्न।

यत्र तदनुमितिरनुमित्यनन्तरं जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शादनुमितिः तदनन्तरमनुमितिर्न स्यात्, तत्तदनुमित्साविषयतत्तदनुमितेरपि तादृशेच्छाप्रतिबन्धकतया तत्प्रागभावकूटस्य प्रथमानुमितिक्षणे सत्त्वादतस्तत्परित्याग इति दिक्।

अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन साध्यतद्व्याप्यवि-

साध्यनिर्णयेति । साध्यनिर्णयत्वप्रकारकेच्छानन्तरमित्यर्थः । पूर्वोक्तन्यायेन—

न च स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नासमानकालीनत्वं स्वप्रागभाव-विरहविशिष्टस्वविषयसिद्धिप्रागभावे निवेश्यम्, न तु कूटत्वं प्रागभावविशेषणम्, तावतैवा-नुमित्यन्तरापत्तिवारणसम्भवात् उत्पन्नानुमितिक्षणस्थायिस्वविषयीभूतदिनान्तरभाव्यनुमिति-प्रागभावे तादृशधर्मावच्छिन्नासमानकालीनत्वविरहात् सत्त्वाच्चोत्पन्नानुमितिप्रागभाव एव, तद्विरहविशिष्टसिद्ध्यभावस्योत्पन्नानुमितिक्षणे विरहात्, तथा च यत्रानुमितिद्वयं जायतामिती-च्छा तत्रैकानुमित्यनन्तरं नानुमित्यन्तरानुपपत्तिः प्रथमानुमितिक्षणे तादृशधर्मावच्छिन्नासमा-नकालीनद्वितीयानुमितिप्रागभावसत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वात्किमर्थमेतत्कल्पपरित्याग इति वाच्यम् । यस्य यत्पक्षकयत्साध्यकप्रत्यक्षं कदापि न जातं तस्य तत्पक्षकतत्साध्य-कप्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छासत्त्वे सिद्ध्यात्मकपरामर्शात्तत्पक्षकतत्साध्यकानु-मित्यनुपपत्तेः । तत्र तत्पक्षकतत्साध्यकप्रत्यक्षस्य द्वयाऽप्रसिद्ध्या स्वविषयतावच्छेदकतापर्या-प्त्यधिकरणतत्पक्षकतत्साध्यकप्रत्यक्षातिरिक्तत्वविशिष्टज्ञानत्वस्य सुतरामसिद्धेः । न च प्रति-बन्धकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाऽसमानकालीनत्वमेव स्वविषयासिद्धिप्रागभावे निवेशनीयम्, तथा च यत्र यस्य यत्पक्षकयत्साध्यकप्रत्यक्षं कदापि न जातं तस्य तत्पक्षकत-त्साध्यकप्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छया तत्पक्षकतत्साध्यकानुमितिर्भवत्येव स्वप्रतिब-न्धकतावच्छेदकतापर्याप्त्यधिकरणं यदनुमितित्वं तदवच्छिन्नासमानकालीनत्वस्य परामर्शक्षणे स्वविषयीभूतसिद्धिप्रागभावे सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वादिति वाच्यम् । यत्र स्वचतुर्थक्षणे पर्वते वह्न्यनुमितिर्जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शः क्षणविलम्बेनानु-मितिः तस्याः परामर्शोत्तरक्षणे आपत्तेः, परामर्शक्षणे स्वप्रतिबन्धकतावच्छेदकतापर्याप्त्यधि-करणतादृशानुमितित्वरूपधर्मावच्छिन्नासमानकालीनत्वस्य स्वविषयीभूतसिद्धिप्रागभावे सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावसत्त्वादत एवैतत्कल्पपरित्याग इति ध्येयम् ।

स्वविषयसिद्ध्यनुपहितत्वविशेषणं परामर्शानुमित्योः समवधानसम्भवे एवाऽर्थवद् भव-ति, तच्च न सम्भवति इच्छापरामर्शयोर्युगपदुत्पादाऽसम्भवेनाऽनुमितिकाले एकतरविना-शावश्यकत्वादित्यतस्तद्घटयति दीधितौ अत्र चेति । सिद्धिप्रतिबन्धकतावच्छेदककोटौ चेत्यर्थः । तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणमित्यग्रिमेणाऽन्वयः । अनुमितित्वप्रका-रकेच्छायाः प्रत्यक्षात्मकसिद्ध्या अचरितार्थतया तद्बलात्तादृशसिद्ध्युत्तरमप्यनुमितिर्भवत्ये-वेत्यत उक्तम् साध्यनिर्णयत्वप्रकारकेच्छेति । ज्ञानेच्छयोरयौगपद्यादनुमित्सोत्प-त्तिक्षणे विशेषणज्ञानस्याऽसम्भवात् उत्तरकालं तत्स्मरणं तु अनुमित्सानाशात् पूर्वक्षणे प्रत्यक्ष-सामग्र्या असत्त्वेनेच्छोत्पत्तिरेव न सम्भवतीत्यतः पूर्वोक्तन्यायेनेति । स्वविषयीभूतप्रा-त्यक्षिकसिद्ध्युपहितत्वेनेति । नन्वस्यामपीच्छायां स्वविषयसिद्ध्यनुपहितत्वं विशेषणं पूर्ववन्न देयमेति चेन्न ।

साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरेत्यादिमूलोक्तस्थले एव यत्र साध्यानुमितिर्जायता-

शिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं ततस्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानुमितिः, तत्र तदनन्तरमनुमितिप्रसङ्गः, योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणम् ।

---

अनुमित्साप्रागुत्पन्नविशेषणज्ञानादिक्रमेण । प्रत्यक्षमिति । तत्र तदनन्तरमनुमितिप्रसङ्ग इति परेणाऽन्वयः । तथाविधप्रत्यक्षस्य विशिष्टानुभवरूपतया तज्जनकविशेषणज्ञानादिकल्पने गौरवादाह स्मरणं वेति । ननु यद्यादिच्छाविरह सिद्धिदशायामनुमितिर्जायते तत्तादिच्छाव्यक्तीनामेवोत्तेजकतया पक्षतायामन्तर्भावात्साध्यानर्णयत्वप्रकारकेच्छायाः क्वापि पक्षतायामनिवेशात्नातिप्रसङ्ग इत्यत आह यत्र वेति । यत्र साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यधर्मव्याप्यवांश्च पक्षः पक्षे साध्यनुमितिः तद्व्याप्यवत्त्वानुमितिश्चेष्टसाधनमित्येवं स्मरणमित्यर्थः ।

अत्रानुमित्सादशायां अनुमितेर्वारणार्थं साध्यवत्त्वं निवेशितम्, मानसत्वावच्छिन्नं प्रत्येवेच्छामात्रस्याः प्रतिबन्धकत्वमते तत्रानुमितेर्वारणासम्भवात् । साध्यव्याप्यवत्त्वस्य तद्व्याप्यधर्मान्तरवत्त्वस्य च निवेशोऽनुमित्सोत्तर साध्यतद्व्याप्यवत्त्वयोरनुमित्यर्थम्, अन्यथा परामर्शविरहेणोत्तरकाले साध्यानुमित्यापत्त्यसम्भवात् । इष्टसाधनत्वनिवेशः पुनरनुमित्सायाः सामग्रीसम्पत्त्यर्थम् । तयोरिति । साध्यतद्व्याप्यवत्त्वयोरित्यर्थः । अनुमितिप्रसङ्ग—साध्यानुमितिप्रसङ्गः । तत्तादिच्छाव्यक्तिमत्त्वेऽपि सिद्धिदशायामनुमित्युत्पादन तस्या अनुत्तेजकत्वादिति भावः । मिश्रमतेऽप्याह योग्यतेति । सुतरामिति । तत्रानुमितिप्रसङ्ग इत्यन्वयः । अनुमित्सानाशेऽपि अनुमितिमङ्गीकर्तुः अनुमित्सासत्त्वे सुतरां तदापत्तिसम्भवादिति भावः । तदिच्छेति । यद्यदिच्छाव्यक्तिरुत्तेजिका स्वविषयसिद्ध्यभावविशिष्टत्वं तदिच्छाविशेषणमित्यर्थः ।

यद्यपि एवमपि यत्रोक्तस्थले एव साध्यानुमितिद्वयेष्टसाधनतागोचरस्मरणात्साध्यानुमितिद्वयप्रकारानुमित्सा तत्रैकानुमित्यनन्तरं साध्यानुमित्यन्तरं न स्यात्, प्रथमानुमित्युत्पादेनैवाऽनुमित्सायाः स्वविषयसिद्

---

मितीच्छाऽनुमितिरवेन तत्प्रत्यक्षविषयिणी विसम्वादनी संवृत्ता तत्रैकानुमित्यनन्तरं साध्यानुमित्यन्तरवारणाय तदिच्छाव्यक्तौ तद्विशेषणमावश्यकम्, तथाच प्रथमानुमितेरेवानुपपत्तिः, तदिच्छायाः स्वविषयीभूतप्रत्यक्षात्मकसिद्ध्युपहितत्वेनानुत्तेजकत्वादित्यस्यैव दोषस्य दुरुद्धरत्वादिति ध्येयम् ।

ध्युपहितत्वात्, तादृशेच्छायामुक्तविशेषणाऽप्रक्षेऽपि यत्र प्रात्यक्षिकसिद्ध्युत्तर वह्न्यनुमितित्वप्रकारेण वह्निप्रत्यक्षगोचराविसम्वादिनीच्छा तत्रानुमितिर्न स्यात्, अनुमित्सायाः स्वविषयीभूतप्रात्यक्षिकसिद्ध्युपहितत्वेन तदनुपहितत्वविशिष्टानुमित्साविरहसहकृतायाः सिद्धेः सत्त्वात्। न च येन रूपेण सिद्धेस्तादृशेच्छाविषयत्वं तद्रूपावच्छिन्नसिद्ध्यभाववैशिष्ट्य विवक्षितम्, तथा च वह्न्यनुमितित्वावच्छिन्नाभाववैशिष्ट्यस्य तदिच्छाव्यक्तौ सत्त्वान्न दोष इति वाच्यम्। यत्र पक्षे यस्य साध्यस्य प्रत्यक्षं कदाचिदपि न जातं तत्पक्षकतत्साध्यकप्रत्यक्षाद्यतिरिक्तं ज्ञानं जायतामितीच्छाया अनुत्तेजकत्वापत्तेः, येन रूपेण यत्रेच्छाविषयत्वं तादृशस्य तत्पक्षकतत्साध्यवत्ताप्रत्यक्षभिन्नज्ञानत्वस्याऽखण्डस्याऽप्रसिद्धेः, तथापि उत्तेजकीभूतयद्यदिच्छाव्यक्तौ यादृशयादृशसिद्धिः प्रतिबन्धका तादृशतादृशसिद्ध्यनुपहितत्व तत्तदिच्छाविशेषणम्, तेन यत्पक्षकयत्साध्यकप्रत्यक्षमप्रसिद्धं तत्रापि तादृशप्रत्यक्षभिन्नज्ञानत्वप्रकारकेच्छायां तत्पक्षकतत्साध्यकानुमितिरेव प्रतिबन्धिकास्तीति तदनुपहितत्वमेव तदिच्छायां विशेषणमित्यदोषः।

---

तथापीति। नन्वत्र यत्र प्रथममपेक्षाबुद्ध्यात्मकवह्न्यभाववान् पर्वत इति बाधनिश्चयः तत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवान् घटवान् घटव्याप्यतद्व्यक्तिमांश्चेति समूहालम्बनापेक्षाबुद्ध्यात्मकपरामर्शः ततः पर्वते वह्न्यनुमितिर्घटानुमितिश्च जायतामितीच्छा ततो बाधनिश्चयात्मकप्रतिबन्धकवशाद् घटानुमितिरेव ततः पर्वतो वह्निमानित्यनुमित्यनुपपत्तिः, तादृशसमूहालम्बनेच्छानिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावद्घटानुमित्यात्मकसिद्ध्यभावविशिष्टत्वस्य तादिच्छायां विरहेण घटानुमितिक्षणे तदिच्छाविरहविशिष्टसिद्ध्यभावाऽसत्त्वादिति चेन्न।

स्वनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्तत्पक्षकतत्साध्यकसिद्ध्यभावविशिष्टा या इच्छा तद्विरहविशिष्टसिद्ध्यभावत्वेन तत्पक्षकतत्साध्यकानुमितिहेतुत्वस्य वक्तव्यत्वात्, तथा चोक्तस्थले तादिच्छानिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः घटानुमितौ सत्त्वेऽपि तत्पक्षकतत्साध्यकत्वविरहाद् भवति चोत्तरोत्पन्नानुमितिरेव तादृशी तदात्मकसिद्ध्यभावविशिष्टत्वस्योक्तसमूहालम्बनेच्छायां सत्त्वात्तद्विरहविशिष्टसिद्ध्यभावस्य घटानुमितिक्षणे सत्त्वान्नानुपपत्तिः। न च यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यव्याप्यवांश्चेति समूहालम्बनपरामर्शः ततः वह्न्यनुमितिद्वयं वह्निव्याप्यानुमितिश्च जायतामितीच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यवांश्चेति समूहालम्बनानुमितिः ततः पर्वतो वह्निमानित्यनुमितिर्न स्यात् तदिच्छानिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्तत्पक्षकतत्साध्यकसमूहालम्बनानुमित्यात्मकसिद्ध्यभावविशिष्टत्वस्य तादृशेच्छायां विरहेण तद्विशिष्टेच्छाविरहविशिष्टसिद्ध्यभावस्य प्रथमानुमितिक्षणेऽसत्त्वादिति वाच्यम्। स्वनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावन्मुख्यविशेष्यताद्वयशून्यतत्पक्षकतत्साध्यकसिद्ध्यभावविशिष्टत्वस्य तद्विशेषणत्वात्, तथा च तादृशसमूहालम्बनानुमितौ तादृशप्रतिबध्यत्वतत्पक्षकतत्साध्यकत्वयोः सत्त्वेऽपि मुख्यविशेष्यताद्वयशून्यत्वविरहा-

पक्षसाध्यभेदेन पक्षताया भेदात्पृथक् पृथगेव कार्यकारणभावः, तथाच यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्रं कारणं, न तु तत्रेच्छानिवेशोऽपि गौरवात् प्रयोजनाभावाच्च, तेन यत्पक्षकयत्साध्यकानुमितौ

---

ननु यत्पक्षकयत्साध्यकानुमितिः कस्यापि न जाता तत्र सिद्ध्यभाव त्वमपेक्ष्य त्वविशिष्टसिद्ध्यभावत्वेन हेतुत्वं गौरवग्रस्तमत आह पक्षसाध्ये त्यादि । यत्रेति । ययोः पक्षसाध्ययोरित्यर्थः । सिद्ध्यभावमात्रमिति । गौरवस्य प्रामाणिकत्वमपाकरोति प्रयोजनेति । इदमुपलक्षणम्—यत्र पक्षे साध्यवत्ता-

---

तादृशसिद्ध्युत्तरोत्पन्न पर्वतो वह्निमानित्यनुमितिरेव तदभावविशिष्टत्वस्य तादिच्छायां प्रथमानुमितिक्षणे सत्त्वात्तद्विरहविशिष्टसिद्ध्यभावस्य तत्र सत्त्वान्नानुपपत्तिः, एवंसति यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यवांश्चेति पर्वते वह्न्यनुमितिः वह्निव्याप्यानुमितिश्च मदिष्टसाधिकेत्येवं स्मरणम्, ततः पर्वते वह्न्यनुमितिर्वह्निव्याप्यानुमितिश्च जायतामितीच्छा ततः समूहालम्बनात्मक—पर्वतो वह्निमान् वह्निव्याप्यधूमवानित्यनुमितिः तदनन्तरमनुमितिप्रसङ्गात् तत्र स्वनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः उक्तसमूहालम्बनानुमितौ मुख्यविशेष्यताद्वयशून्यत्वाभावाद्, भवति च यादृशी सिद्धिः तदभावनिष्ठत्वस्य तादृशेच्छायां सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावस्योक्तानुमितिक्षणे सत्त्वादतो मुख्यविशेष्यताद्वयशून्यत्वं विहाय स्वनिष्ठप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतावत्सिद्ध्यभावविशिष्टत्वस्य स्वस्मिन्विशेषणत्वमावश्यकम्, तथाचोक्तस्थले तादृशयत्किञ्चित्प्रतिबन्धकतावत्समूहालम्बनानुमितिविशिष्टत्वस्य स्वस्मिन्विरहान्नोक्तानुपपत्तिः, एवं चोक्तदोषस्य यत्किञ्चित्त्वनिवेशेनैव वारणसम्भवात् तत्पक्षकतत्साध्यकत्वानिवेशोपि नादरणीय इति । न चैवंसति यत्र पर्वतो वह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यव्याप्यवांश्चेति परामर्शः ततः पर्वते वह्न्यनुमितिर्जायतामितीच्छा स्वाव्यवहितदशमक्षणवृत्तिपर्वते वह्निव्याप्यानुमितिश्च जायतामितीच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यवानितिसमूहालम्बनानुमितिः तदुत्तरमनुमितिप्रसङ्गः, स्वनिष्ठप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतावत्स्वाव्यवहितदशमक्षणवृत्त्यनुमित्यात्मकसिद्ध्यभावविशिष्टत्वस्य तदिच्छायां सत्त्वेन तद्विरहविशिष्टसिद्ध्यभावस्य समूहालम्बनानुमितिक्षणे सत्त्वादिति वाच्यम् । स्वनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्स्वतृतीयक्षणवृत्तिसिद्ध्यभावविशिष्टत्वस्य स्वस्मिन्विशेषणत्वोपगमान्नोक्तदोषः । स्वनिष्ठप्रतिबध्यतानिरूपितयत्किञ्चित्प्रतिबन्धकतावत्स्वतृतीयक्षणवृत्तिर्वा उत्पन्नानुमित्यात्मकसिद्धिस्तदभावविशिष्टत्वस्योत्पन्नानुमितिक्षणे तादृशेच्छायां विरहेण तद्विरहविशिष्टसिद्ध्यभावस्य तत्रासत्त्वादिति ध्येयम् ।

दीधितौ पक्षसाध्यभेदेन—पक्षतावच्छेदकसाध्यतावच्छेदकादिभेदेनेत्यर्थः । पक्षताया भेदादिति । सिद्धिपदार्थस्य प्रकृतपक्षतावच्छेदकादिघटितत्वादिति भावः । सिद्ध्यनन्तरं कदाप्यनुमितिर्न जातेति । सिद्धिकाले परामर्शादिसत्त्वे अनुमितस्तया असमवधानादिति भावः । प्रयोजनेतीति । सिद्धिकालीनानुमित्यनरोधेनैव विशिष्टसिद्ध्यभावस्य पक्षतात्वोपगमादिति भावः ।

कस्यापीच्छा न जाता तत्रोक्तिसाधारण्यमात्रसम्पादनायेश्वरेच्छानिवेशना-
यासो नोपादेयः ।

यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमिति-
कभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायास्तस्याः अभावः पक्षता ।

---

ज्ञानोत्तरं कदाप्यनुमितिर्न जाता तत्र साध्यवत्ताज्ञानाभावमात्रं कारणं न
तु निश्चयत्वमपि निवेश्यम्, एवं यत्रैकविधानुमितिस्तस्या उत्तरमेवानुमितिः
तत्र तादृशानुमितिरेव पक्षता तथा यत्पक्षकसाध्यकपरामर्शकालीन-
सिद्धिदशायामवश्यमनुमितिस्तत्र पक्षता नानुमितिहेतुरित्यपि द्रष्टव्यम् ।
यत्तु यत्पक्षकसाध्यकानुमितिस्थले परामर्शदशायां नियमतः सिद्ध्य-
भावस्तत्र सिद्ध्यभावोऽपि न हेतुरिति । तन्मन्दम् । तादृशस्थले मानाभा-
वात् । योगिनामपि परामर्शदशायामवश्यं सिद्धिसम्भवेन तदभावस्या-
हेतुत्वे तेषां सर्वदैवानुमितिप्रसङ्गादिति ध्येयम् । मिश्रमतमाक्षिपन्नाह
तेनेति । सर्वत्र पक्षतायामनुमित्सानिवेशस्य निष्प्रयोजनत्वेनेत्यर्थः । घा-
त्वर्थसमानकर्तृकेच्छायामेव सनो विधानादनुमितिगोचराया अपि ईश्व-
रेच्छाया अनुमातृनिष्ठत्वाभावेन सिषाधयिषाशब्देन बोधयितुमशक्यत्वा-
दायास इत्युक्तम् ।

सिषाधयिषानाशेऽपि द्वित्रिक्षणाभ्यन्तरे सिद्धिसत्त्वेऽनुमितेः सम्पा-
दकं सार्वभौमोक्तप्रकारमुपन्यस्यति यत्त्विति । सिषाधयिषाविरहविशिष्टो
यः स्वक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिको यस्तद्भिन्ना या
सिषाधयिषाविरहविशिष्टा सिद्धिः तस्या अभावः पक्षतेत्यर्थः ।

अत्राऽनुमित्सानाशकालोत्पन्नलिङ्गज्ञानात्मकपरामर्शादनुमित्युत्पत्त्यर्थम्-
भिन्नान्तं सिद्धिविशेषणम् । सिद्धिमात्रस्यैव प्रायशः स्वक्षणोत्तरयत्किञ्चि-

---

दीधितौ सिषाधयिषाविरहेति । सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तर-
क्षणे उत्पत्तिर्यस्याः असौ सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिका तादृशोत्प-
त्तिकानुमितिर्यस्याः सा तादृशोत्पत्तिकानुमितिका, एवंभूता या व्यक्तिः, तत्तद्व्यक्तित्वावच्छि-
न्नप्रतियोगिताकभेदकूटविशिष्टा अथ च सिषाधयिषाविरहविशिष्टा या सिद्धिः तस्या अभावः
पक्षतेत्यर्थः । यद्यपि तादृशानुमितिर्यस्याः इति व्युत्पत्त्या यत्पदेनाऽन्यव्यक्तेरपि लाभः स-
म्भवति, तथापि स्वस्वघटितबहुव्रीहौ स्वस्यैव यत्पदोपस्थाप्यत्वनियमात् सिद्धिव्यक्तेरेव य-
त्पदेन लाभ इति भावः । अनुमित्सानाशकालोत्पन्नेति । यत्रादौ अनुमित्सा ततो
व्याप्तिस्मरणम् तदनन्तरकालोत्पन्नेत्यर्थः । अनुमित्युत्पत्त्यर्थमिति । अन्यथा पराम-
र्शोत्पत्तिक्षणे सिषाधयिषाविरहविशिष्टसिद्धिरूपप्रतिबन्धकसत्त्वादनुमितिर्न स्यादिति भावः ।
भिन्नान्तमिति । तथाच तादृशसिद्धेः सिषाधयिषाविरहविशिष्टो यः स्वक्षणः परामर्शो-
त्पत्तिक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकस्तस्मा तादृशसिद्धिभिन्नसिद्ध्यभावरूपपक्ष-

त्क्षणोत्पत्तिकानुमितिकतया तद्भिन्नायाश्चरमसिद्धेरभावस्येदानीं सिद्ध्या-
त्मकपरामर्शस्थलेऽपि सत्त्वादनुमित्यापत्तिरत उक्तम् अव्यवहितेति ।

सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरत्वं च सिषाधयिषा
विरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तादृश
स्वसमयध्वंसाधिकरणत्वम् । तत्र स्वसमयध्वंसाधिकरणकालध्वंसानधि-
करणत्वे सति तादृशसमयध्वंसाधिकरणत्वमित्युक्तौ यत्र क्रमेणाऽनुमि-
त्सासिद्धिपरामर्शानुमितयः तत्र सिद्ध्युत्पत्तिकालपर्यन्तमनुमित्सापूर्व
कालोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेऽपि पक्षताविरहप्रसङ्गः,
सिद्ध्यधिकरणतादृशोपाधेरनुमित्सापूर्वकालाद्यवच्छेदेन सिषाधयिषाविर-
हविशिष्टतयाऽनुमित्साविरहाविशिष्टनिरुक्तस्वसमयाव्यवहितोत्तरत्वस्य प-
रामर्शक्षणे एव पर्यवसानात्, तदानीं चानुमित्यनुत्पत्त्या तात्सिद्धेरपि नि

---

तासत्त्वाच्चानुपपत्तिः । सिषाधयिषाविरहविशिष्टत्वं स्वक्षणस्य विशेषणम् अग्रे स्फुटीभविष्यति । स्वक्षणेत्यस्य स्वाधिकरण(१)क्षणेत्यर्थः । स्वपदेन भेदप्रतियोगिनी सिद्धिर्ग्राह्या । स्वाधिकरणक्षणध्वंसाधिकरणकालध्वंसानाधिकरणत्वार्थकाऽव्यवहितपदं सार्थकयति-सिद्धिमात्रस्यैवेति । अव्यवहितेतीति । एवं स्वपूर्वसकललक्षणानामेव स्वाधिकरणक्षणध्वंसाधिकरणका-लध्वंसानधिकरणत्वरूपस्वक्षणाव्यवहितत्वाक्रान्ततया अनादौ संसारे सर्वासामेव सिद्धीनां पूर्वं स्वाधिकरणेऽनुमित्युत्पत्त्या सर्वा एव सिद्धयोऽनुमित्युत्पत्तिकाः, सिषाधयिषोत्तरोत्पन्नासिद्धिरेव सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितक्षणोत्पन्नानुमितिकाभिन्ना, तस्याश्च सिषाधयिषा विरहविशिष्टत्वाभावादप्रसिद्धिरतः उत्तरेति, स्वाधिकरणक्षणध्वंसाधिकरणार्थकम् । तदेवाऽऽह सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरत्वं चेति । सिषाधयिषाविर-हविशिष्टस्वक्षणेत्यत्र क्षणपदस्य व्यावृत्तिमाह तत्रेति । परामर्शक्षणे एव पर्यवसानादिति । न च सिषाधयिषाविरहविशिष्टस्वसमयपदेन परामर्शक्षणस्यापि धर्तुं शक्यतया तद्ध्वंसाधिकरणसमयध्वंसानधिकरणत्वस्यानुमितिक्षणेऽपि सत्त्वात्तस्याऽव्यवहितोत्तरत्वं सुल-भमेवेति वाच्यम् । सिषाधयिषाविरहविशिष्टस्वसमयीभूतसिद्धिपर्यन्तस्थायि स्थूलकालध्वं-साधिकरणत्वस्याऽनुमितिक्षणे सत्त्वेन तत्राऽधिकरणत्वसामान्याभावाऽसम्भवादिति ।

अथोक्तस्थले परामर्शक्षणे विशेषणदलसत्त्वेऽपि तादृशस्वक्षणध्वंसाधिकरणत्वरूपविशे-ष्यदलाऽसत्त्वात् "स्वसमयाऽव्यवहितोत्तरत्वस्य परामर्शक्षणे एव पर्यवसाना-दिति" ग्रन्थासङ्गतिः । न च विशेष्यदले क्षणत्वनिवेशे प्रयोजनाभाव इति वाच्यम् । तस्य वक्ष्यमाणत्वादिति चेन्न ।

विशेष्यदलस्य यथाश्रुताभिप्रायेण तत्सङ्गतेः, प्रथमक्षणपदस्य तत्र व्यावृत्तेरक्षतेः ।

---

(१) सर्वेषामेव क्षणानां सिषाधयिषाविरहविशिष्टपूर्वपूर्वक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणतया तादृशध्वंसानधिकरणत्वरूपाऽव्यवहितत्वाभयक्षणाऽप्रसिद्धिरतः सिषाधयिषाविरहविशिष्टक्षणे स्वाधिकरणत्वनिवेशः ।

त्त्कानुमितिकभिन्नतया अनुमितेः प्रतिबन्धकत्वापत्तेः प्रथमक्षणपदम् । तथा च तत्र सिषाधयिषाविरहविशिष्टः स्वक्षणः परामर्शोत्पत्तिक्षण एवेति त-दव्यवहितोत्तरोत्पत्तिकानुमितिकत्वान्न सा सिद्धिर्विरोधिनीत्यदोषः ।

---

प्रथमक्षणपदमिति । नन्वत्र क्षणत्वं यावद्ध्वंसविशिष्टत्वम्, ध्वंसत्वं च जन्यत्वे सति अभावत्वम्, जन्यत्वं जनकतानिरूपितत्वम्, जनकत्वं च कार्याव्यवहितप्राक्क्षणावच्छे-देन कार्यसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वरूपम्, एवं चैतादृशनिवेशापेक्षया लाघवेन सिषाधयिषाविरहविशिष्टस्वसमयध्वंसाधिकरणकालध्वंसानधिकरणत्वे सतीत्यत्र स्वसमये सि-षाधयिषाविरहवैशिष्ट्यं स्वप्रतियोग्यनधिकरणत्वसम्बन्धेन निवेश्यम्, तावतैव सिषाधयिषापू-र्वोत्पन्नासिद्ध्युत्पत्तिपर्यन्तस्थायिप्रहरात्मकसमये तादृशसम्बन्धेन सिषाधयिषाविरहवैशिष्ट्य-विरहेणोक्तदोषवारणसम्भवे क्षणत्वनिवेशो विफल इति चेन्न ।

अदृश्याऽव्याप्यवृत्तित्वमते उक्तप्रहरात्मकसमये स्वप्रतियोग्यधिकरणतावच्छेदकसत्त्वेन तेन सम्बन्धेन सिषाधयिषाविरहवैशिष्ट्यसत्त्वाज्जगदीशोक्तदोषतादवस्थ्यमेव । न च स्वसमये सि-षाधयिषाविरहवैशिष्ट्यं निरवच्छिन्नस्वरूपसम्बन्धेन निवेश्यम्, तथा च सिषाधयिषापूर्वदण्डा-वच्छेदेनैव समये तद्विरहवैशिष्ट्यं न तु निरवच्छिन्नस्वरूपेणेत्यतो नोक्तदोष इति वाच्यम् । एतद्दूषणरसेनैव क्षणिकान्यशब्दानामभिधारकस्य वा क्षणत्वमते इत्युक्तत्वात्, निरवच्छिन्नस्व-रूपेण निवेशे गौरवाच्च ।

वस्तुतस्तु पदार्थमात्रस्य द्विक्षणस्थायित्वमते यत्रानुमित्सासिद्धिपरामर्शानुमितयः तत्र परामर्शक्षणे उत्पन्नसुखात्मकोपाधेरनुमितिक्षणपर्यन्तस्थायित्वेनाऽनुमितिर्न स्यात्, स्वप्रतियो-ग्यनधिकरणत्वसम्बन्धेन निरवच्छिन्नस्वरूपसम्बन्धेन वा सिषाधयिषाविरहविशिष्टो यः परा-मर्शक्षणोत्पन्नसुखात्मकोपाधिः तद्ध्वंसाधिकरणो योऽनुमित्युत्तरक्षणस्तद्ध्वंसानधिकरणत्वतादृ-शसमयध्वंसाधिकरणत्वयोरनुमित्युत्तरक्षणे एव सत्त्वेन तादृशक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः परामर्शक्षणे सत्त्वादतः प्रथमक्षणपदम्, तथा च तादृशोपाधेः क्षणत्वाभावादिति दिक् ।

अथात्र सिद्ध्युत्पत्तिकालपर्यन्तस्थायिस्थूलकालस्यापि सिद्धिक्षणावच्छेदेन क्षणत्ववत्तया तद्दोषतादवस्थ्यमिति चेन्न ।

यदुपाध्यवच्छेदेन स्वाधिकरणक्षणत्वं तदवच्छेदेन सिषाधयिषाविरहवत्त्वस्य विवक्षित-त्वात्, तथा च सिषाधयिषाविरहाधिकरणतावच्छेदकोपाध्यवच्छिन्नस्वाधिकरणक्षणतावत्का-लध्वंसाधिकरणेत्यादिक्रमेणाव्यवहितत्वनिवेशे तात्पर्यम् । एतेन तादृशस्थूलकालस्यापि यावद्ध्वंस-वत्तादशायां क्षणत्वादुक्तदोषतादवस्थ्यमिति निरस्तम् । उक्तस्थले एव सिद्ध्युत्पत्तिक्षणे एका स्थूलकालोपाधिरुत्पन्ना तस्या अन्तिमक्षणे एकं सुखमुत्पन्नं तस्य द्वितीयक्षणे इच्छोत्पत्तिः सुख-निष्ठसिषाधयिषाविरहाधिकरणतावच्छेदकस्थूलकालरूपोपाध्यवच्छिन्नक्षणत्वस्य सिद्ध्युत्पत्ति-पर्यन्तस्यापि स्थूलकालेऽपि सत्त्वात्तद्दोषतादवस्थ्यम्, अतः सिषाधयिषाविरहाधिकरणताविशि-ष्टक्षणतावत्कालध्वंसस्यैवंरीत्या अव्यवहितोत्तरत्वं वाच्यम् । वै० स्वावच्छेदकीभूतोपाध्य-वच्छिन्नत्वसामानाधिकरण्योभयसम्बन्धेन । सामानाधिकरण्याभावादेव न दोषः ।

नचात्र स्वकाले सिषाधयिषाविरहविशिष्टसिषाधयिषात्मकप्रतियोग्यनधिकरणत्वनिवेशे-नैवोक्तस्थले पक्षतासम्भवे स्ववृत्तियावद्ध्वंसविशिष्टत्वरूपक्षणत्वप्रवेशे गौरवमिति वाच्यम् । भेदस्याऽव्याप्यवृत्तित्वमते प्रतियोग्यनधिकरणत्वस्यापि तत्र सत्वात् । ननु तथापि निरव-च्छिन्नस्वरूपसम्बन्धेन सिषाधयिषाविरहविशिष्टस्वकालध्वंसाधिकरणत्वमित्येवं निवेश्यं क्षण-त्वनिवेशो व्यर्थः । न च सिषाधयिषाभावः समवायसम्बन्धावच्छिन्नप्रतियोगिताको यदि, स च निरवच्छिन्नस्वरूपसम्बन्धेन सिषाधयिषाकालेऽपि स्वकालेऽस्ति, अतस्ताद्दशसिषाधयिषाऽ-भावस्यावच्छेदकतासम्बन्धेनैव स्वकाले वैशिष्ट्यं वाच्यम् , तदा पूर्वपक्ष एव न सम्भवति । न च ताद्दशाभावनिवेशेऽपि सिद्ध्युत्पत्तिपर्यन्तस्थायिकालस्यावच्छेदकतासम्बन्धेन वैशिष्ट्यं न सम्भवति तदापि क्षणत्वनिवेशो व्यर्थ इति वाच्यम् । पूर्वदण्डविशिष्टसिद्ध्युत्पत्तिपर्यन्त-स्थायिकालस्यापि अवच्छेदकत्वोपगमात् क्षणत्वनिवेशस्यावश्यकत्वादिति वाच्यम् । सम-वायसम्बन्धावच्छिन्नसिषाधयिषाभावनिवेशे निरवच्छिन्नस्वरूपेण वैशिष्ट्यस्य वक्तुमशक्यत्वे-ऽपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाभावस्य ताद्दशसम्बन्धेन वैशिष्ट्यस्य वक्तुं शक्यत्वात् तदानीं पूर्वपक्षसम्भवात् । न चोभयदिशि ताद्दशसम्बन्धेन वैशिष्ट्यनिवेशे सिषाधयिषासिद्धिपरामर्शानुमितयो यत्र क्रमेण, तत्रानुमितिक्षणे ताद्दशसम्बन्धेन सिषाधयि-षाविरहविशिष्टसिद्ध्यधिकरणपरामर्शात्मककालध्वंसाधिकरणसमयध्वंसानधिकरणत्वेऽपि ता-द्दशसमयध्वंसाधिकरणत्वाभावादनुमित्यनुपपत्तिरिति वाच्यम् । ताद्दशसम्बन्धेन सिषाधयि-षाविरहविशिष्टस्वाधिकरणकालवत्कालध्वंसाधिकरणत्वनिवेशात् , तथाचोक्तपरामर्शकालवत्पू-र्वकालध्वंसाधिकरणत्वान्न दोष इति चेन्न ।

विशेष्यदिशि तथा निवेशेऽनुमित्युत्तरमनुमित्यापत्तिः, परामर्शक्षणोत्पन्नानुमित्युत्पत्तिक्षण-पर्यन्तस्थायिकालवत्पूर्वकालध्वंसाधिकरणत्वस्य ताद्दशानधिकरणत्वस्य चानुमित्युत्पत्तिक्षणे सत्वा-त्तदुत्पत्तिकानुमितिकत्वेन स्वात्मकसिद्धेरप्रतिबन्धकत्वात् , अतो विशेष्यदले ताद्दशस्वक्षणध्वंसा-धिकरणत्वनिवेशः, निवेशे यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शः ततः परामर्शात्मकानुमितिः ततोऽनुमितिधर्मिकाऽप्रामाण्यज्ञानं ततोऽनुमितिः, तस्या अप्रामाण्यज्ञानकाले आपत्तिः, निरवच्छि-न्नस्वरूपेण सिषाधयिषाविरहविशिष्टस्वाधिकरणकालः परामर्शात्मकानुमित्युत्पत्तिक्षणोत्पन्न-अप्रामाण्यज्ञानपर्यन्तस्थायीतद्ध्वंसाऽधिकरणसमयध्वंसानधिकरणत्वस्य ताद्दशध्वंसाधिकरण-त्वस्य च द्वितीयानुमित्युत्पत्तिक्षणे सत्वात्तदुत्पत्तिकानुमितिकत्वेन परामर्शात्मकसिद्धेरप्रतिब-न्धकत्वात्ताद्दशकालवद्ध्वंसाधिकरणसमयध्वंसानधिकरणत्वं निवेश्य तद्वारणेऽपि यत्र सिषाध-यिषाचतुर्थक्षणे सिद्ध्यात्मकपरामर्शस्ततोनुमित्यनुपपत्तिः, कुतः ? निरवच्छिन्नस्वरूपेण सिषा-धयिषाविरहविशिष्टस्वाधिकरणकालः सिद्ध्युत्पत्तिपर्यन्तस्थायितत्पूर्वक्षणोत्पन्नकालः ताद्दशका-लवत्तत्पूर्वकालध्वंसाधिकरणसमयध्वंसानधिकरणत्वस्यानुमित्युत्पत्तिक्षणेऽसत्वात्ताद्दशसिद्धेरनु-मितिकभिन्नत्वात् । यदि सिद्धिविशिष्टकालस्य पूर्वकालेऽधिकरणत्वं न स्वीक्रियते, तदा नायं दोषः सम्भवति अतः उभयदिशि निरवच्छिन्नस्वरूपेण वैशिष्ट्यनिवेशे दोषस्थलन्तु क्रियैव कालः सा च त्रिक्षणावस्थायिनीति मते यत्र सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शः ततो नुमितिः पुनः सिषाधयिषा तत्र निरवच्छिन्नस्वरूपेण सिषाधयिषाविरहवैशिष्ट्यस्य कालेऽप्रसि-

**सत्यन्तमात्रोक्तौ च सिद्धिमात्रस्यैव प्रायशः स्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणीभूतस्वपूर्वकालोत्पत्तिकानुमितिकतया तद्भिन्नसिद्धेरप्रसिद्धिः स्यादतः स्वसमयध्वंसाधिकरणत्वदलम् ।**

---

द्ध्याऽव्याप्तिरिति विभावनीयम् ।

श्रीचरणास्तु स्वव्याप्तियावद्ध्वंसविशिष्टकालस्यैव क्षणत्वेन तत्र निरवच्छिन्नस्वरूपेण सिषाधयिषाविरहवैशिष्ट्यासम्भवादिति प्राहुः ।

प्रायश इति । नचाऽत्र प्रायश इत्ययुक्तमिति वाच्यम् । सिषाधयिषाघटितसिद्धेरेव सिषाधयिषाविरहविशिष्टस्वक्षणाऽप्रसिद्ध्या स्वपदेनोपादातुमशक्यतया तदन्यत्वमस्तीत्यभिप्रायकत्वात्, यादृशसिद्धेः पूर्वं यत्पुरुषस्य कदाप्यनुमितिर्न जाता "तादृशाङ्कुरविशेष" सिद्धेस्तदन्यत्वसम्भवाच्च । न च तथापि घटितसिद्धौ तदन्य"सिद्धि"त्वप्रसिद्ध्या तदन्यसिद्ध्यप्रसिद्ध्यभिधानमयुक्तमिति वाच्यम् । तदन्यसिद्धेरप्रसिद्धिरित्यनेन पक्षताघटकसिद्धेरेवोक्तत्वात्, तथाच घटितसिद्धौ तदन्यत्वप्रसिद्धावपि तस्याः सिषाधयिषाविशिष्टतया सिषाधयिषाविरहविशिष्टायाः तदन्यसिद्धेरप्रसिद्धत्वाज्ज्ञानुपपत्तिरिति ध्येयम्(१) ।

स्वसमयध्वंसाधिकरणत्वदलमिति । तादृशस्वसमयध्वंसाधिकरणत्वदलमित्यर्थः अथात्र सिषाधयिषाविरहविशिष्टार्थकतादृशपदं व्यर्थमिति चेन्न ।

यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्ध्यात्मकपरामर्शाऽप्रामाण्यज्ञानास्कन्दितानुमितयः तत्र तदनन्तरमनुमितिवारणार्थं तत्, अन्यथा तत्रत्यानुमितिपूर्ववर्तिपरामर्शात्मकसिद्धेः सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणीभूतो यः स्वसमयध्वंसाधिकरणोऽनुमितिक्षणः तदुत्पत्तिकानुमितिकतया तस्या अप्रतिबन्धकत्वेनानुमित्युत्तरमनुमितेर्वारणाऽसम्भवात् । न च तत्रानुमितेरेव स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नतया न तदनन्तरमनुमित्यापत्तिरिति वाच्यम् । तादृशानुमितेरप्रामाण्यग्रहास्कन्दितत्वेन प्रतिबन्धकत्वाऽयोगात् । सिषाधयिषाविरहवैशिष्ट्यस्योपादाने च सिषाधयिषाविरहविशिष्टस्वकालोऽनुमित्युत्पत्तिकाल एव तद्ध्वंसाधिकरणत्वस्य चाऽनुमित्युत्पत्तिकाले विरहात् तादृशपरामर्शात्मकसिद्धिव्यक्तेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नायाः सिषाधयिषाविरहविशिष्टायाः अनुमित्युत्पत्तिक्षणे सत्त्वेन तत्राऽनुमित्युत्तरक्षणे नानुमित्यापत्तिः । एवं च जग

---

(१) केचित्तु यत्रानुमित्यात्मसिद्ध्यात्मकपरामर्शानुमितयो जाताः तत्र सिद्धिक्षणे सिषाधयिषाविरहविशिष्टत्वविरहेण स्वपदेन धर्तुमशक्यत्वात् अनुमितिकाभिन्ना तत्रत्यासिद्धिरत्र भवति, अतः प्रायश-पदोपादानम् । न च तत्रत्यासिद्धेर्यदि अनुमितिकभिन्नत्वं तदा "प्रायशः सिद्धिमात्रस्यैवानुमितिकतया तद्भिन्नसिद्ध्यप्रसिद्धिः स्यादि"त्यादिग्रन्थाऽसङ्गतिः स्यादिति वाच्यम् । तद्भिन्नसिद्ध्यप्रसिद्धिः स्यादित्यस्य सिषाधयिषाविरहविशिष्टतद्भिन्नसिद्ध्यप्रसिद्धिः स्यादित्यर्थकत्वात् ।

अथवा यस्य यत्पक्षकयत्साध्यकसिषाधयिषासिद्ध्यात्मकपरामर्शादेकैवानुमितिर्जायते तत्रत्यासिद्धेरेव भिन्नत्वात् स्वपूर्वक्षणोत्पन्नस्वसमानाधिकरणतत्पक्षकतत्साध्यकानुमितेरप्रसिद्धत्वात्, अतःप्रायशःपदम् । नचाऽप्रसिद्धिः स्यादिति ग्रन्थाऽसङ्गतिरिति वाच्यम् । प्रायश इत्यस्याऽप्रसिद्धावेवाऽन्वयात्, तथाच तत्रैव नाऽप्रसिद्धिरित्याहुः ।

दीशोक्तादृशस्वसमयध्वंसाधिकरणत्वमित्यत्र समयपदं क्षणपरमेव वक्तव्यम्, अन्यथा ता-दृशस्थले एव सिषाधयिषाविरहविशिष्टो यः स्वक्षणः अनुमित्युत्पत्तिक्षण एव तद्ध्वंसाधिकरण-कालध्वंसानधिकरणत्वस्य सिध्युत्पत्तिकालपर्यन्तस्थायिस्थूलकालोपाधेरपि सिषाधयिषापूर्वद-ण्डाद्यवच्छेदेन सिषाधयिषाविरहविशिष्टतया तद्ध्वंसाधिकरणत्वस्य चाऽनुमित्युत्पत्तिक्षणे स-त्त्वात्तादृशसिद्धेः प्रतिबन्धकत्वं न स्यादिति।

न चाऽप्रामाण्यज्ञानस्य तत्तद्व्यक्तित्वेनैवोत्तेजकतया एतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वाऽ-स्वीकारेऽनुमित्यात्मकसिद्धेरेव प्रतिबन्धकतया न तादृशानुमित्युत्तरमनुमित्यापत्तिरिति वाच्यम्। तदुत्तरं परामर्शोत्पत्तौ तदव्यवहितोत्तरक्षणेऽनुमित्यर्थं तादृशाऽप्रामाण्यज्ञानव्यक्तेरप्युत्तेजक-त्वावश्यकत्वात्।

अथ तथापि यत्र सिषाधयिषानाशकाले सिद्ध्यात्मकपरामर्शः ततोऽप्रामाण्यज्ञानास्कन्दि-तानुमितिः तदनन्तरमनुमित्यापत्तिस्तादृशपदोपादानेऽपि दुर्वारैव, सिद्ध्यात्मकपरामर्शस्य ता-दृशक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकतयाऽप्रामाण्यज्ञानानास्कन्दिततदन्यसिद्धेरभावस्याऽनुमिति-क्षणेऽपि सत्त्वात्, तत्रेष्टापत्तौ अत्रापीष्टापत्तिसम्भवात्, यदि चाऽप्रामाण्यज्ञानव्यक्तिरनुत्ते-जिकैव तादृशानुमित्युत्तरपरामर्शोत्पादेऽपि क्षणैकविलम्बेनैवाऽनुमितिस्वीकारादित्युच्यते, तदा मयापि तुल्ययुक्त्या प्रकृतस्थले तादृशाऽप्रामाण्यज्ञानमनुत्तेजकमेव तदुत्तरं परामर्शान्तरे क्ष-णैकविलम्बेनैवाऽनुमितिस्वीकारादिति चेद्।

अत्राहुः—तादृशस्थले तत्परामर्शविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वोपगमादेव ना-नुमित्यापत्तिः, परामर्शान्तरस्वीकारे तु परामर्शपूर्वमप्रामाण्यज्ञाने तद्वैशिष्ट्याभावात्, परा-मर्शान्तरक्षणे च परामर्शविशिष्टाप्रामाण्यज्ञानसत्त्वादेव पक्षतासत्त्वादुत्तरक्षणेऽनुमितिः सम्भव-ति। नचैवं सति यत्र पूर्वोक्तसिषाधयिषासिद्ध्यात्मकपरामर्शोऽप्रामाण्यज्ञानास्कन्दितानुमि-तयः ततः परामर्शान्तरोत्पत्त्यानुमितिः तत्रापि तत्परामर्शविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्ते-जकत्वोपगमादेव अप्रामाण्यज्ञानास्कन्दितानुमित्यव्यवहितोत्तरक्षणेऽनुमित्यापत्तिवारणसम्भ-वात् तादृशपदस्य व्यावृत्तिर्न सम्भवतीति वाच्यम्। तादृशतादृशस्थलीयानन्ततत्तत्परामर्श-विशिष्टतत्तदप्रामाण्यज्ञानव्यक्तित्वेनिगमनाविरहेण तत्तदप्रामाण्यज्ञानविशिष्टतत्तत्परामर्शव्य-क्तेवोत्तेजकत्वे महागौरवापत्तेः, तदपेक्षयोत्तरत्वप्रतियोगिनिविष्टस्वक्षणे सिषाधयिषाविरहवैशि-ष्ट्यनिवेशः। यत्र सिषाधयिषानाशकाले सिद्ध्यात्मकपरामर्शादप्रामाण्यज्ञानास्कन्दितानुमितिः ततः परामर्शान्तरं ततोऽनुमितिस्तत्र परामर्शोत्पत्तिक्षणेऽनुमित्यापत्तिवारणार्थं तत्रागत्या तत्तत्परामर्शविशिष्टतत्तदप्रामाण्यज्ञानव्यक्तेः तत्तदप्रामाण्यज्ञानविशिष्टतत्तत्परामर्शव्यक्तेर्वोत्ते-जकत्वं स्वीकरणीयम्।

परेतु सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणसमयध्वंसाधिकरणत्वाभावविशिष्टत्वमे-वाव्यवहितोत्तरत्वम्, वै० स्वाश्रयत्वस्वप्रतियोग्यधिकरणतानिरूपकीभूतध्वंसप्रतियोगित्वोभ-यसम्बन्धेन, सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितत्वविशिष्टो यः क्षणः तदुत्पत्तिकानुमि-तिकभिन्नत्वमेव निवेशनीयम्, तथाच सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकाल एव निरुक्तोभयसम्बन्धेन तादृशाव्यवहितत्वविशिष्टः, एतल्लाभार्थमेव तादृशसमयध्वंसाधिकरण इ-त्युक्तम्, तथाच तादृशसमयध्वंसाधिकरणसिद्धिद्वितीयक्षणेऽनुमितिप्रसङ्गः, तथाहि—सिद्धिपूर्वे-

क्षणस्यापि स्वाश्रयत्वसम्बन्धेन तादृशाव्यवहितत्वविशिष्टतया तत्तत्क्षणोत्पत्तिकानुमितिकत्वेन सिद्धेः प्रतिबन्धकत्वायोगात् । अतः स्वप्रतियोग्यधिकरणतानिरूपकध्वंसप्रतियोगित्वानुधावनम् सिद्धिपूर्वक्षणस्य निरुक्तोभयसम्बन्धेन तादृशाव्यवहितोत्तरत्ववैशिष्ट्यविरहात् । स्वाश्रयत्वा-नुक्तौ निरुक्तस्थलीयसिद्ध्युत्तरक्षणमात्रस्यापि तादृशसम्बन्धेन तादृशाव्यवहितत्वविशिष्टतया तत्क्षणोत्पत्तिकानुमितिकत्वेन सिद्धेः प्रतिबन्धकत्वायोगात्तद्भिन्नसिद्धेरभावस्य परामर्शक्षणे स-त्वाद् द्वितीयक्षणेऽनुमित्यापत्तिरतः स्वाश्रयत्वानुधावनम् । सिद्ध्युत्तरक्षणे । स्वाश्रयत्वविरहात् स्वपद तादृशक्षणध्वंसाधिकरणत्वाभावपरमित्याहुः ।

अथ यदि समनियताभावस्यैक्यस्वीकारः तदा यत्र केवलपरामर्शादेवानुमितिः तत्रानु-मितिद्वितीयक्षणध्वंसविशिष्टानुमित्यात्मकसिद्ध्युत्पत्तिक्षणध्वंसाधिकरणत्वाभावस्य सामाना-धिकरण्यसम्बन्धेनाऽनुमित्युत्पत्तिक्षणध्वंसविशिष्टो यो द्वितीयक्षणध्वंसस्तदधिकरणत्वाभावरू-पतया अनुमित्युत्पत्तिक्षणे स्वप्रतियोग्यधिकरणतानिरूपकध्वंसप्रतियोगित्वस्वाश्रयत्वोभयोः सत्वात्तदुत्पत्तिकानुमितिकत्वेन निरुक्तसिद्धेरप्रतिबन्धकत्वात्तद्भिन्नसिद्ध्यभावस्यानुमित्युत्पत्ति-क्षणे सत्वात्तदुत्तरमनुमित्यापत्तिरित्यादि दूषणं द्रष्टव्यमिति ।

श्रीगुरुचरणास्तु सिषाधयिषाविरहविशिष्टस्वक्षणविशिष्टो यः क्षणः स एवाव्यवहि-तोत्तरक्षणः, वै० स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वस्वध्वंसाधिकरणत्वोभयसम्बन्धेन, इत्यनुगमे सिषाधयिषाविरहस्यैकधैव निवेशेनोभयथा तन्निवेशफलानुसन्धानस्य वायसदश-नानुसन्धानसमत्वादिति प्राहुः(१) ।

---

(१) वस्तुतः तादृशपदानुपादाने यत्र साध्यानुमितिः साध्यव्याप्यानुमितिश्च जायतामितीच्छा ततः सा-ध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवानित्याकारकसिद्ध्यात्मकपरामर्शः तृतीयक्षणे साध्यवान् साध्यव्या-प्यवानित्यनुमितिः साध्यानुमित्यंशेऽप्रामाण्यज्ञानं, ततः क्षणावलम्बन पञ्चमक्षणेऽनुमितिः, तत्र चतुर्थ-क्षणेऽनुमित्यापत्तेः, सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वसमयध्वंसा-धिकरणत्वरूपस्वक्षणाव्यवहितोत्तरत्वस्य पूर्वानुमितिक्षणे सत्त्वेन तादृशसिद्धेः स्वक्षणाव्यवहितोत्तरक्षणोत्प-त्तिकानुमितिकतया तद्भिन्नसिद्धेः सिषाधयिषाविरहविशिष्टाया अभावस्य तृतीयक्षणे सत्त्वात्, अप्रामाण्य-ज्ञानस्यानुत्तेजकत्वे पञ्चमक्षणेऽप्यनुमित्यनुत्पत्तेरिति ।

अथवा यत्र सिषाधयिषा ततो द्वितीयक्षणे सिद्ध्यात्मकपरामर्शः तृतीयक्षणेऽप्रामाण्यज्ञानास्कन्दितानुमि-तिः ततश्चतुर्थक्षणे परामर्शान्तरमपेक्ष्य पञ्चमक्षणेऽनुमितिः तत्र परामर्शान्तरक्षणे अनुमित्यापत्तिः, सिषा-धयिषाविरहवि० क्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वस्य स्वसमयपदेन सिद्ध्यात्मकपरामर्शसमयस्तद्-ध्वंसाधिकरणत्वस्याप्रामाण्यज्ञानास्कन्दितानुमितिक्षणे सत्त्वेन तादृशक्षणोत्पन्नानुमितिकैव सा तादृशसिद्धि-भिन्नसिद्ध्यभावस्य तृतीयक्षणे सत्त्वात् तत्रत्यानुमित्यात्मकसिद्धेस्तादृशानुमितिकाभिन्नत्वेऽपि अप्रामाण्यज्ञाना-स्कन्दितत्वेनाऽविरोधात् । तादृशाप्रामाण्यज्ञानस्यानुत्तेजकत्वे पञ्चमक्षणेऽनुमित्यनापत्तेः तादृशाऽनुमित्या-त्मकासिद्धेर्विरोधित्वात्, एवं चोक्तस्थलेऽप्यप्रामाण्यज्ञानाभावविशिष्टासिद्धिविरहादनुमित्यनन्तरमनुमित्यापत्ति-वारणाय तादृशपदम् ।

ननु यत्र प्रथमक्षणे सिषाधयिषा ततो द्वितीयक्षणे व्याप्तिस्मरणम् तृतीयक्षणे सिद्ध्यात्मकपरामर्शः चतुर्थक्षणे अप्रामाण्यज्ञानास्कन्दितानुमितिः पञ्चमक्षणे परामर्शान्तरं षष्ठक्षणे अनुमितिः तत्र सिषाधयिषा-विरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावस्य तच्चतुर्थक्षणे सत्त्वेन द्वितीयसिषाध-यिषाविरहपदोपादानेपि यद्यपि पञ्चमक्षणेऽनुमित्यापत्त्या तादृशाऽप्रामाण्यज्ञानाभावं प्रतिबन्धकताया-मप्रवेश्य क्षणैकावलम्बेन षष्ठमक्षणेऽनुमितिस्वीकारस्यावश्यकत्ववदत्रापि तादृशाप्रामाण्यज्ञानाभावं

प्रतिबन्धकतावच्छेदककुक्षौ अप्रवेश्य क्षणैकविलम्बेनाऽनुमितिस्वीकारान्न तत्रापत्तिः संभवतीति चेत् ।

सत्यम् । पूर्वस्थले परामर्शक्षणवृत्तित्वविशिष्टाऽप्रामाण्यज्ञानस्यैवोत्तेजकत्वेनैव पत्त्यसम्भवात् क्षणैकविलम्बेनाऽनुमितिस्वीकारे मानाभावात्, अनुभवविरोधाच्चेति । नचास्माकमपि तत्क्षणवृत्तित्वविशिष्टाऽप्रामाण्यज्ञानस्योत्तेजकत्वात्तदापत्तिवारणसम्भव इति वाच्यम् । नानास्थले तत्क्षणवृत्तित्वविशिष्टाप्रामाण्यज्ञानस्योत्तेजकत्वापेक्षया लाघवेन सिषाधयिषाविरहविशेषणदानात्, तत्राऽगत्या तत्क्षणवृत्तित्वविशिष्टाऽप्रामाण्यज्ञानस्योत्तेजकत्वकल्पनात् सिषाधयिषाविरहविशेषदानेऽप्यनिस्तारादिति निपुणतरं विभावनीयम् ।

ननु यत्राऽनुमित्सा ततः सिद्ध्यात्मकपरामर्शः ततोऽप्रामाण्यज्ञानास्कंदितानुमितिः ततः पुनरनुमितिः स्यात्, तत्राऽप्रामाण्यज्ञानक्षणे सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसानधिकरणत्वासिषाधयिषापूर्वमारभ्य सिद्ध्यात्मकपरामर्शपर्यन्तस्थायिस्थूलकालोपाध्यात्मकस्वसमयस्य सिषाधयिषापूर्वदण्डावच्छेदेन सिषाधयिषाविरहविशिष्टतया तद्ध्वंसाधिकरणत्वयोः सत्त्वात्, तादृशानुमितिकैव सा सिद्धिः कथञ्चिदप्रामाण्यज्ञानास्कंदितानुमितेस्तादृशानुमितिकभिन्नत्वेऽपि अप्रामाण्यज्ञानाभावविशिष्टत्वविरहान्न सिद्धिर्विरोधिनीति चेन्न ।

तादृशस्वसमयध्वंसाधिकरणमित्यत्र समयपदस्य क्षणपरत्वात्, तथाच तादृशस्थूलकालोपाधेः क्षणत्वविरहान्न तत्राऽनुमित्यापत्तिः । न च तादृशस्थूलकालोपाधेः स्ववृत्तियावद्ध्वंसविशिष्टतादशायां क्षणत्वे उक्तदोषतादवस्थ्यमिति वाच्यम् । यदुपाध्यवच्छेदेन सिषाधयिषाविरहविशिष्टत्वं तदवच्छेदेन क्षणत्वस्य वक्तव्यत्वात्, तथाच सिषाधयिषापूर्वदण्डात्मकोपाध्यवच्छेदेन तस्य क्षणत्वाभावान्नानुमित्यापत्तिः । न चैतस्य यत्त्वतत्त्वघटितत्वेनाऽननुगम इति वाच्यम् । सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानाधिकरणत्वे सति सिषाधयिषाविरहाधिकरणताविशिष्टस्वक्षणतावत्कालध्वंसाधिकरणीभूतो यः स्वक्षणः तत्क्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायाः तस्या अभावस्य पक्षतात्वात्, वै० स्वावच्छेदकीभूतोपाध्यवच्छिन्नत्वस्वसामानाधिकरण्योभयसं०, तथात्तोक्तस्थले सिषाधयिषाविरहाधिकरणतावच्छेदकीभूता या सिषाधयिषापूर्वदण्डात्मकोपाधिः तदवच्छिन्नत्वस्य परामर्शक्षणतायामभावान्नोक्तापत्तिः । न चाग्रे विवक्षणीयसत्यन्तघटकस्वक्षणानुक्तौ यत्र क्रमेण सिषाधयिषासिद्धिपरामर्शानुमितयस्तत्र पक्षताविरहप्रसङ्गात् तादृशाव्यवहितोत्तरत्वस्य परामर्शक्षणे एव पर्यवसानादिति ग्रन्थाविरोधः स्यात्, परामर्शक्षणे सत्यन्तदलसत्त्वेऽपि विशेष्यदलविरहात्, तथाहि सिद्धिक्षणे सिषाधयिषापूर्वदण्डावच्छेदेन सिषाधयिषाविरहवत्त्वेऽपि सिषाधयिषाविरहाधिकरणताविशिष्टा या क्षणतासमानकालीनसिद्धिक्षणता तस्यां स्वावच्छेदकीभूतोपाध्यवच्छिन्नत्वविरहाद्, अपि तु परामर्शक्षणतैव तादृशी तद्ध्वंसाधिकरणत्वस्यानुमितिक्षणे एव सत्त्वादिति वाच्यम् । तादृशग्रन्थस्य सकृन्निवेशाभिप्रायकत्वात् । तन्निवेशश्च सिषाधयिषाविशिष्टस्वक्षणत्वावच्छिन्ना यावच्छेदकता तद्विशिष्टो यः क्षणः तादृशक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता । वै० स्वनिरूपितध्वंसनिष्ठावच्छेदकतानिरूपिताधिकरणीनिष्ठावच्छेदकतानिरूपितकालनिष्ठावच्छेदकतानिरूपितध्वंसनिष्ठावच्छेदकतानिरूपिता सती अधिकरणतात्वनिष्ठावच्छेदकतानिरूपिताया प्रतियोगिता तन्निरूपकाभाववत्त्व स्वाश्रयप्रतियोगिकध्वंसाधिकरणत्वोभयसं०, तथाच प्रथमक्षणपदानुक्तौ ग्रन्थोक्तदोषतादवस्थ्यमेव, तादृशाव्यवहितोत्तरत्वस्य परामर्शक्षणे एव पर्यवसानादिति ग्रन्थोप्येव सङ्गच्छते । एतेन तादृशपदं व्यर्थमित्यपि समाहितम्, तादृशपदस्यैव सकृन्निवेशाभिप्रायकत्वात् । अत एव सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसाधिकरणत्वाभावविशिष्टो यः क्षणस्तत्क्षणोत्पत्तिकानुमितिकाभिन्नाया सिद्धेः सिषाधयिषाविरहाविशिष्टायास्तस्या अभावः पक्षता, वै० स्वरूपस्वप्रतियोग्यधिकरणतानिरूपकध्वंसप्रतियोगित्वोभयसम्बन्धेन, तावतैव सर्वत्रानुमितिसम्भवात्किं स्वसमयध्वंसाधिकरणत्वदलेन, यत्रानुमित्सासिद्धिपरामर्शानुमितयः तत्र तादृशाधिकरणत्वाभावविशिष्टो योऽनुमितिक्षणः तत्र स्वरूपस्वप्रतियोग्यधिकरणतानिरूपकध्वंसप्रतियोगित्वोभयसत्त्वादित्यपि प्रत्युक्तम् । एतादृशसकृन्निवेशेनैव तादृशध्वंसाधिकरणत्वदलसार्थक्यादिति दिक् ।

केचित्तु अव्यवहितोत्तरत्वदले तादृशपदानुपादाने यत्रानुमित्सासिद्ध्यात्मकपरामर्शस्ततोऽनुमितिस्तत्र सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानाधिकरणत्वे सति स्वसमयध्वंसाधिकरणीभूतक्षणोत्पत्तिकानुमितिकं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नभेद एव निवेशनीयः, स्वत्वस्यानुगतत्वात्, तादृशभेदकू-

यत्र क्रमेण केवलसिद्धिपरामर्शौ तत्रानुमितिप्रसङ्गः, परामर्शपर्यन्तस्थायिनः प्रहरादिरूपस्थूलकालोपाधेर्निरुक्तस्वक्षणाव्यवहितोत्तरतया सिद्धिपूर्वदण्डाद्यवच्छेदेनानुमित्युत्पत्तिमत्तया च सिद्धेः स्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकत्वेनाऽविरोधित्वादतो द्वितीयक्षणपदम् । न

---

स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकेत्यत्र द्वितीयक्षणपदव्यावृत्तिमाह यत्र क्रमेणेति । न चात्र सिषाधयिषाऽव्यवच्छेदककेवलपदमस्तु परन्तु सिद्धिपरामर्शयोः क्रमिकत्वाभिधानमसङ्गतम्, तथाहि यत्र सिद्ध्यात्मकपरामर्शः तत्र तादृशपरामर्शाव्यवहितोत्तरकालपर्यन्तस्थायिस्थूलकालोपाधेरपि स्वक्षणाव्यवहितोत्तरकालोत्पत्तिकतया सिद्धिपूर्वदण्डाद्यवच्छेदेनानुमित्युत्पत्तिमत्तया च सिद्ध्यात्मकपरामर्शव्यक्तेः स्वक्षणाव्यवहितोत्तरकालोत्पत्तिकानुमितिकतया तद्भिन्नसिद्धेरभावस्य सिद्ध्यात्मकपरामर्शदशायां सत्त्वेन क्षणपदानुक्तौ तदुत्तरं चानुमित्यापत्तिसम्भवादिति वाच्यम् । उत्तरोत्तरानुमितिसमये पूर्वपूर्वानुमितेर्वारणार्थं पूर्वपूर्वानुमितिसमये उत्तरोत्तरानुमितिवारणार्थं च तत्तदनुमितिं प्रति तत्तत्परामर्शव्यक्तेरवश्यं विशिष्य हेतुतया तत्स्थलीयकेवलसिद्ध्यात्मकपरामर्शबलादनुमित्यनुत्पादेन तत्परामर्शव्यक्तेरनुमितिं प्रति विशिष्य हेतुत्वाभावाद्विशेषसामग्रीविरहादेव तत्रानुमित्यापत्तिवारणसम्भवात् अतः क्रमेणेत्युक्तम् । क्रमेण सिद्धिपरामर्शस्थले सिद्धिनाशानन्तरमेव तत्परामर्शबलादनुमित्युत्पत्त्या तत्परामर्शव्यक्तेर्विशिष्य हेतुत्वान्न विशेषसामग्रीविरह इति ।

टाविशिष्टा सिषाधयिषाविरहविशिष्टा या सिद्धिस्तदभावस्य पक्षतात्वे स्वपदेन तादृशसिद्धेरपि गृहीतुं शक्यतया तद्भेदनिवेशेन महागौरवम्, तादृशपदोपादाने च तादृशस्वक्षणाव्यवहितोत्तराऽनुमितिद्वितीयक्षणोत्पत्तिकानुमितिकत्वाभावेन तादृशसिद्धिव्यक्तेः स्वपदेनोपादानाऽसम्भवात्, तथाच तद्भेदस्य कूटानन्तर्गतत्वेन महल्लाघवमित्याहुः ।

तन्न । तादृशग्रन्थस्य कूटनिवेशाभिप्रायकत्वाभावात् । तथात्वे "न वा कार्योत्पादादिकं कार्यतावच्छेदककोटौ निविशते "इति ग्रन्थस्याऽसङ्गत्यापत्तेः । यदि तदभिप्रायकस्तदा तादृशपदनिवेशे एव गौरवम् तादृशपदस्य सिषाधयिषाविरहवैशिष्ट्यार्थकतया उक्तस्थले पर्वते वह्न्यनुमितिर्जायतां प्रत्यक्षादिभिन्नं वह्निज्ञानं जायतामित्याद्यनन्तेच्छाऽभावनिवेशात्, तदनिवेशपक्षे तु तादृशसिद्धिव्यक्तिभेदस्यैकस्य निवेशान्न गौरवमिति ध्येयम् ।

अथ अत्रापि इच्छाविरहविशिष्टस्वक्षणध्वंसाधिकरणत्वनिवेशेनैव सामञ्जस्ये सिषाधयिषापर्यन्तनिवेशनमनर्थकम् । न च यत्र प्रथमक्षणे अपेक्षाबुद्ध्यात्मकपरामर्शधर्मिकाऽप्रामाण्यज्ञानमनुमितीच्छाधननाशानं च ततो द्वितीयक्षणे सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शः चतुर्थक्षणे घटेच्छा ततोऽनुमितिः, तत्र चतुर्थक्षणे पक्षतासम्पत्तये सिषाधयिषाविरहोपादानमिति वाच्यम् । द्वित्वप्रत्यक्षान्यथानुपपत्त्याऽपेक्षाबुद्धिकल्पनात्, तादृशापेक्षाबुद्धेर्द्वित्वप्रत्यक्षं प्रत्यसाधारणकारणतया तत्सत्त्वे द्वित्वप्रत्यक्षमेव स्यान्न तत्रानुमितिरित्यनुपपत्तिविरहात् । न च यत्र प्रथमक्षणे सिषाधयिषा ततः सिद्धिघटेच्छा ततः परामर्शः चतुर्थक्षणेऽनुमितिः तत्र तृतीयक्षणे पक्षतासम्पत्तये सिषाधयिषाविरहोपादानमिति वाच्यम् । ज्ञानेच्छयोरयौगपद्यात्, एकक्षणे घटेच्छासिद्ध्यसम्भवादिति चेन्न ।

यत्र प्रथमक्षणे सिषाधयिषा द्वितीयक्षणे घटेच्छा तृतीयक्षणे सिद्ध्यात्मकपरामर्शः चतुर्थक्षणेऽनुमितिः तत्र सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानाधिकरणत्वे सति इच्छाविरहविशिष्टस्वसमयध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वस्यासत्त्वात्, तादृशसिद्धेः तादृशस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नतया सिषाधयिषाविरहघटकारणे परामर्शक्षणे सत्त्वादनुमित्यनुपपत्तेरिति ।

च स्थूलकालोपाधेरेव स्ववृत्तियावद्ध्वंसविशिष्टतादशायां क्षणत्वाद्युक्तदोषतादवस्थ्यम्, यदुपाध्यवच्छिन्नस्याऽव्यवहितोत्तरक्षणत्वं तदवच्छेदेनानुमित्युत्पत्तिमत्त्वस्य विवक्षितत्वात्, क्षणिकान्त्यशब्दानामतिरिक्तपदार्थस्य वा क्षणत्वमते यथाश्रुतार्थस्यैव सम्यक्त्वाच्च ।

उत्पत्तिपदानुक्तौ एकानुमित्युत्पत्त्यनन्तरमनुमित्यन्तरापत्तिः, पूर्वानु-

नन्वत्रोत्पत्तिमत्त्वं स्वाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणत्वम्, तथाचानुमित्युत्पत्तिक्षणस्याप्यनुमित्युत्पत्तिमत्त्वापत्तिः स्वाधिकरणानुमित्युत्पत्तिसमयध्वंसाधिकरणत्वसत्त्वेऽपि घटाद्यवच्छेदेनाऽव्याप्यवृत्तितया तदभावस्यापि सत्त्वात् अतस्तादृशध्वंसाधिकरणत्वाभावो निरवच्छिन्नस्वरूपेण निवेशनीयः, एवंसति कथं सिद्धिपूर्वदण्डाद्यवच्छेदेनाऽनुमित्युत्पत्तिमत्तया चेत्युक्तं निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाधिकरणत्वाभावस्य व्याप्यवृत्तितया सिद्धिपूर्वदण्डाद्यवच्छेदेन विरहेणोत्पत्तिमत्त्वविरहात्तादृशसमयस्येति चेन्न ।

अत्र लक्षणे उत्पत्तिमत्त्वं स्वप्रागभाववत्त्वस्वाधिकरणत्वोभयसम्बन्धेनानुमितिविशिष्टत्वम्, तदपि प्रागभावस्य प्रतियोगिनाश्यत्वमताभिप्रायेण बोध्यम्, तथाच परामर्शपर्यन्तस्थायिस्थूलकालोपाधेः सिद्धिपूर्वदण्डाद्यवच्छेदेनानुमितिप्रागभाववत्त्वादित्यभिप्रायेणेदम् ।

स्ववृत्तियावद्ध्वंसविशिष्टतादशायामिति । स्ववृत्तियावद्ध्वंसविशिष्टत्वं च स्ववृत्तित्वम्, वृत्तित्वं च व्यापकतासम्बन्धेन । व्याप्यत्वव्यापकताघटकसम्बन्धश्च स्ववृत्तित्वसत्त्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वम, तेन नोत्तरक्षणस्य स्ववृत्तियावद्ध्वंसविशिष्टत्वापत्तिः । विवक्षितत्वादिति । ननु यदुपाध्यवच्छेदेनाऽव्यवहितोत्तरत्वं तदुपाध्यवच्छेदेनानुमित्युत्पत्तिमत्त्वस्य विवक्षणादेव तादृशस्थूलकालोपाधेः सिद्धिपूर्वदण्डाद्यवच्छेदेनानुमित्युत्पत्तिमत्त्वेऽपि सिद्धिपूर्वदण्डाद्यवच्छेदेनाऽव्यवहितोत्तरत्वाभावादेव तादृशस्थलेऽनुमित्यापत्तिवारणसम्भवात् द्वितीयक्षणपदं विफलमेवेति चेन्न ।

तादृशस्थलेऽनुमित्युत्पत्तिकालावधिपरामर्शपर्यन्तस्थायिस्थूलकालेऽनुमित्युत्पत्तिक्षणाबाधिपरामर्शपर्यन्तस्थायिस्थूलकालावच्छेदेन स्वक्षणाव्यवहितोत्तरकालत्वादनुमित्युत्पत्तिमत्त्वाच्च तादृशपरामर्शोत्तरमनुमित्युत्पादवारणार्थं यदुपाध्यवच्छिन्नस्याऽव्यवहितोत्तरक्षणत्वं तदुपाध्यवच्छेदेनाऽनुमित्युत्पत्तिमत्त्वं विवक्षितम्, तथाच तादृशस्थूलकाले स्ववृत्तियावद्ध्वंसवैशिष्ट्यावच्छेदेनाव्यवहितोत्तरत्वं तदवच्छेदेनानुमित्युत्पत्तिमत्त्वविरहादिति ध्येयम् ।

अस्य निवेशस्तु—सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानाधिकरणत्वे सति तादृशस्वसमयध्वंसाधिकरणीभूतो यः क्षणः तादृशक्षणताविशिष्टोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावः पक्षता, वै० स्वावच्छेदकीभूतोपाध्यवच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन । नन्वत्र तादृशाव्यवहितोत्तरत्वविशिष्टत्वमेव निवेश्यतां किं क्षणत्वनिवेशेन, वै० उक्तोभयसम्बन्धेनेति चेन्न । यदुपाध्यवच्छिन्नस्येत्यादिग्रन्थस्यात्रैव तात्पर्यात् । केचित्तु एतल्लाभार्थमेव क्षणिकान्त्यशब्दानां अतिरिक्तपदार्थस्य वाक्षणिकत्वमते इत्युक्तमित्याहुः ।

अनुमित्यन्तरापत्तिरिति । यत्र क्रमेणानुमित्साविरह्यात्मकपरामर्शः ततोऽनुमितिः ततोऽनुमित्यन्तरापत्तिरित्यर्थः । नन्वत्र सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरण-

मितेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वात्मकानुमितिकत्वेन तद्ध्यासिद्धे-
रभावादतस्तदुपात्तम् । न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वेतरानुमि-
तिकत्वमेव प्रवेश्यताम्, उत्पत्तेः स्वेतरत्वापेक्षया गुरुत्वादिति वाच्यम् ।

---

कालध्वंसाधिकरणत्वाभावविशिष्टानुमितिकाभिन्नत्वं सिद्धौ निवेश्यम्, तावतैवाऽपत्तिवारणस-
म्भवे उत्पत्तिपदं किमर्थम्, वै० स्वाश्रयवृत्तित्वस्वाश्रयवृत्तिध्वंसप्रतियोग्यवृत्तित्वोभयसम्ब-
न्धेन, तथाच तादृशाधिकरणत्वाभावविशिष्टा न तादृशानुमितिः स्वाश्रयानुमितिक्षणवृत्तित्वस-
त्त्वेऽपि स्वाश्रयानुमित्युत्तरक्षणवृत्तिध्वंसप्रतियोग्यनुमितिक्षणाऽवृत्तित्वविरहात्, तादृशी च
सिषाधयिषानाशक्षणोत्पन्नपरामर्शोत्तरजायमानाऽनुमितिरेव तदनुमितिकाभिन्नत्वस्य सिद्धौ स-
त्त्वात्, एवं स्वसमयध्वंसाधिकरणत्वदलमपि किमर्थमिति चेन्न ।

अभावस्याधिकरणभेदेन भिन्नतया यत्र प्रथममनुमितिस्ततः सिद्ध्यात्मकपरामर्शः त-
दनन्तरमनुमितिः ततः पुनरनुमित्यापत्तिः स्वपदेनानुमित्युत्पत्तिक्षणवृत्तितादृशाधिकरणत्वा-
भावस्याऽप्राप्ततया स्वाश्रयानुमित्युत्पत्तिक्षणवृत्तित्वस्वाश्रयतत्क्षणवृत्तिध्वंसप्रतियोगिपरामर्श-
क्षणवृत्तित्वयोस्तादृशानुमितौ सत्त्वेन तादृशाधिकरणत्वाभावविशिष्ट. तादृशानुमितिरेव तद-
नुमितिकभिन्नासिद्ध्यभावस्योत्पन्नानुमितिक्षणे सत्त्वात् । न च सिषाधयिषाविरहविशिष्टस्वक्षण-
ध्वंसाधिकरणक्षणध्वंसाधिकरणतात्वावच्छिन्नप्रतियोगिताविशिष्टानुमितिकाभिन्नत्वं सिद्धौ नि-
वेश्यम्, वै० स्वनिरूपकाभाववद्वृत्तित्वस्वनिरूपकाभाववद्वृत्तिध्वंसप्रतियोग्यवृत्तित्वोभयसं०,
तथा च नोक्तानुमितिः, तादृशप्रतियोगिताविशिष्टस्वनिरूपकाभाववदनुमितिक्षणवृत्तित्वस-
त्त्वेऽपि स्वनिरूपकाभाववदनुमित्युत्तरक्षणवृत्तिध्वंसप्रतियोग्यनुमित्युत्पत्तिक्षणवृत्तित्वस्यैव स-
त्त्वेन तादृशवृत्तित्वसामान्याभावविरहात् तत्र तादृशानुमितिकाभिन्नसिद्धेः सत्त्वात्
नानुमित्यन्तरापत्तिरिति वाच्यम् । अत्राप्यनुमितिर्न स्यात् यत्र क्रमेणानुमि-
त्सासिद्धिपरामर्शानुमितयः तत्रानुमितौ तादृशप्रतियोगिताविशिष्टत्वविरहेण स्वनिरूपका-
भाववद्वृत्तित्वसत्त्वेऽपि स्वनिरूपकाभाववद्वृत्तिध्वंसप्रतियोग्यवृत्तित्वविरहात् । स्वनि-
रूपकाभावमध्ये सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसाधिकरणत्व–अनुमित्यु-
त्तरक्षणध्वंसाधिकरणत्वोभयाभाववत्तदनुमित्युत्तरक्षणवृत्तिध्वंसप्रतियोग्यनुमितिवृत्तित्वसत्त्वेन
तादृशवृत्तित्वसामान्याभावविरहात्तादृशप्रतियोगिताविशिष्टानुमितेरेवाऽप्रसिद्धत्वात् । यद्यपि स्व-
निरूपकाधिकरणतात्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वस्वनिरूपकाधिकरणतात्वेतरधर्मानव-
च्छिन्नप्रतियोगिताकाभाववद्वृत्तिध्वंसप्रतियोग्यवृत्तित्वोभयसम्बन्धेन सिषाधयिषाविशिष्टस्व-
क्षणध्वंसाधिकरणकालध्वंसत्वावच्छिन्ननिरूपकताविशिष्टत्वमेव वाऽनुमितौ निवेश्यम्, ताव-
तैव सर्वानुमितिसम्भवात्, उक्तस्थले च तादृशानुमितौ तद्ध्वंसत्वावच्छिन्ननिरूपकतानिरू-
पिताधिकरणतात्वावच्छिन्नाभाववदनुमित्युत्पत्तिक्षणवृत्तित्वतादृशाधिकरणतात्वेतरधर्मानवच्छि-
न्ना न तादृशोभयत्वावच्छिन्ना प्रतियोगिता अपि तु तादृशाधिकरणतात्वमात्रावच्छिन्नप्रतियो-
गितैव तन्निरूपकाभाववदनुमित्युत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिपरामर्शक्षणावृत्तित्वयोः सत्त्वेन
तादृशनिरूपकताविशिष्टानुमितिकाभिन्नसिद्ध्यभावस्य परामर्शक्षणे सत्त्वात् न कुत्राप्यनुमित्यनुप-
पत्तिरिति । तथापि निरूपकताया निरूपकभेदेन भिन्नत्वमते यत्र क्रमेण साध्यानुमितिः सा-

यत्र साध्यस्यानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मिका एकानुमितिः ततःसाध्यानुमित्यनन्तरं तत्र साध्यानुमित्यन्तरप्रसङ्गात् ।

---

प्यव्याप्यानुमितिश्च जायतामितीच्छा ततः साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्च पक्षः इति परामर्शः ततः सिद्ध्यंशेऽप्रामाण्यावगाहिपक्षः साध्यवान् साध्यव्याप्यवानित्यनुमितिः समूहालम्बनात्मिका ततः क्षणैकविलम्बेन पुनः साध्यानुमितिर्जायते, सा समूहालम्बनानुमित्युत्तरक्षणे किन्न स्यात्, तादृशध्वंसत्वावच्छिन्ननिरूपकतान्तर्गतसमूहालम्बनानुमितिक्षणध्वंसनिष्ठनिरूपकता उत्तरानुमितिक्षणध्वंसनिष्ठनिरूपकता च उत्तरानुमितिक्षणध्वंसनिष्ठनिरूपकताविशिष्टत्वस्योत्तरानुमितौ सत्त्वात् । स्वनिरूपिताधिकरणतात्वावच्छिन्नप्रतियोगिताकाभाववदुत्तरानुमितिक्षणवृत्तित्वस्वनिरूपिताधिकरणतात्वेतरधर्मानवच्छिन्नप्रतियोगिताकाभाववद्वृत्तिध्वंसप्रतियोगिसमूहालम्बनानुमितिक्षणवृत्तित्वयोः सत्त्वेन तादृशानुमितिकभिन्नसिद्ध्यभावस्य समूहालम्बनानुमितिक्षणे सत्त्वादतोऽनुमितौ तादृशनिरूपकतावै० स्वावच्छेदकीभूतधर्मावच्छिन्ननिरूपकताकाधिकरणानवच्छिन्नाभाववद्वृत्तित्वस्वावच्छेदकीभूतधर्मावच्छिन्ननिरूपकताकाधिकरणतात्वेतरधर्मानवच्छिन्नप्रतियोगिताकाभाववद्वृत्तिध्वंसप्रतियोग्यवृत्तित्वोभयसम्बन्धेन निवेश्यम् । तथाच निरूपकताया निरूपकभेदेन भिन्नत्वेऽपि तादृशाधिकरणतात्वावच्छिन्नाभाववत्समूहालम्बनानुमित्युत्तरक्षणवृत्तित्वस्योत्तरानुमितौ विरहेण तेन सम्बन्धेन तादृशनिरूपकताविशिष्टत्वाभावान्नोक्तक्षणेऽनुमित्यापत्तिः । एवंसति क्वाप्यनुमितिर्न स्यात्, यत्र क्रमेणाऽनुमित्सासिद्धिपरामर्शानुमितयः तत्र सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानवच्छिन्ननिरूपकताविशिष्टानुमितेरप्रसिद्धेः स्वावच्छेदकीभूत यद्ध्वंसत्वं तदवच्छिन्ननिरूपकताकाधिकरणतात्वाभावाऽप्रसिद्धेः, ध्वंसत्वावच्छिन्ननिरूपकताकाधिकरणतायाः सर्वत्र सत्त्वादतः सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानवच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताविशिष्टानुमितिकभिन्नसिद्ध्यभावः पक्षता वाच्या । रूपवृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० । अनुमितौ वै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतानिरूपिताधिकरणत्वाभाववद्वृत्तित्वतादृशरूपवृत्तिनिरूपकतानिरूपिताधिकरणत्वाभाववद्वृत्तिध्वंसप्रतियोग्यवृत्तित्वोभयसम्बन्धेन, तथाच शुद्धध्वंसत्वावच्छिन्ननिरूपकता न तादृशरूपवृत्तिरतो नोक्तदोषावकाश इति ।

**तत्र साध्यानुमित्यन्तरप्रसङ्गादिति** । अथ सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वस्वेतरस्वपूर्वक्षणावृत्त्यनुमितिकत्वमेव प्रवेश्यतां किमुत्पत्तिपदेन, तथाच सिषाधयिषाविरहविशिष्टो द्वितीयानुमितिक्षणस्तत्क्षणाव्यवहितोत्तरक्षणवृत्तित्वस्वेतरस्वयोरपेक्षाबुद्ध्यात्मकानुमितौ सत्त्वेऽपि स्वपूर्वक्षणावृत्तित्वविरहात्तादृशानुमितिकभिन्नत्वस्य द्वितीयानुमितौ सत्त्वेन तस्यैव प्रतिबन्धकतया न साध्यानुमित्यनन्तरं साध्यानुमित्यापत्तिरिति चेन्न ।

यत्र साध्यानुमितिः साध्यव्याप्यानुमितिश्च जायतामितीच्छा ततः साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्च पक्ष इति सिद्ध्यात्मकपरामर्शः ततः सिद्ध्यंशेऽप्रामाण्यज्ञानास्कन्दितसाध्यवान साध्यव्याप्यवानित्यनुमितिः ततः क्षणैकविलम्बेन साध्यानुमितिर्जायतेऽधुना

अथ तृतीयक्षणाव्यवधायकद्वितीयक्षणे एवाऽव्यवहितत्वपर्यवसानाच्च-

अनुमितिस्तु स्वसमानाधिकरणप्रकृतपक्षत्वाऽघविषयिणी ग्राह्या, नातः पुरुषान्तरीयानुमित्यादिकमादायाऽतिप्रसङ्गः ।

प्रथमानुमितिक्षणे किन्न स्यात् ? तत्र सिषाधयिषाविरहविशिष्टो यः प्रथमोत्पन्नानुमितिक्षणस्त दव्यवहितोत्तरक्षणवृत्तित्वेतरत्वपूर्वक्षणावृत्तिप्रथमानुमितिरेव तदनुमितिकैव सा सिद्धिः प्रथमानुमित्यात्मकसिद्धौ तादृशानुमितिकभिन्नत्वसत्त्वेऽपि तस्या अप्रामाण्यज्ञानास्कन्दितत्वविरहात् सा सिद्धिर्विरोधिनीति । न च सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वेतरत्वपूर्वक्षणावृत्तिअप्रामाण्यज्ञानास्कन्दितानुमितिकत्वमेव प्रवेश्यतां तावतैवोक्तानुमितिवारणसम्भवात् प्रथमानुमितावप्रामाण्यज्ञानानास्कन्दितत्वविरहेण तादृशानुमितिकभिन्नायाः प्रथमसिद्धेः सत्त्वादिति वाच्यम् । उत्पत्त्यपेक्षया लाघवानवकाशात् । एवं यत्र क्रमेणानुमित्सा-सिद्धिपरामर्शोऽप्रामाण्यज्ञानास्कन्दितानुमितयस्तत्रानुमित्यनुपपत्तेः, तादृशानुमितेः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वस्वेतरत्वस्वपूर्वक्षणावृत्तित्वादीनां सत्त्वेऽप्यप्रामाण्यज्ञानास्कन्दितत्वविरहात् , तादृशानुमितिकभिन्नसिषाधयिषाविरहविशिष्टसिद्धेस्तत्र सत्त्वादिति ध्येयम् ।

अथात्र सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वस्ववृत्तिप्रागभावप्रतियोग्यनुमितिकत्वमेव प्रवेश्यतां, तावतैवाऽनुमित्यनन्तरमनुमित्यापत्तिवारणसम्भवात्किं अनुमितावुत्पत्तिकत्वस्वेतरत्वदलेनेति चेन्न ।

प्रागभावस्य प्रतियोगिनाश्यत्वमते उक्तानुमित्यनन्तरानुमित्यापत्तितादवस्थ्यादिति दिक् ।

नन्वत्र सिषाधयिषाविरहविशिष्टस्वक्षणविशिष्टानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षतेत्यनेनैव निर्वाहे किमुत्पत्तिनिवेशेन, अनुमितौ स्वक्षणवै० स्ववृत्तित्वस्वविशिष्टक्षणवृत्तित्वोभयसम्बन्धेन, स्ववै० स्वध्वंसाधिकरणकालध्वंसानाधिकरणत्वस्वध्वंसाधिकरणत्वोभयसम्बन्धेनेति चेन्न ।

यत्र प्रथमं सिद्ध्यात्मकपरामर्शः ततः सिद्धिधर्मिकाप्रामाण्यज्ञानं ततोऽनुमितिः तस्या अप्रामाण्यज्ञानक्षणे आपत्तिः, तत्रानुमितौ सिषाधयिषाविरहविशिष्टाऽप्रामाण्यज्ञानक्षणविशिष्टत्वसत्त्वात् । न च सिषाधयिषाविरहविशिष्टस्वक्षणत्वावच्छिन्नावच्छेदकताविशिष्टानुमितिकभिन्नत्वं निवेश्यम् । वै० स्वाश्रयवृत्तित्वस्वविशिष्टक्षणवृत्तित्वोभयसं०, वै० स्वनिरूपितध्वंसनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितकालनिष्ठावच्छेदकतानिरूपितध्वंसनिष्ठावच्छेदकतानिरूपिता सती अधिकरणतात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत्त्वस्वाक्षणप्रतियोगिकध्वंसाधिकरणत्वोभयसं०, तथा चानुमितिक्षणे तादृशसामान्याभावविरहाद्भवति चाऽप्रामाण्यज्ञानक्षणे एव तद्वृत्तित्वस्य तादृशानुमितौ विरहेण तादृशानुमितिकभिन्नायाः सिद्धेस्तत्र सत्त्वान्नोक्तानुमित्यापत्तिरिति वाच्यम् । यत्र सिषाधयिषानाशक्षणे सिद्ध्यात्मकपरामर्शस्तत्रानुमित्यनुपपत्तेः, तादृशानुमितौ स्वाश्रयवृत्तित्वविरहेण तेन सम्बन्धेन सिषाधयिषाविरहविशिष्टस्वक्षणत्वावच्छिन्नावच्छेदकताविशिष्टत्वविरहादत उत्पत्तिपदमिति दिक् ।

त्राऽविरलक्रमेण सिद्धिसिषाधयिषानुमितयः तत्र द्वितीयक्षणे पक्षतासम्पत्तये

---

स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नस्य प्रागुत्पन्नस्य व्याप्तिस्मरणादेः परामर्शस्थले सत्त्वात्तत्र पक्षतासम्पत्त्यर्थं सिद्धिपदमिति भावः।

ग्रन्थलाघवार्थमन्तिमस्य सिषाधयिषाविरहपदस्य व्यावृत्तिमभिदधान एव प्रथमस्य प्रयोजनं पृच्छति अथेति। तृतीयक्षणेति। तृतीयक्षणस्य व्यवधायकेत्यर्थः। सिद्धीत। परामर्शात्मकसिद्धेरित्यर्थः। सम्पत्तये इति। अन्यथा स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नसिद्धेः सत्त्वा·

---

यत्राऽविरलक्रमेण सिद्धिसिषाधयिषानुमितय इति दीधितिः। नच यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शस्तत्रापि व्यावृत्तिः सम्भवतीति चेन्न। द्वितीयसिषाधयिषाविरहव्यावृत्तिकाले प्रथममपि तादृशपदं नास्त्येव, तथाच स्वक्षणमध्ये सिद्ध्यात्मकपरामर्शक्षणोपि, तत्क्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नत्वस्य तादृशसिद्धौ विरहान्न दोषः सम्भवतांत्यतो व्युत्क्रमेणानुधावनम्। किं वा सिद्धिसिषाधयिषानुमितिस्थलत्वावच्छेदेन व्यावृत्तिः सम्भवति न तु सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितिस्थलत्वावच्छेदेनेति विशेषात्, तथाहि— यत्र पर्वतो वह्निव्याप्यधूमवान् वह्निव्याप्यव्याप्यवांश्चेति परामर्शः ततोऽनुमितिद्वयं जायतामितीच्छा ततोऽनुमितिः ततोऽप्यनुमितिः तत्र व्यावृत्तिसम्भवेऽपि यत्रानुमितिद्वयं जायतामितीच्छा ततो वह्निमान् वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेतिपरामर्शः ततोऽनुमितिः ततोऽप्यनुमितिः तत्र व्यावृत्तिर्न सम्भवतीति ध्येयम्।

ग्रन्थलाघवार्थमिति। अत्रेदं लाघवं बोध्यम्—प्रथमस्य सिषाधयिषाविरहपदस्य व्यावृत्तिमभिधाय द्वितीयस्य तस्य व्यावृत्त्यभिधाने स्थलद्वयकल्पनापत्तिः, सिद्धिसिषाधयिषानुमितयो यत्र क्रमेण जाताः तत्र सिषाधयिषक्षणे पक्षतासम्पादनस्यैव यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितयः तत्र सिषाधयिषाविरहविशिष्टस्वक्षणपदेनानुमितिक्षणस्यैव धर्तुं शक्यतया तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नत्वेन तत्सिद्धेरपि प्रतिबन्धकत्वात् सिद्ध्यात्मकपरामर्शक्षणे पक्षतासम्पादनस्यापि तत्फलत्वसम्भवात् इति प्रथमं तद्व्यावृत्तिकथनम्, तथाच स्वक्षणपदेन सिद्ध्यात्मकपरामर्शक्षणस्यापि धर्त्तव्यतया तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया तद्भिन्नत्वविरहान्न तत्र व्यावृत्तिः सम्भवतीत्येवं जगदीशस्याशय इति ध्येयम्।

केचित्तु प्रथमं सिषाधयिषाविरहपदस्य व्यावृत्तिदाने सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नायां सिद्धौ सिषाधयिषाविरहविशेषणं किमर्थमिति जिज्ञासायामेव गुरुत्वात्, अस्माकन्तु अधुना प्राथमिकस्य सिषाधयिषाविरहपदस्याऽसत्त्वेन केवलं स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नसिद्धौ सिषाधयिषाविरहविशेषणं किमर्थमित्येव जिज्ञासोदेति तदेव लाघवमित्याहुः।

द्वितीयसिषाधयिषाविरहो विशेषणमस्तु सिद्धेः, प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् । यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थमिति ।

---

तत्र पक्षता न स्यादिति भावः । द्वितीयो द्वितीयसिषाधयिषाविरहपदेन प्रत्याख्यः, सिषाधयिषाविरहस्यैकत्वेन द्वितीयत्वायोगात् । एवमग्रेऽपि । प्राथमिकस्त्विति । सिषाधयिषाविरह इत्यनुषज्यते । स्वक्षणस्येति । विशेषणमित्यनुषज्यते । यद्यपि सिषाधयिषाविरहावच्छिन्नं यत्त्वं तदधिकरणक्षणाव्यवहितोत्तरेत्यादिक्रमेण स्वस्यापि विशेषणत्वमनुमित्सविरहस्य सम्भवति, तथापि स्वास्मन् सिषाधयिषाविरहवैशिष्ट्यस्य सामानाधिकरण्यरूपस्य प्रवेशे गौरवादित्याशयेन स्वक्षणस्येत्युक्तम् ।

यत्रेत्यादि । सिषाधयिषासिद्ध्योर्युक्तक्रमेणानुमितिप्राक्काले सिद्धिसामान्याभाव एव सम्भवत्यतः क्रमेणेत्युक्तम् । सिद्धेरनुमित्यात्मकत्वेऽनुमित्सायाः स्वविषयसिद्ध्युत्पादेन चरितार्थतया उत्तरकालमनुमितिर्न कस्यापि सम्मता इति व्यर्थं तत्र पक्षतासम्पादनमतः प्रात्यक्षिकपदं पक्षतासम्पत्त्यर्थमिति, अन्यथा तत्र स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकभिन्नायाः सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वादनुमितिर्न स्यादिति ।

इत्थं च तत्र सिद्धेः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात्तदन्यसिद्ध्यभावस्य सत्त्वान्न पक्षताहानिः । न च सिषाधयिषाविशिष्टस्यापि सिद्धिक्षणस्य घटाद्यवच्छेदेन सिषाधयिषाविरहवत्त्वानुक्तदोषतादवस्थ्यम् । स्वावच्छेदकशरीरावच्छेदेन स्वक्षणे सिषाध-

---

प्रत्याख्यः—उपात्त इत्यर्थः । तत्र द्वितीयत्वं न द्वित्वसंख्यावत्त्वम्, सिषाधयिषाविरहघटएतद्भूताद्वित्वस्य सिषाधयिषाविरहेऽपि सत्त्वाद् द्वितीयत्वायोगादिति ग्रन्थाऽसङ्गतेरिति चेन्न । स्वसजातीयाव्यवहितोत्तरानुत्पत्तिकत्वविशिष्टस्वसजातीयाव्यवहितोत्तरोत्पत्तिकत्वमेव तत्, तथाच यत्र पुत्रत्रयमस्ति तत्रैव मध्यमपुत्रे अयं द्वितीयः पुत्र इति व्यवहारः, तथाच स्वं मध्यमपुत्रः तत्पुत्राव्यवहितोत्तरानुत्पत्तिकत्वं स्वसजातीयप्रथमपुत्राव्यवहितोत्तरोत्पत्तिकत्वतस्य मध्यमपुत्र सत्वात्, सिषाधयिषाविरहे स्वसजातीयाव्यवहितोत्तरोत्पत्तिकत्वविरहात्सिषाधयिषाविरहस्य नित्यत्वात् । एकत्वेन—नित्यत्वेन, द्वितीयत्वायोगात्—उत्पत्तिघटितद्वितीयत्वायोगादित्यभिप्रायः । नच यत्र मध्यमपुत्रोत्पत्तिक्षणे दैवाद् घटोत्पत्तिः तत्र घटेऽप्ययं द्वितीय इति व्यवहारापत्तिः, स्वं द्वितीयपुत्रः तत्सजातीयाव्यवहितोत्तरानुत्पत्तिकत्वस्वजातीयप्रथमपुत्राव्यवहितोत्तरोत्पत्तिकत्वयोः सत्त्वादिति वाच्यम् । पदार्थविशिष्टत्वमेव द्वितीयत्वम्, वै० स्वतादात्म्यस्वसजातीयाव्यवहितोत्तरोत्पत्तिकत्वस्वसजातीयाव्यवहितोत्तरानुत्पत्तिकत्वएतत्त्रितयसम्बन्धेन, तथाच घटे स्वतादात्म्यविरहेण मध्यमपुत्रविशिष्टत्वा-

तत्र । यत्रानुमित्सानाशकाले प्रात्यक्षिकी सिद्धिरथ च परामर्शानुमिती तत्र पक्षताविरहप्रसङ्गात् ।

---

षिषाविरहवैशिष्ट्यस्य विवक्षितत्वादिति भावः । यत्र सिषाधयिषाघटा दीच्छासिद्ध्यात्मकपरामर्शानुमितयः क्रमेण जाताः तत्रेच्छाविरहाविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नायाः सिषाधयिषाविरहविशिष्टायाः सिद्धेः सत्त्वादनुमितिर्न स्यादत इच्छामपहाय सिषाधयिषापर्यन्तमनुधावनम् । एवं घटेच्छासिद्ध्यात्मकपरामर्शानुमितिवारणाय द्वितीयसिषाधयिषायाः प्रवेश इति भावः । पक्षताविरहप्रसङ्गादिति । द्वित्रिक्षणव्यवहितानुमित्सास्थलेऽपि अनुमितिस्वीकारेण इष्टापत्त्यसम्भवादिति भावः ।

---

भावसिरिति(१) ।

सिषाधयिषापर्यन्तमनुधावनमिति । ननु अव्यवहितोत्तरत्वघटकीभूते विशेष्यदले सिषाधयिषाविरहार्थकतादृशपदबलेन सिषाधयिषाविरहविशिष्टस्वसमयध्वंसाधिकरणत्वनिवेशात् इच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वस्याऽनुमित्युत्पत्तिक्षणे पर्यवसानसम्भवेन तदुत्पन्नानुमितिकतया तादृशसिद्धेर्विरोधित्वाभावेनाऽनुमित्यनुपपत्तिविरहादिति चेन्न ।

यत्र प्रथमक्षणे घटेच्छा द्वितीयक्षणे सिद्ध्यात्मकपरामर्शः तृतीयक्षणे सिद्धिघटिकाऽप्रामाण्यज्ञानं चतुर्थक्षणेऽनुमितिः तत्र तृतीयक्षणेऽनुमित्यापत्तेः, इच्छाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वस्य तादृशस्वसमयध्वंसाधिकरणत्वस्यानुमितिक्षणे सत्त्वात् तादृशसिद्धेस्तदुत्पन्नानुमितिकतया सिषाधयिषाविरहविशिष्टताद्विषासिद्ध्यभावस्य परामर्शक्षणे वर्त्तमानत्वात्, सिषाधयिषाविरहविशिष्टेत्याद्युक्तौ सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वं तादृशस्वसमयध्वंसाधिकरणत्वस्य परामर्शक्षणे एव पर्यवसिततया

---

(१) केचित्तु द्वितीयत्वमतिरिक्तपदार्थ एव, तच्च सिषाधयिषाविरहे नास्तीति । न चातिरिक्तद्वितीयत्वं सिषाधयिषाविरहे नास्तीत्यत्र किं मानमिति वाच्यम् । प्राथमिकभिन्नत्वव्याप्यधर्मवद् यद् भवति तद् द्वितीयत्ववद् भवतीति व्याप्तेरेव तत्र मानत्वात्, तस्मात्परिशेषेण प्राथमिकाभिन्नत्वव्याप्यधर्मवत्त्वमेव द्वितीयत्वम् । स च धर्मः स्वरूपसम्बन्धविशेषः अतिरिक्तो वेत्यन्यदेतत्, तथाच तृतयचतुष्टयपुत्रादिस्थले प्रथमापेक्षया द्वितीयस्य द्वितीयापेक्षया तृतीयस्य द्वितीयत्वात् प्राथमिकसिषाधयिषाविरहाभिन्नत्वस्य सिषाधयिषाविरहेऽसत्त्वात्तस्य प्राथमिकभिन्नत्वव्याप्यधर्मवत्त्वविरहेण द्वितीयत्वाभावात् ।

नन्वत्र प्राथमिकः क्षणांशे विशेषणीभूतः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाभावो भिन्नः द्वितीयश्च सिद्ध्यंशे विशेषणीभूतः समवायसम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाऽभावो भिन्न इति, तथाच प्राथमिकाभिन्नत्वव्याप्यधर्मवत्त्वस्य द्वितीये सत्त्वेन द्वितीयत्वायोगादितिग्रन्थाऽसङ्गतिरिति चेन्न ।

प्राथमिकस्यापि सिषाधयिषाभावस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्यैव ग्रन्थकृतोऽभिप्रेतत्वात्, तस्य स्वावच्छेदकक्षणतादात्म्यसम्बन्धेन क्षणेऽन्वयः, तथाच समवायसम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाऽभावे तत्सम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाऽभावाभिन्नत्वविरहेण न तद्ग्रन्थाऽसङ्गतिरित्याहुः ।

तत्रोत्पन्नानुमितिकभिन्नासिद्धेः सिषाधयिषाविरहविशिष्टतया प्रतिबन्धकत्वेन तृतीयक्षणे आपत्तिविरहात् ।

न च यद्यदिच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिः प्रामाणिकी तत्तदिच्छाविरहविशिष्टो यः स्वक्षणस्तद्ध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति सिषाधयिषाविरहविशिष्टस्वसमयध्वंसाधिकरणोत्पत्तिकत्वमेव निवेश्यम्, उक्तस्थले घटेच्छासत्त्वे सिद्धिसत्त्वे नानुमितिः प्रामाणिकी अपि तु क्षणैकविलम्बेनैव यादृशस्थले तत्सत्त्वेऽनुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टो यः सिद्ध्यात्मकपरामर्शक्षणः तद्ध्वंसाधिकरणकालध्वंसानधिकरणत्वसिषाधयिषाविरहविशिष्टो यः सिद्ध्यात्मकपरामर्शसमयः तद्ध्वंसाधिकरणत्वयोरप्रामाण्यज्ञानक्षणे सत्त्वेन तादृशक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः सिद्ध्यात्मकपरामर्शक्षणे सत्त्वान्नाऽप्रामाण्यज्ञानक्षणे आपत्तिरिति किं पूर्वदले सिषाधयिषाविरहविशिष्टस्वदलेनेति वाच्यम् । यत्र क्रमेणानुमित्सासिद्धिपरामर्शानुमितयः तत्रानुमित्यनुपपत्तेः, तत्र तादृशेच्छासत्त्वे सिद्धिसत्त्वेऽनुमितेः प्रामाणिकत्वाभावात् यत्र प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति सिषाधयिषाविरहविशिष्टस्वसमयध्वंसाधिकरणक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः परामर्शक्षणे सत्त्वादतोऽननुगतरूपेणेच्छाया उत्तेजकत्वं विहायाऽनुगतरूपेणैव यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिः प्रामाणिकी तादृशतादृशेच्छाविरहकूटविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति सिषाधयिषाविरहविशिष्टस्वसमयध्वंसाधिकरणीभूतक्षणोत्पत्तिकानुमितिकभिन्नत्वमेव निवेश्यम्, तथा चात्र वह्न्यनुमित्सासत्त्वेऽनुमितेः प्रामाणिकतया वह्न्यनुमित्सासत्त्वे सिद्धिसत्त्वेऽनुमितेः प्रामाणिकतया वह्न्यनुमित्सासत्त्वेन क्रमेणानुमित्सासिद्धिपरामर्शस्थलेप्यनुमित्साया उत्तेजकतया नानुमितेरनुत्पादः, एवं सति वह्न्यनुमित्सासत्त्वे घटानुमित्सासत्त्वे सिद्ध्यात्मकपरामर्शसत्त्वे चानुमितेः प्रामाणिकतया घटानुमित्सात्वेन सर्वत्र घटानुमित्साया उत्तेजकत्वसम्भवेन यत्र प्रथमं घटानुमित्सा ततः सिद्ध्यात्मकपरामर्शः ततः सिद्धिधर्मिकाऽप्रामाण्यज्ञानं तदनन्तरमनुमितिर्जायते तस्या अप्रामाण्यज्ञानक्षणे आपत्तिः स्यात् उक्तयुक्त्या घटानुमित्सासत्त्वे सिद्धिसत्त्वेऽनुमितेः प्रामाणिकतया तादृशेच्छात्वावच्छिन्नाभावविशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वसिषाधयिषाविरहविशिष्टस्वसमयध्वंसाधिकरणत्वयोरनुमितिक्षणे सत्त्वेन तादृशक्षणोत्पत्तिकानुमितिकाभिन्नसिद्ध्यभावस्य परामर्शक्षणेऽपि सत्त्वाद्, अतः स्वक्षणे सिषाधयिषाविरहविशिष्टत्वं विशेषणं देयम्, तथाच सिषाधयिषाविरहविशिष्टः सिद्ध्यात्मकपरामर्शक्षणोऽपि भवति तद्ध्वंसाधिकरणकालध्वंसानधिकरणतादृशसमयध्वंसाधिकरणत्वयोरप्रामाण्यज्ञानक्षणे एव सत्त्वेन तादृशक्षणोत्पत्तिकाभिन्नसिद्धेः सिद्ध्यात्मकपरामर्शक्षणे सत्त्वादप्रामाण्यज्ञानक्षणे नानुमित्यापत्तिः ।

ननु यत्र प्रथममनुमितिर्जायतामितीच्छा ततः पर्वतो वह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यधूमवन्महानसञ्चेति परामर्शः ततो महानसं वह्निमदित्यनुमितिः ततः पर्वते वह्न्यनुमितिर्जायते तत्र महानसधर्मिकवह्न्यनुमितिक्षणेऽपि किन्न स्यात्, तत्र सिषाधयिषाविरहविशिष्टो यः क्षणः स महानसधर्मिकवह्न्यनुमितिक्षण एव तद्ध्वंसाधिकरणकालध्वंसानाधिकरणत्वे सति तादृशस्वसमयध्वंसाधिकरणीभूतोत्तरानुमितिक्षणस्तत्क्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावस्य

अथ प्रथमक्षणमपेक्ष्य द्वितीयस्यैव द्वितीयमपेक्ष्य तृतीयस्याप्यव्यवहितोत्त-

---

उक्तदोषं निरसितुमाशङ्कते अथेति । प्रथममित्यादि । तथाच स्वसमयध्वं-साधिकरणसमयध्वंसानधिकरणत्वे सति स्वसमयध्वंसाधिकरणत्वमेवा-व्यवहितोत्तरत्वं वाच्यं तच्च तृतीयक्षणेऽनुमित्युत्पादेऽप्यस्तीति न पक्षता-हानिः । स्वक्षणेत्यत्र क्षणपदं समयमात्रपरं क्षणत्वपर्यन्तस्य निष्फलत्वा

---

सिद्ध्यात्मकपरामर्शक्षणे सत्त्वात् । न चेष्टापत्तिः, अनुभवविरोधात् । प्रकारान्तरेण स्वविष-यपर्यवसानसम्भवे अनुमित्यानामवागतार्थगोचरज्ञानानर्हत्वादिति चेन्न ।

सिद्ध्यात्मकपरामर्शाधिकरणीभूतक्षणस्यैव पर्वतधर्मिकवह्न्यनुमितिप्रतिबन्धकत्वस्य क-ल्पनीयत्वादिति ।

यद्यपि तृतीयक्षणेऽपि सिषाधयिषाविरहविशिष्टतादृशानुमितिकभिन्नसिद्धिसत्त्वाच्चतुर्थ-क्षणेपि कथमनुमितिः, तथापि तृतीयक्षणे अप्रामाण्यज्ञानसत्वेन तादृशसिद्धेरप्रामाण्यज्ञाना-स्कन्दितत्वेनाऽविरोधादनुमित्यनुपपत्तिविरहादिति ।

यत्तु प्रथमक्षणेऽपेक्षाबुद्ध्यात्मकाभाविपरामर्शधर्मिकाऽप्रामाण्यज्ञानं अनुमितीष्टसाधनता-ज्ञानं च द्वितीयक्षणे सिषाधयिषा ततस्तृतीयक्षणे सिद्ध्यात्मकपरामर्शः चतुर्थक्षणे घटेच्छा पञ्चमक्षणेऽनुमितिः तत्र तादृशसिद्धेरिच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमि-तिकभि(१)न्नतया सिषाधयिषाविरहसहकारेण चतुर्थक्षणे सत्त्वादनुमित्यनुपपत्तिः । घटेच्छा क्षणे आपत्तिवारणाय अपेक्षाबुद्ध्यात्मकपरामर्शधर्मिकाऽप्रामाण्यज्ञानं, सिषाधयिषाविरहेत्या-द्युक्तौ घटेच्छाक्षणे एव सिषाधयिषाविशिष्टस्वक्षणतया तदव्यवहितोत्तरत्वस्यानुमितिक्षणे एव पर्यवसानात्तत्रानुमितिकाभिन्नसिद्धेरभावसत्त्वेनाऽनुमित्यनुपपत्तिविरहादिति ।

तत्तुच्छम् । अपेक्षाबुद्धेर्द्वित्वप्रत्यक्षान्यथानुपपत्त्या त्रिक्षणावस्थायित्वस्वीकारेण तत्सत्वे द्वित्वप्रत्यक्षस्यैवोत्पादात् ।

केचित्तु प्रथमक्षणे सिषाधयिषा द्वितीयक्षणे सिद्धिः तृतीयक्षणे द्वित्वप्रत्यक्षघटे तत्रैव दोष इति । तदपि न ज्ञानेच्छयोरयौगपद्यादिति ।

**एवमिति** । यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितयः तत्र सिषाधयिषाविरह विशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नासिद्धेः सत्त्वादनुमित्यनुपपत्त्या द्वितीय सिषाधयिषाविरहेति सिद्धिविशेषणम् । अत्रेच्छाविरहविशिष्टत्वानिवेशे त्वाह घटेच्छेति । **अनुमितिवारणायेति** । अनुमित्यापत्तिवारणायेत्यर्थः । सिषाधयिषाविरहविशिष्टस्वक्ष-णाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नसिद्धिघटनेऽपि इच्छाविरहविशिष्टसिद्धेरभावसत्वात्, सिषाधयिषापदोपादाने तु सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वान्नानुमित्यापत्तिरिति भावः ।

---

(१) तत्रेच्छाविरहविशिष्टतादृशपरामर्शात्मकासिद्धिक्षणाऽप्रसिद्ध्या स्वपदेन तादृशसिद्धेरुपादानाऽ-सम्भवात् ।

रत्वं, स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधि-
करणत्वं वा तादृशाऽव्यवहितोत्तरत्वं वाच्यं, तथाच यत्र क्रमेण सिद्धिसि-

---

द्धिति भावः। लाघवाद्द ह स्वध्वंसेत्यादि। स्वोत्तरप्रहराद्युत्पन्नानुमितिकालसि-
द्धिदशायां पक्षतावारणाय सत्यन्तदलम्। सिद्धिद्वितीयक्षणस्यापि विष-
यितासम्बन्धेन सिद्धिध्वंसाधिकरणीभूताऽतीतज्ञानादेर्ध्वंसाधिकरण-
त्वात् कालपदम्। स्वपूर्वप्रहराद्युत्पन्नानुमितिकालसिद्धिदशायां तद्वार-
णाय स्वाधिकरणेत्यादि विशेष्यदलम् कालपदोपादानात्कालिकसम्बन्धे-
नाधिकरणत्वलाभस्तेन सिद्धेः पूर्वप्रहरादेर्विषयितया सिद्ध्यधिकरणी-
भूतस्याऽतीतज्ञानादेर्ध्वंसाधिकरणत्वेऽपि नोक्तदोषः। स्वाधिकरणत्वमात्रो-
क्तौ सिद्धिप्राक्कालवारणसम्भवेऽप्यनुमित्युत्तरमनुमितेर्वारणार्थं स्वा-
धिकरणकालध्वंसाधिकरणत्वपर्यन्तोपन्यासः, अन्यथाऽनुमित्यात्मकसिद्धेः
स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणभूतो यः स्वोत्पा-
दक्षणस्तदुत्पत्तिकानुमितिकत्वेन तद्भिन्नसिद्ध्यभावस्य सत्त्वादनुमित्यन्त-

---

लाघवादाहेति। अथ यत्रादौ सिषाधयिषा ततोऽपेक्षाबुद्ध्यात्मकसिद्धिः ततो लिङ्ग-
दर्शनादिः ततः परामर्शः ततोऽनुमितिः तत्रानुपपत्तिसम्भवं पूर्वकल्पे गौरवाभिधानमनुचि-
तम्, तत्र स्वक्षणध्वंसाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वस्य परामर्शक्षणे एव
सत्त्वेन तत्क्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः सत्त्वात्। नचाऽपेक्षाबुद्धेर्द्वित्वप्रत्यक्षानुरोधेन चतु-
र्थक्षणावस्थायित्वं कल्प्यते अत्र च द्वित्वप्रत्यक्षानुदयाच्चतुर्थक्षणावस्थायित्वकल्पनमयुक्तमिति
वाच्यम्। धूमेनाऽनुमिनुयामितिप्रत्यवसरे चतुर्थक्षणे जातद्वित्वसाक्षात्कारकापेक्षाबुद्धेरपि
तथात्वाभ्युपगमात्। न चाऽत्राऽव्यवहितोत्तरत्वघटकस्वक्षणेऽपि सिषाधयिषाविरहविशिष्टत्व-
निवेशान्नोक्तानुपपत्तिस्तादृशाव्यवहितोत्तरत्वस्यानुमितिक्षणे सत्त्वादिति वाच्यम्। यत्रादौ स्व-
पञ्चमक्षणे पर्वते वह्न्यनुमितिर्जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शः तन्नाशाधिकरणतृ-
तीयक्षणे पुनः सिद्ध्यात्मकपरामर्शः ततोऽनुमितिः तत्र द्वितीयपरामर्शोत्पत्तिदशायामनुमित्याप-
त्तेः प्रथमसिद्धेस्तादृशानुमितिकत्वेन विरोधित्वादिति चेन्न।

सिद्धिद्वितीयक्षणादेस्तत्तद्व्यक्तित्वेन तत्पक्षकतत्साध्यकानुमितिं प्रति प्रतिबन्धकत्वस्य क-
ल्पनीयत्वात्, तथाच पूर्वकल्पे दोषाभावेन गौरवाभिधानमिति दिक्। एतेन स्वध्वंसघटिता-
ऽव्यवहितोत्तरत्वकल्पनेऽपि तत्रानुमित्यापत्तेरशक्यपरिहारत्वेन अनन्तनत्तत्क्षणादेः प्रतिबन्ध-
कत्वकल्पनाया आवश्यकत्वात् स्वध्वंसघटिताव्यवहितोत्तरत्वकल्पे एव गौरवमिति परास्तम्।
चतुर्थक्षणे अजातसाक्षात्काराऽपेक्षाबुद्धेस्तृतीयक्षणस्थायित्वस्य सविवादतया मतद्वयसाधारण-
दोषान्तरमनभिप्राय गौरवमुक्तमित्यपि कश्चित्।

सत्यन्तदलमिति। तथाच सिद्ध्यात्मकपरामर्शसत्त्वेऽनुमित्यापत्तिरिति भावः। सिद्धि-
द्वितीयक्षणस्यापीति। तथाच सर्वस्यैव क्षणस्य सिद्धिनाशविषयकपूर्वपूर्वज्ञाननाशकत्वेन-

त्यापत्तेः । एवं स्वाधिकरणत्वमात्रस्य विशेष्यत्वे यत्रानुमित्सानाशक्षणे इत्याद्युक्तदोषनिरासोऽपि न स्यादिति ध्येयम् । अत्र स्वध्वंसाधिकरणकालध्वंसानधिकरणीभूतो यः स्वसमयध्वंसाधिकरणीभूतक्षणः तदुत्पत्तिकानुमितिकभिन्नत्वापेक्षया लाघवेन स्वध्वंसाधिकरणसमयध्वंसानधिकरणीभूतो यः स्वध्वंसाधिकरणक्षणस्तद्वृत्त्यनुमितिकभिन्नत्वं सिद्धेर्विशेषणं कथं नोक्तम्, स्वकालध्वंसेत्यत्र कालस्य अनुमितौ उत्पत्त्यंशस्य च प्रवेशेन गौरवादिति विभावनीयम् ।

---

सत्यन्ताप्रवेशे इति भावः । कालपदोपादानात्कालिकसम्बन्धेनाधिकरणत्वलाभ इति । यत्रानुमित्सानाशक्षणे इत्याद्युक्तदोषनिरासोपि न स्यादितीति स्वाधिकरणत्वरूपविशेष्यदलाविरहेणाऽनुमत्युत्पत्तिक्षणे पक्षताविरहतादवस्थ्यादिति भावः । ध्येयमित्यस्वरसो दर्शितः। तद्बीजन्तु सिद्धिविशिष्टानुमितिकभिन्नसिष्धाभावस्यैव पक्षतात्वम्, वै० स्व भिन्नत्वस्वविशिष्टा या क्षणत्वविशिष्टोत्पत्तिः तत्प्रतियोगित्वोभयसम्बन्धेन । उत्पत्तौ स्ववै० स्वविशिष्टकालवृत्तित्वसम्बन्धेन । काले स्ववै० स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वस्वाधिकरत्वोभयसम्बन्धेन । उत्पत्तौ स्वक्षणत्ववै० स्वावच्छेदकीभूतोपाध्यवच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन, तथाचोक्तस्थले परामर्शादारभ्यानुमितिपर्यन्तस्थायिस्थूलकालोपाधेः प्रत्यक्षात्मकसिद्धिविशिष्टतया तद्वृत्तित्वस्य तादृशानुमित्युत्पत्तौ सत्वेनानुमित्यभावादिति विभावनीयम् । अत्र स्वभिन्नत्वं पूर्वोक्तानुमित्युत्तरानुमित्यापत्तिवारणाय बोध्यम् ।

**विभावनीयमिति** । तद्बीजन्तु यत्रादौ सिषाधयिषा ततस्तृतीयक्षणेऽपेक्षाबुध्यात्मकसिध्यात्मकपरामर्शः ततोऽनुमितिः तस्या अनुपपत्तिः तत्र निरुक्ताऽव्यवहितोत्तरत्वस्य चतुर्थक्षणे एव पर्यवसानात् , एवं यत्रादौ सिध्यात्मकापेक्षाबुध्यात्मकपरामर्शः ततः सिषाधयिषा ततोऽनुमितिस्तस्याः सिषाधयिषाक्षणे आपत्तिः । स्वमते तु तादृशसिद्धेः सिषाधयिषाविरहविशिष्टो यः स्वाव्यवहितोत्तरक्षणः तदुत्पत्तिकानुमितिकत्वाभावान्नापत्तिः । एतेन स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपाव्यवहितोत्तरत्वविवक्षणेपि प्रथमोक्तानुपपत्तिवारणसम्भवे उत्पत्तिनिवेशो व्यर्थ इति परास्तम् ।

**उक्तापत्तितादवस्थ्यादिति** । अथात्र स्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणत्वरूपतृतीयक्षणमात्रपर्यवसायि अव्यवहितोत्तरत्वं निवेश्यम्,तादृशक्षणवृत्तित्वनिवेशेनैव प्रागुक्तदोषाणां वारणसम्भवे उत्पत्तिनिवेशो व्यर्थ एव । न च यत्र परामर्शोत्तरमपेक्षाबुध्यात्मिकानुमितिस्तत्र पुनरनुमित्यापत्तिरिति वाच्यम् । तादृशक्षणवृत्तित्वेतरानुमितिकत्वस्य वक्तव्यत्वादिति चेन्न ।

यत्रानुमित्सानाशकाले सिध्यात्मकपर्वतो वह्निमान् वह्निव्याप्यधूमवान् वह्निव्याप्यव्याप्यवांश्चेति परामर्शः ततो वह्नितद्व्याप्ययोरनुमितिस्ततोऽनुमित्यन्तरं जायतामितीच्छा ततोऽनुमित्यन्तरं तत्र प्रथमानुमित्यनुपपत्तेः । तृतीयक्षणमात्रे एव निरुक्ताव्यवहितोत्तरत्वपर्यवसानेन प्रथमसिद्धेः सिषाधयिषाविरहवैशिष्ट्याभावेन तादृशसिद्धेस्तादृशानुमितिकाभिन्नत्वेन विरोधात् , द्वितीयक्षणसाधारणस्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणक्षा

षाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तं, द्वितीयन्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासम्पत्तये, यदि

---

नन्वेवं प्रागुक्तासिद्धिद्वयस्य द्वित्रिक्षणसाधारणनिरुक्तस्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया तदन्यसिद्ध्यभावरूपायाः पक्षतायाः सहजत एव सत्वात् सिषाधयिषाविरहद्वयोपादानं व्यर्थमत आह तथाचेति । वारणायेति । तत्रत्यसिद्धेः स्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेऽपि सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणस्तदुत्पत्तिकानुमितिकसिद्ध्यन्तराभिन्नतया विरोधित्वादिति भावः । स्वक्षणस्य विशेषणत्वे तद्दोषतादवस्थ्यादाह उत्तरक्षणस्येति । अनुमित्युत्तरक्षणपर्यन्तस्थायिस्थूलकालोपाधेरपि निरुक्तस्वाव्यवहितोत्तरकालत्वादेकानुमित्यनन्तरमन्यानुमितेर्वारणाय द्वितीयक्षणपदस्यावश्यकत्वादुत्तरकालस्येति नोक्तम् । द्वितीयं त्विति । विशिष्टान्तमित्यनुषज्यते । सिद्धेरिति । विशे-

---

ध्वंसाधिकरणत्वनिवेशे च उक्तदोषवारणेऽपि यत्रानुमितिद्वयं जायतामितीच्छा ततः साध्यवान् साध्यव्याप्यवान् साध्यव्याप्यव्याप्यवांश्च पक्ष इति परामर्शः, ततः साध्यतद्व्याप्ययोरपेक्षानुद्यामिकानुमितिः ततः पुनरनुमितिप्रसङ्गात् अत उत्पत्तिनिवेश आवश्यक इति दिक् ।

एवं–त्रिक्षणसाधारणाऽव्यवहितोत्तरत्वकल्पे । प्रागुक्तासिद्धिद्वयस्य—यत्र सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितीनां क्रमेणोत्पादस्तत्रत्यसिद्धेः, यत्र सिद्धिसिषाधयिषानुमितयस्तत्रत्यसिद्धेश्चेत्यर्थः । सहजत एव–सिषाधयिषाविरहविशेषणमन्तरेणैव । आह–स्थलान्तरे तद्व्यावृत्तिमाहेत्यर्थः । वारणायेतीति । तादृशसिद्धेस्तृतीयक्षणोत्पन्नानुमितिकतया निरुक्तसिद्धिभिन्नत्वविरहेण पक्षताप्रसक्तेरिति भावः । प्रथमसिषाधयिषाविरहविशेषणसत्वे प्रसक्तामापत्तिं वारयति तत्रत्यसिद्धेरिति ।

प्रथमक्षणे पूर्ववर्तिसिषाधयिषाविरहविशेषणसत्वेऽपि सिषाधयिषाविरहविशिष्टस्वक्षणः सिद्ध्युत्पत्तिक्षणे एव तादृशक्षणाऽव्यवहितोत्तरत्वस्यानुमित्युत्पत्तिक्षणे सत्वात् स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वघटिताऽव्यवहितोत्तरत्वकल्पे च अनुमित्युत्पत्तिक्षणे तत्सिद्धिनाशाधिकरणत्वस्य च सत्वान्नोक्तातिप्रसङ्गवारणसम्भव इत्याह तद्दोषतादवस्थ्यादिति । दीधितौ प्रथमं विशिष्टान्तमिति । तथाचोक्तस्थले सिद्ध्यव्यवहितोत्तरतृतीयक्षणेऽपि सिषाधयिषासत्वात् सिषाधयिषाविरहविशिष्टतादृशक्षणोत्पत्तिकत्वं नानुमितेरतस्तादृशसिद्धेरनुमितिप्रतिबन्धकत्वनिर्वाहः । तत्रैवेति । यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्रैवेत्यर्थः । तथा च द्वितीयविशिष्टान्तस्य यद्विशेषणत्वं यत्प्रयोजनकत्वं वा प्रागभिहितं, इदानीमपि तस्य तद्विशेषणत्वं तत्प्रयोजनकत्वमेवेति फलितम् । द्वितीयक्षणे इति । तृतीयक्षणेऽनुमितिनिर्वाहार्थमित्यादिः । सम्पत्तये इति । सिषाधयिषाविरहरूपविशेषणाभावेन विशिष्टाभावरूपपक्षतानिर्वाहायेत्यर्थः । अन्यथा–द्वितीयसिषाधयिषाविरहरूपविशेषणासत्वे । अत्रोत्तरक्षणे इच्छाविरहवैशिष्ट्यमात्रनिवेशे यत्रादौ अनुमित्सा ततो बाधानिश्चयस्ततो लौकिकसन्निक-

क्षणामित्यनुषज्यते । सम्पत्तये इति । अन्यथाऽनुमित्साशून्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नसिद्धेः सत्त्वात्तृतीयक्षणेऽनुमितिर्न स्यादिति भावः । न चैवं यत्र परामर्शात्मकासिद्धेरव्यवहितक्षणे तद्धर्मिकसाध्यवत्त्वांशेऽप्रामाण्यग्रहानन्तरं चानुमितिः तत्र तादृशाऽप्रामाण्यग्रहोत्पत्तिक्षणेऽनुमित्यापत्तेः तत्रत्यासिद्धिव्यक्तेः सिषाधयिषाविरहविशिष्टो यः स्वक्षणव्यवहितोत्तरक्षणः तदुत्पत्तिकानुमितिकत्वेन तदन्यसिद्धेः प्रागसत्त्वादिति वाच्यम् । अप्रामाण्यग्रहाभावविशिष्टतत्तत्सिद्धिव्यक्तित्वेनापि पक्षतावहिर्भावेणानुमितिविरोधित्वान्तरस्य वक्तव्यत्वादिति भावः । यद्यपि तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाऽभावस्यैव सम्यक्त्वात्सिद्धिपदं व्यर्थं परामर्शहेतुभूतस्य व्याप्तिस्मरणादेर्निरुक्ताव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतयैवाप्रतिबन्धकत्वात् , एवं च सिषाधयिषाविरहद्वयोपादानमप्यफलं, यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्रानुमित्साजनकस्य फलेच्छादेरेव स्वाव्यवहितोत्तरक्षणोत्पत्तिकानु मितिकाभिन्नस्य सत्त्वादनुमित्सोत्पत्तिक्षणेऽनुमित्यसम्भवात् । न च जातिध्वंसाद्यप्रसिद्ध्या निरुक्तस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नस्यात्मत्वादेः सत्त्वात्परामर्शमात्रादप्यनुमितिर्न स्यादतः सिद्धिपदमिति वाच्यम् । एतावतापि तादृशानुमितिकाभिन्नत्वाविषयकाभावस्यैव सम्यक्त्वे साध्यवत्त्वनिश्चयात्मिकायाः सिद्धेः प्रवेशानौचित्यात् । तथापि स्व-

---

षादिजन्यसिद्ध्यात्मकपरामर्शस्ततो घटेच्छा ततोऽनुमितिस्तत्रेच्छाविरहविशिष्टतादृशक्षणाव्यवहितोत्तरक्षणाऽप्रसिद्ध्या स्वपदेन तादृशसिद्धेर्वक्तुमशक्यतया प्रतिबन्धकीभूतसिषाधयिषाविरहविशिष्टतादृशासिद्धेः सत्त्वे पक्षताविरहादनुमितिर्न स्यात् । न च सिद्ध्यंशेऽपि सिषाधयिषाविरहविशिष्टत्वं परित्यज्य इच्छाविरहविशिष्टत्वमेव निवेश्यम्, तथाचोक्तस्थले इच्छाविरहविशिष्टतादृशसिद्धेरसत्त्वान्नानुमित्यनुपपत्तिरिति वाच्यम् । यत्र प्रथमं घटेच्छा ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमित्सा ततोऽनुमितिस्तत्रानुमित्साक्षणेऽनुमित्यापत्तिः, तत्रत्यसिद्धेः स्वक्षणाव्यवहितोत्तरेच्छाविरहविशिष्टक्षणोत्पत्तिकानुमितिकाभिन्नत्वेऽपि इच्छाविरहवैशिष्ट्याभावादतः सिद्ध्यंशे सिषाधयिषाविरहविशिष्टत्वनिवेशः । एवं च पूर्वोक्तानुमित्यनुपपत्तिभिया उत्तरक्षणेऽपि सिषाधयिषाविरहविशिष्टत्वनिवेश इति ।

**अनुमित्यसम्भवादिति** । अथ यत्रादौ अनुमित्सा ततः पर्वतो वह्निमान् वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्चेति परामर्शस्ततः साध्यतद्व्याप्ययोरनुमितिः ततः सुखात्मिकानुमित्यन्तरं जायतामितीच्छा ततोऽनुमित्यन्तरं तत्रानुमित्सास्थलेऽनुमित्यापत्तिः, स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकाभिन्नाभावस्यानुमित्सापूर्वं सत्त्वादतः सिषाधयिषाविरहपदोपादानमावश्यकमिति वैयर्थ्याभिधानाऽसङ्गतिरिति चेन्न ।

उक्तापत्तिवारणाय लक्षणत्वेनैव स्वातन्त्र्येण प्रतिबन्धकत्वस्य कल्पनीयत्वात् ।

स्वस्यानुगतत्वात्तादृशानुमितिकव्यक्तीनां तत्तद्व्यक्तित्वेन भेदा निवेश्याः, तत्र स्वपदेन सिद्धिव्यक्तय एव धर्तव्याः न तु व्यक्त्यन्तराणि तावच्छेदप्रवेशे गौरवात्, तथा च स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकासिद्धिभिन्नस्य परामर्शादेः सत्त्वेऽप्यनुमितिर्न स्यादतः सिद्धिपदम्। न चैवं कार्य्योत्पादस्य कारणतावच्छेदकाऽघटकत्वेन वा कार्य्योत्पादादिकं कारणतावच्छेदककोटौ निविशते इत्यग्रिमग्रन्थस्याऽभुक्तवान्तत्वापत्तिः, तत्रत्यादिपदेन स्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतत्तद्व्यक्तिप्रतियोगिकभेदकूटस्याप्युपग्रहात् । तथा च क्रमिकासिद्धिलिषाधयिषानुमितिस्थले प्रथमक्षणे पक्षतावारणार्थं विशिष्टान्तस्योत्तरक्षणाविशेषणत्वभ्रौष्ये द्वितीयमपि विशिष्टान्तं तत्रैव द्वितीयक्षणे पक्षतारक्षणार्थमावश्यकमित्यस्मद्गुरुचरणाः।

यत्तु स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसविषयकाभावस्य पक्षतात्वे परामर्शादेरनुमितिहेतुता न स्यादित्येककारणपरिशेषापत्तिभिया सिद्धिपदमिति । तन्मन्दम् । यत्र जागरणाद्यक्षणे स्मरणात्मकपरामर्शादनुमितिस्तत्र परामर्शोत्पत्तिदशायामेव तदापत्तिप्रसङ्गेन परामर्शादेरनुमितिहेतुत्वस्यावश्यकत्वात् तत्रत्यपरामर्शपूर्ववर्त्तिनां निखिलसविषयकानां स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेनाविरोधित्वादिति ।

केचित्तु अपेक्षाबुद्ध्यात्मकपरामर्शाच्चतुर्थक्षणेऽनुमित्यर्थं सिद्धिपदम् । अन्यथा परामर्शस्यैव निरुक्तानुमितिकभिन्नसविषयकत्वेनाप्रतिबन्धकत्वापत्तेरित्याहुः ।

तन्मन्दम् । चतुर्थक्षणे द्वित्वादिप्रत्यक्षस्यानुत्पादेन तादृशपरामर्शस्यापेक्षाबुद्धित्वे मानाभावात् । अन्यथाऽनुमित्सोत्तरं सिद्ध्यात्मकस्यैवापेक्षाबुद्ध्यात्मकपरामर्शस्य चतुर्थक्षणे सिद्धिनिवेशेऽप्यनुमित्यभावप्रसङ्गात्।

---

परे तु सिद्धिपदानुपादाने स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशानुमितिकभिन्नाभावस्यैव पक्षतात्वं वाच्यम् , तथा चोक्तस्थले प्रथमानुमितिक्षणे तादृशक्षणानुयोगित्वतादात्म्यप्रतियोगित्वसम्बन्धादेरेव तादृशानुमितिकभिन्नस्य प्रतिबन्धकत्वादनुमित्याक्षणे नानुमित्यापत्तिः । न च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाभावस्य पक्षतात्वे "न च जातिध्वंसाद्यप्रसिद्धा" इत्याद्युत्तरग्रन्थाऽसङ्गतिः, स्वरूपसम्बन्धेनाऽऽत्मनि आत्मत्वादेरसत्त्वादिति वाच्यम् । तत्र जातिपदस्य नित्यविषयतापरत्वात् , व्यर्थम्—नोक्तप्रयोजनकमित्यपि वदन्ति ।

यत्र जागरणाद्यक्षणे इति । न च जागृ निद्राक्षये इत्यनुशासनात् मनःसंयोगनाशानन्तरं स्मरणात्मकपरामर्शादित्यर्थो लभ्यते, तथा च जागराभिधानमनर्थकं निद्रावस्थायामपि ज्ञानसम्भवादिति वाच्यम् । जागराद्यपदेन पुरीतति नाड्यवच्छेदेन मनःसंयोगनाशाव्यवहितोत्तरत्वस्य मनोयोगाव्यवहितोत्तरत्वस्य च विवक्षणात् । एतेन तदानीं स्मरणात्मकपरामर्शाभिधानमनर्थकमित्यप्यपास्तम्, मनोयोगात्प्राक्क्षणविषयतदुपगमात् । न च ज्ञानरूपोद्बोध-

पुनरिच्छाजनिका सामग्री प्रतिबध्नात्यनुमितिं तदानुमित्यव्यवहितपूर्ववर्त्तिसि-

---

ननु यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षता-सत्त्वेऽपीच्छासामग्र्याः प्रतिबन्धकत्वादेवानुत्पत्तिसम्भवात्प्रथमविशिष्टा-न्तदलं व्यर्थमत एव द्वितीयमपि तथेत्यत आह यदि पुनरिति। सर्वत्रेच्छाज-नकीभूतज्ञानस्येच्छोत्पत्तिदशायां साक्षात्कारप्रसङ्गेन मानसत्वावच्छिन्नं प्र-त्यक्षसामान्यं वा प्रतीच्छासामग्र्याः प्रतिबन्धकत्वेऽप्यनुमितिं प्रति तस्या-स्तथात्वे मानाभावात्। न चेच्छासामग्रीदशायां स्मृतिशाब्दबोधाद्य-नुदयाल्लाघवेन जन्यज्ञानत्वावच्छिन्नं प्रत्येव तस्याः प्रतिबन्धकत्वमत-स्तत्सत्त्वेऽनुमित्यसम्भव इति वाच्यम्। सत्यामपीच्छासामग्र्यां पश्येयं स्पर्शेयं शृणुयां शाब्दयामीत्यादीच्छादशायां जन्यज्ञानोत्पादेन चाक्षुष-त्वस्पार्शनत्वश्रावणत्वशाब्दत्वादिप्रकारकेच्छाविरहविशिष्टेच्छासामग्रीत्वे-न चाक्षुषत्वस्पार्शनत्वशाब्दत्वादिप्रत्येकधर्मावच्छिन्नं प्रत्येव प्रतिबन्धक-तयाऽनुमितिमन्तर्भाव्येच्छासामग्र्याः प्रतिबन्धकत्वाऽकल्पनात्। जन्यज्ञा-नत्वावच्छिन्नं प्रति तत्तदिच्छाविरहकूटविशिष्टेच्छासामग्रीत्वेन विरोधि-तायामिच्छासामग्रीसत्त्वेऽपि पश्येयमितीच्छातश्चाक्षुषस्येव स्पार्शनस्य शाब्दबोधादेर्वा प्रसङ्गात् जन्यज्ञानत्वस्याविशिष्टत्वात्, तथा चानुमितावि-च्छासामग्र्या इवेच्छायामप्यनुमितिसामग्र्या विरोधित्वं सुवचं विनिगम-काभावेनैकशेषस्य दुष्करत्वादित्याशयेन यदीत्युक्तम्। यत्तु अनुमिति-सामग्र्यपेक्षयेच्छासामग्री लघुरिति सैवानुमितौ प्रतिबन्धिका न त्विच्छा-यामनुमितिसामग्री गुरुत्वादिति। तत्तुच्छम्। तथासत्यनुमित्साविरहवि-

---

काविरहात्कथं स्मरणमिति वाच्यम्। जीवनादृष्टादेर्ज्ञानाभिन्नस्याप्युद्बोधकत्वात्। न च विशि-ष्टानुभवे विशेषणधिया हेतुत्वात्तदानीमनुमित्युत्पादनमसङ्गतमिति वाच्यम्। विशिष्टप्रत्यक्षे एव तस्य हेतुत्वात्। न च तथापि अनुमित्युत्पादनं न सम्भवति तादृशानुमितिकभिन्नाया जीवनयोनिकृतेरेव विरोधिन्याः सत्वादिति वाच्यम्। जीवनयोनिकृतेः सविषयकत्वे माना-भावात्।

**अनुत्पत्तिसम्भवात्।** सिषाधयिषाकाले इति शेषः। **अत एव—प्रथमवि-शिष्टान्तदलस्य** निष्प्रयोजनकत्वादेव, **तथा—व्यर्थम्**, तादृशसिद्धेः स्वक्षणाव्यवहितोत्तरतृतीय-क्षणोत्पन्नानुमितिकतयैवाऽप्रतिबन्धकत्वेन तृतीयक्षणोत्पन्नानुमितिनिर्वाहादिति भावः।

**जन्यज्ञानोत्पादेनेति।** नन्वत्र पश्येयमित्यादीच्छासत्त्वे चाक्षुषादिसामग्रीसत्त्वे च-च्छानुत्पादेन इच्छां प्रति इच्छाविशिष्टचाक्षुषादिसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम् प्रति-बन्धकाभावस्य च कारणत्वादिच्छाघटितचाक्षुषादिसामग्र्यभावोपीच्छासामग्र्यन्तर्गतः, तथा च पश्येयमित्यादीच्छासत्त्वे इच्छासामग्र्येव नास्तीति चेन्न।

**शिष्टाया एवेच्छासामग्र्या अनुमितिविरोधित्वं वाच्यमन्यथाऽनुमित्साकालीनायामपीच्छासामग्र्यामनुमित्यभावापत्तेः । एवं चानुमित्साकालीनानुमितिसामग्रीदशायामिच्छानुत्पत्त्यर्थमिच्छासामान्यं प्रति स्वयानुमित्साकालीनानुमितिसामग्रीत्वेनावश्यं विरोधित्वं वाच्यमित्यनुमितिसामग्र्या गुरुत्वस्याकिञ्चित्करत्वादिति ध्येयम् ।**

---

गौरवभयात्कारणसामग्र्यां प्रतिबन्धकाभावस्याऽप्रविष्टत्वात् । स्पार्शनस्य शाब्दबोधादेर्वा प्रसङ्गादिति ।

ननु इच्छासामग्र्यभावदशायां पश्येयमितीच्छासत्त्वे चाक्षुषस्पार्शनसामग्र्योः सत्त्वे चाक्षुषस्यैवोत्पत्त्या स्पार्शनत्वावच्छिन्नं प्रति इच्छाघटितचाक्षुषसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यम् , एवं च यत्रेच्छासामग्री पश्येयमितीच्छाचाक्षुषस्पार्शनयोश्च सामग्र्यौ तत्रापि तत्तदिच्छाविरहकूटाविशिष्टेच्छासामग्र्या असत्त्वेऽपि इच्छाविशिष्टचाक्षुषसामग्र्या एव स्पार्शनप्रतिबन्धिकायाः सत्त्वात्कथं स्पार्शनापत्तिरिति चेन्न ।

यत्रेच्छासामग्री केवलं पश्येयमितीच्छैव स्पार्शनसामग्री च तत्राऽन्योन्यप्रतिबन्धात्किमपि न भवति, तत्रैव स्पार्शनापत्तेरभिप्रेतत्वात् । न च तत्र कस्याप्यनुत्पादाच्चाक्षुषस्येवेति ग्रन्थासम्भकतापत्तिरिति वाच्यम् । तस्य दृष्टान्तत्वेनोपन्यासादिति ।

**इच्छासामान्यं प्रतीति** । नन्वत्र इच्छात्वावच्छिन्नं प्रति पर्वतधर्मिकवह्न्यनुमितित्वप्रकारकेच्छाविशिष्टानुमितिसामग्रीत्वेन प्रतिबन्धकत्वे प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छा अनुमितिसामग्री इच्छासामग्रीसत्त्वे इच्छोत्पादप्रसङ्गात् । वह्न्यनुमितिविधायिणच्छाया उत्तेजकत्वे प्रमेयं जायतामितीच्छा अनुमितिसामग्री इच्छासामग्र्याश्च सत्त्वे इच्छानुत्पादप्रसङ्गात् , तस्मात्तदर्थस्तु इच्छात्वावच्छिन्नं प्रति यद्यदिच्छासत्त्वे अनुमितिसामग्रीसत्त्वे इच्छाया अनुत्पादोऽनुभवसिद्धः तत्तदिच्छाविरहकूटाभावविशिष्टानुमितिसामग्रीसत्त्वेन प्रतिबन्धकत्वम् ।

अत्रेयमाशङ्का—यद्यदिच्छासत्त्वे अनुमितिसामग्रीसत्त्वे इच्छाया अनुत्पादोऽनुभवसिद्धः तत्तदिच्छाभावकूटत्वेन लाघवात्प्रतिबन्धकत्वस्य सामञ्जस्ये किं गुरुतरतादृशसामग्रीत्वेनेति चेन्न ।

एतद्ग्रन्थस्य केचित्तुकल्पाभिप्रायेण पक्षधर्मिकसाध्यानुमितित्वप्रकारकेच्छात्वेनैवेत्याद्यभिप्रायकत्वात् तन्मते तत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वेनैवोत्तेजकत्वं तादृशेच्छासत्त्वे एवानुमितिः, एवं च तादृशानुमितित्वप्रकारकेच्छाविशिष्टानुमितिसामग्रीत्वेन प्रतिबन्धकत्वं परित्यज्य शुद्धतादृशानुमितित्वप्रकारकेच्छात्वेन प्रतिबन्धकत्वे यत्रादौ इष्टसाधनताज्ञानं ततः पर्वते वह्न्यनुमितिर्जायतामितीच्छा ततः पुनरिष्टसाधनताज्ञानं ततः पुनरिच्छा तस्याश्चानुत्पादप्रसङ्गात् पर्वतधर्मिकवह्न्यनुमितित्वप्रकारकेच्छाया इष्टसाधनताज्ञानक्षणेऽपि सत्त्वात् अतोऽनुमितिसामग्रीत्वेन प्रतिबन्धकत्वं वक्तव्यम् , तथाच तत्रानुमितिसामग्रीविरहादानुपपत्तिरिति केचित् ।

वस्तुतस्तु यत्र सिद्ध्यात्मकपरामर्शः तदुत्तरं सिषाधयिषा ततश्चानुमितिस्तत्क्षणे एवेष्टसाधनताज्ञाने तत इच्छोत्पत्तिस्तस्याः अनुपपत्तिः स्यात् । यद्यदिच्छासत्त्वे अनुमितिसामग्री-

द्भिन्नसिद्ध्यभावमात्रं पक्षतेति चेत्। तादृशसिद्धीनां तत्तद्व्यक्तित्वेन वाऽ-भावः कारणं निरुक्तरूपविशिष्टत्वेन वा। नाद्यः, अनन्तकार्यकारणभावप्र-

---

यद्यपि स्वाऽव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकालीनद्भिन्नसिद्ध्यभा-वस्यैव प्रक्रान्तत्वात्तदुपादातुमुचितं, गौरवस्य वक्ष्यमाणलक्षणेपि अवि-शिष्टत्वात्, तथापि कार्योत्पादस्यैव कार्याऽव्यवहितपूर्वत्वस्यापि कारणता-वच्छेदकत्वं निरसितुं तदन्तर्भावेण पक्षतां निर्वक्ति अनुमित्यव्यवहितेति। प्रकृतपक्षसाध्यकस्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्तिसिद्धि-भिन्नसिद्ध्यभावः प्रकृतसाध्यकानुमितौ पक्षतेत्यर्थः। प्रकृतपक्षसाध्यका-नुमितिप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वघटितस्य सामान्य-तस्तादृशानुमित्यव्यवहितपूर्वत्वस्याप्रसिद्धत्वात्तत्तदिति। न च प्रकृतप-क्षसाध्यकानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वरूपं सामान्यत-स्तादृशानुमित्यव्यवहितपूर्वत्वं सुवचमिति वाच्यम्। तस्याप्युत्पत्त्यन्त-र्गतस्वत्वघटितत्वेन विशेषतो विश्रामात्। इत्थं च स्वसमानाधिकरणत-त्तदनुमित्यव्यवहितपूर्ववर्त्तित्वावच्छिन्नभेदकूटस्य घटकतया तत्र स्वपूर्वव-र्त्तिसिद्धिकालीनानुमितिव्यक्तीनां निवेशः कार्यो न तु सिद्ध्यसमानका-लीनानुमितिव्यक्त्योऽपि निवेश्याः प्रयोजनाभावाद्गौरवाच्चेत्यावेदयितुं प्रथ-मं सिद्धिपदम्। यत्तु प्रकृतपक्षसाध्यकस्वसमानाधिकरणानुमितिसामा-न्याव्यवहितपूर्ववर्त्तित्वस्याप्रसिद्ध्या तन्निवेशासम्भवात् वस्तुगत्या तादृ-शानुमित्यव्यवहितपूर्ववर्त्ति यद्यत्स्वं तत्तद्भेदकूटस्यैव निवेश्यतया तत्र च सिद्धिभिन्नस्य मनःसंयोगादेः प्रतियोगिविधया प्रवेशे गौरवादतः

---

एवं इच्छाया अनुत्पादोऽनुभवसिद्धः तादृशेच्छासत्त्वे परामर्शसत्त्वेऽनुमितिक्षणे इच्छाया अनु-त्पादो अनुभवसिद्धः तत्तदिच्छाविरहकूटाभावस्याऽनुमितिक्षणेऽपि तादृशानुमितिसामग्रीत्वेन सत्वाद, प्रतिबन्धकत्वोक्तौ चाऽनुमितिक्षणे परामर्शस्यैनाऽसत्त्वेन सामग्र्यभावानानुपपत्ति-रिति ध्येयम्।

गौरवस्य वक्ष्यमाणलक्षणेऽप्यविशिष्टत्वादिति। केचित्तु सिषाधयिषाविरहवि-शेषणसार्थक्यस्याऽशक्यत्वेऽनुमित्यव्यवहितपूर्ववृत्तित्वं परित्यज्याऽव्यवहितोत्तरक्षणोत्पत्तिका-नुमितिकत्वरूपगुरुविशेषणोपादानमनुचितमित्याशयेनाऽह—अनुमित्यव्यवहितेत्याहुः। प्रकृतिपक्षसाध्यकेति। तथाच सिषाधयिषाविरहद्वयं नोपादेयमेवेति भावः। स्वसमानाधिकरणेति। तेन सिद्ध्यात्मकपरामर्शसत्त्वे व्यधिकरणानुमित्यव्यवहितपूर्व-त्वस्य तत्सिद्धौ सत्वेपि नानुमित्यापत्तिः, यज्ज्ञानान्तरमनुमितिरुत्पत्स्यते तादृशसिद्धेर-प्रतिबन्धकतावारणायाऽव्यवहितत्वोपादानम्। सर्वासामेव सिद्धीनां पूर्वजातयत्किंचिदनुमितिनि-रूपिताऽव्यवधानवत्तयाऽनुमित्यव्यवहिताद्भिन्नसिद्ध्यप्रसिद्धिरतः पूर्ववर्त्तित्वमुक्तम्। इत्थं च—तत्तदित्यस्य निवेशो स्थिते च। स्वपूर्ववर्त्तीति। स्वं-अनुमितिः।

सञ्जात् तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैयर्थ्यात् तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समयावच्छिन्नतत्तन्मनोयोगादीनां वा प्रतिबन्धकत्व

---

सिद्धिपदमिति मतम् । तत्तुच्छम् । तथासति कार्याव्यवहितपूर्वत्वस्यानिविष्टतयाऽग्रे तत्कारणतावच्छेदकत्वखण्डनस्योन्मत्तप्रलपितत्वापत्तेः । द्वितीयं तु सिद्धिभिन्नस्य परामर्शमात्रस्य सत्त्वेऽप्यनुमितेरुत्पत्त्यर्थमन्यथा तस्यैव प्रतिबन्धकत्वापत्तेरिति भावः । प्रथमकल्पं दूषयति तादृशेत्यादि । तत्तद्व्यक्तित्वेनेत्यस्य सिषाधयिषाविरहविशिष्टेत्यादिः । तथाच सिषाधयिषाविरहविशिष्टतत्तत्सिद्धित्वावच्छिन्नाभावेत्यर्थः । यथाश्रुते यत्र क्रमेण सिद्ध्यात्मकपरामर्शसिषाधयिषानुमितयस्तत्र सिषाधयिषाविरहाविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणस्तदुत्पत्तिकानुमितिकाभिन्नसिद्धः सिषाधयिषादशायां सत्त्वादनुमित्यनापत्तेः, इत्थं च सकलसिद्धावित्याद्यग्रिमग्रन्थोऽपि सङ्गच्छत इति ध्येयम् । निरुक्तरूपेति । सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिषाधयिषाविरहविशिष्टसिद्धित्वेनैवेत्यर्थः । अनन्तेति । अवच्छेदकभेदेनैव कारणत्वस्य नानात्वात् । नच तत्तत्सिद्ध्यभावकूटत्वेनैकरूपेणैव हेतुत्वम्, अपेक्षाबुद्धिविशेषविषयत्वरूपस्य कूटत्वस्यापेक्षाबुद्धिव्यक्तीनां भेदेन नानात्वसम्भवादिति भावः । ननु प्रामाणिकानन्त्यं न दोषायेत्यत आह तादृशेति । परामर्शदशायां यस्यां सिद्धौ नानुमित्सावैशिष्ट्यं तत्तत्सिद्धिव्यक्तावनुमित्साविरहविशेषणस्य व्यर्थत्वादित्यर्थः । परामर्शासमानकालीनासिद्धिव्यक्तीनामभावस्य हेतुत्वे मानाभावाच्चेत्यपि द्रष्टव्यम् । ननु सर्वस्यां सिद्धौ न देयमेव तद्विशेषणमत आह तत्तत्समयेति । सिद्ध्यधिकरणतत्तत्क्षणेन समं सम्बन्धव्यक्तीनामित्यर्थः । ननु तत्तत्समयसम्बन्धस्य विरोधित्वे सिद्धिमत इव पुरुषान्तरस्याप्यनुमितिर्न स्यात्तादृशसम्बन्धस्याविशिष्टत्वादत आह तत्तत्समयावच्छिन्नेति । सिद्धिकालीनतत्तन्मनोयोगव्यक्तीनां स्थिरतया सिद्धिविगमेऽप्यनुमितिर्न स्यादतोऽवच्छिन्नान्तम् । सिद्धिमत इव जनान्तरस्यापि तत्तत्समयावच्छिन्नमनोयोगसत्त्वात्तस्याप्यनुमितिर्न स्यादतस्तदिति मनोयोगस्य विशेषणम् । मनोविशेषणत्वे तु तत्तत्समयावच्छिन्नतन्मनःप्रतियोगिकसंयोगस्यापि पुरुषान्तरे सम्भवात् सिद्धिमत इव तस्याप्यनुमित्यनापत्तेरिति भावः । न च तत्तत्सिद्धित्वेन प्रतिबन्धकत्वमपेक्ष्य तत्तत्समयावच्छिन्नतन्मनोयोगत्वेन प्रतिबन्धकत्वं गौरवादेव परित्याज्यमिति वाच्यम् । त्वया सकलसिद्धावनुमित्साविरहवैशिष्ट्यस्येव मयापि सर्वस्मिन्मनोयोगे तत्तत्समयावच्छिन्नत्वस्यानुपा-

प्रसङ्गाच्च । नान्त्यः, सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः क-स्याश्चिन्नेत्यत्र नियामकाभावात् । न वा कारणतावच्छेदकावच्छिन्नसमाजा-

---

देयतयोरत्रापि दूषणसमाधानयोश्च साम्यादिति भावः । कस्याश्चिदेति । सिद्धेरनन्तरमनुमितिरित्यनुषज्यते । नियामकाभावादिति । नियामकाला भादित्यर्थः । विशिष्टाभावस्य विशेष्याद्यभावरूपतया निरुक्ताभावस्य वि-शेष्यीभूतसिषाधयिषाविरहविशिष्टसिद्धेरभावस्वरूपत्वे तादृशसिद्धि-सत्त्वे कदाप्यनुमितिर्न स्यात्, स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमि-तिकभिन्नत्वरूपविशेषणाभावरूपत्वे तु विवक्षितविवेकेनानुमित्युत्पादस्यै-वानुमित्युत्पादप्रयोजकत्वे पर्यवसानादात्माश्रयादिति भावः । ननु मणि-कारमते विशिष्टाभावस्यातिरिक्ततया तस्य सत्त्वासत्त्वमेवानुमितेरुत्पादा-नुत्पादानियामकं वाच्यमत आह नवेति । कारणसमाजाधीनतत्तद्धर्माव-च्छिन्नकार्यस्योत्पादादिकं तत्तद्धर्मावच्छिन्नकार्यस्य कारणतावच्छेदक

---

दीधितौ कस्याश्चिन्नेति । ननु आद्यकल्पे यत्र सिषाधयिषानाशक्षणे सिद्धिः ततः परामर्शः ततोऽनुमितिरित्यर्थं स्वध्वंसघटिताव्यवहितोत्तरत्वं निरुप्य यदि परिष्कारः क्रियते, तद-यत्रादौ तत्परामर्शद्वितीयक्षणेऽनुमितिर्जायतामितीच्छा तन्नाशक्षणे सिद्ध्यात्मकपरामर्शः तद् द्वितीयक्षणेऽनुमित्साविषयपरामर्शः ततोऽनुमितिः तस्याः सिद्ध्यात्मकपरामर्शद्वितीयक्षणे आपत्तिर्दुर्वारा तत्सिद्धेस्तादृशानुमितिकत्वेनाऽविरोधित्वात्, स्वातन्त्र्येण प्रतिबन्धकताकल्पने चातिगौरवम् । न च तथासति प्रथमकल्पे तथेत्यादिनोक्तदोषस्यैव जागरूकतया दीधितिकृ-तोऽनन्तकार्यकारणभावेत्यादिना दोषान्तरदानमनुचितमिति वाच्यम् । सिषाधयिषाविरहविशि-ष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टसिषाधयिषाविर हविशिष्टसिद्धित्वेनैव प्रतिबन्धकत्वस्वीकारात्, तादृशानुमितिकत्वनिष्ठभेदप्रतियोगितावच्छेद-कत्वं च स्वाश्रयत्वसम्बन्धावच्छिन्नं ग्राह्यम्, भेदवै० सामानाधिकरण्यसम्बन्धेन । भेदश्च व्याप्यवृत्तिः । यत्र सिषाधयिषानाशक्षणे सिद्धिः ततः परामर्शः ततोऽनुमितिः तत्रापि परा-मर्शोत्पत्तिक्षणे तादृशसिद्ध्यभावस्याक्षतत्वादेतादृशभेदरूपविशेषणाभावादित्यभिप्रायेण भावं वि-वृणोति विशिष्टाभावस्य विशेष्याभावरूपतयेत्यादिना । नन्वेतादृशरीत्याऽनुप पत्तिमात्रस्यैव वारणात्सिद्धिपदं सिषाधयिषाविरहद्वयमप्यनादेयमेव, तथाच सिषाधयिषावि-रहविशिष्टसिद्धिविशेष्याभावेन निरुक्तविशिष्टाभावस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूप-त्वसङ्कलनमुन्मत्तप्रलपितमित्यत आह स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमिति-कभिन्नत्वरूपविशेषणाभावरूपेत्यादि । एतेन स्वरूपसम्बन्धेन तादृशानुमितिकभि-न्नत्वविशिष्टाभावस्य तादृशभिन्नत्वरूपविशेषणाभावत्वरूपकथनमुन्मत्तप्रलपितम्, तथासति घटाभावत्वादेरपि घटत्वाभावरूपतापातादिति निरस्तम् ।

आत्माश्रयादिति । अत्रात्माश्रयत्वं च स्वस्मिन् स्वप्रयोजकत्वरूपं, तथाचाऽयं

धनिकाव्ययोर्गतत्वादिकं कारणतावच्छेदककोटौ निविशते, तथासति उत्पत्ति-कालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकर-

---

कोटौ न निविशते गुरुधर्मेणैव तादृश्येणापि जनकतायामन्यथासिद्धत्वा-दित्यर्थः। तेन ज्ञानोत्पत्त्यादिविशिष्टबुद्धौ ज्ञानोत्पत्त्यादिज्ञानत्वेन हेतुतायां कार्योत्पादस्याऽवच्छेदकत्वेऽपि ज्ञानोत्पत्तिविशिष्टबुद्ध्युत्पत्तित्वेनाऽप्रवे-शान्न दोषः। आदिपदात्कार्याव्यवहितपूर्वत्वादेः स्वक्षणाव्यवहितोत्तर-क्षणानुत्पन्नकार्यकाव्यत्वस्य च परिग्रहः। कार्योत्पादादिघटितधर्मेण हेतुत्वे प्रतिबन्दिमाह तथासतीति। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमाना-धिकरणानुमितिर्यस्य तादृशसविषयकत्वेनेत्यर्थः। कारणत्वं स्यादित्यग्रे-णान्वयः। स्वक्षणाव्यवहितोत्तरतादृशानुमितिकस्य परामर्शस्यैव सत्त्वा-दनुमित्युत्तरानुमितेर्वारणाय उत्पत्तिकालावच्छिन्नेति। स्वोत्पत्तिक्षणाव-च्छिन्नेति तदर्थः। उत्पत्त्यवच्छिन्नस्य घटादिज्ञानस्यो(१)त्तरमप्यनुमितिः स्यादतः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकेति। स्वक्षणेत्यत्र क्षणः सम-यमात्रं न तु क्षणत्वं निवेश्यं, वैयर्थ्यात्। अनुमितेरपि स्वसमयाव्यवहि-तोत्तरीभूतस्वस्थितिक्षणपर्यन्तस्थायिप्रहराद्युत्पत्तिकानुमितिकतया ततो-ऽप्यनुमित्यन्तरापत्तिरतो द्वितीयं क्षणपदम्। अनुमितेरपि स्वक्षणाव्यवहि-तोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वात्तदुत्तरमनुमित्यन्तरस्य वारणाय उत्पत्तिपदम्। न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वमेव

---

स्वप्रयोजकः स्यात्तदा स्वभिन्नः स्यादित्येवाऽऽपत्तिः। एवं चाऽऽपाद्याभावेनापादकाभावानुमाने उत्पत्तौ उत्पत्तिप्रयोजकत्वाभावस्य प्रसिद्ध्या उत्पत्तिघटितलक्षणकरणाऽसम्भवादित्याशयः। न निविशते इति। तद्धर्मावच्छिन्नोत्पत्तित्वादेस्तद्धर्मपर्याप्तावच्छेदकताकजन्यतानिरूपित-जनकतावच्छेदकघटकत्वं न स्वीक्रियते इत्यर्थः। उत्पत्तित्वेनाऽप्रवेशाददोष इति। यथोक्तकार्यकारणभावस्य ज्ञानोत्पत्तित्वेन पदार्थान्तरप्रकारकज्ञानसाधारण्याय ज्ञानत्वावच्छिन्न-प्रकारतानिरूपितउत्पत्तित्वावच्छिन्नप्रकारताकबुद्धित्वावच्छिन्नं प्रति ज्ञानत्वावच्छिन्नप्रकारता निरूपितोत्पत्तित्वावच्छिन्नविशेष्यताकज्ञानत्वेन हेतुत्वम्। तथाचोत्पत्तिजनकतावच्छेदकत्वनि-यमेनैवोपपत्तौ प्रागुक्तप्रयासो वृथैव ज्ञानोत्पत्तिज्ञानजनकतावच्छेदकतायामेतावत्प्रयास इति वाच्यम्। एकविषयतावारणाय जनकतावच्छेदकविषयताया सम्मतेऽवच्छेदकप्रकारतायांश्च तद्व्यक्तिनिष्ठत्वेनैवोक्तदोषवारणसम्भवे ज्ञानोत्पत्तित्वस्य ज्ञानजनकतावच्छेदकाघटकत्वम्। न च तद्व्यक्तित्वेन ज्ञानोत्पत्तिज्ञानजनकतावच्छेदकत्वमावश्यकमिति वाच्यम्। तथापि तद्धर्मा-वच्छिन्नोत्पत्तित्वस्य. तद्धर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकाघटकत्वनियमेनैवोपपत्तौ जन्यतायां तद्धर्मपर्याप्तावच्छेदकताकत्वनिवेशस्यानुपयुक्तत्वादिति चेन्न। अनुमितिः अनुमिति-

---

(१) कालान्तरीणानुमिति· मानाधिकरणस्येत्यर्थ.।

तदर्थं उच्यतामिति वाच्यम्। यत्र साध्यानुमितिरियं जायतामितीच्छया साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमित्युत्तरं साध्यमात्रस्यानुमितिस्तत्र साध्यस्यानुमित्यन्तरप्रसङ्गात्, पूर्वानुमितेः त्रिक्षणस्थायित्वात्, तत्रोत्पत्तिः आद्यक्षणसम्बन्धः, आद्यक्षणसम्बन्धत्वं च स्वाधिकरणसमयध्वंसानधिकरणत्वमात्रं न तु स्वाधिकरणत्वमपि प्रवेश्यं वैयर्थ्यादिति द्रष्टव्यम्। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकपुरुषान्तरानुमितिकादृष्टादिज्ञानादनुमितेर्वारणाय स्वसमानाधिकरणेति। एकत्र पुंसि ताद(१)शानुमितिकस्य द्वित्वस्य पुरुषान्तरेऽपि सत्त्वात्तत्रानुमितेर्वारणाय सविषयकेति। सिद्ध्यात्मकपरामर्शानुमित्सानुमितीनां क्रमिकत्वस्थले ताद(२)शज्ञानासम्भवात् ज्ञानत्वापेक्षया गुर्वपि सविषयकत्वं निवेशितम्। न चैतस्य स्वत्वद्वयघटितत्वादुक्तरूपेण हेतुतायां गौरवमिति वाच्यम्। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिसामानाधिकरण्ये तात्पर्यादिति भावः। कार्योत्पादस्य कारणतावच्छेदकत्वे प्रतिवन्दिमुक्त्वा कार्याव्यवहितपूर्वत्वस्य तथात्वे प्रतिबन्दिमाह स्वसमानेत्यादि। अत्र तादृशानुमित्यव्यवहितपूर्वत्वं न तादृशानुमितिप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तादृशानुमितिप्रागभावाधिकरणत्वरूपमप्रसिद्धत्वात्, किन्तु तादृशानुमितिक्षणोत्पन्नध्वंसप्रतियोगित्वं, तथाच सिद्धिमात्रादप्यनुमित्यापत्तिस्तस्यापि स्वसमानाधिकरणानुमित्युत्पत्तिक्षणोत्पन्नध्वंसप्रतियोगिप्रहरादिकालोत्पन्नत्वादतः क्षणपदम्। यत्र परामर्शेन स्वनाशक्षणेऽनुमितिर्जन्यते तत्र द्वितीयक्षणेऽप्यनुमित्यापत्तिः परामर्शस्यैव स्वसमानाधिकरणानुमित्यव्यवहितप्राक्क्षणावृत्तित्वरूपत्त्वयवच्छिन्नस्य सत्त्वादुक्तमुत्पन्नेति। न च स्वत्वस्याननुगतत्वादुक्तरूपेण हेतुत्वमसम्भवीति वाच्यम्। यत्वतत्त्वादेरिव स्वत्वस्याप्यनुगतत्वमङ्गीकृत्यैव दूषणोपक्रमात्, अन्यथा तद्व्यक्तित्वेन स्वपदार्थस्य प्रवेशे कार्योत्पादादेर्गुरुत्वादेव कारणतायामप्रवेशसम्भ-

---

व्यक्तिः अनुमित्युत्पत्तिमत्त्वस्य प्रमात्मकज्ञानादेव जायते। तादृशं च तत्पक्षकानुमितिविधेयकानुमितौ लाघवादनुमितिव्यक्त्यनुमित्युत्पत्तिमत्तादृशं चेत् ज्ञानत्वेन हेतुतया निरुक्तजन्यताया तद्धर्मपर्याप्तावच्छेदकताकत्वनिवेशस्यावश्यकत्वात् तादृशानुमितिनिष्ठजन्यतायां देवास्य निवेशादनुमितित्वपर्याप्तावच्छेदकताकत्वाभावात् तदभिप्रायेण ग्रन्थकृतापि ज्ञानोत्पत्त्यादिपदमुपात्तम्। तस्य चाव्यवहितोत्तरत्वं बोध्यमिति ध्येयम्।

तथा च—ध्वंसघटिताऽव्यवहितपूर्वत्वनिवेशे च। सिद्धिमात्रादप्यनुमित्यापत्तिरिति। नन्वनुमितिपूर्वस्थूलकालमात्रस्यैवानुमितिप्रागभावाधिकरणाव्यवहितप्राक्क्षणप्रा

---

(१) स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणेत्यर्थः।

(२) स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकेत्यर्थः। ज्ञानाऽसंभवादिति। अनुमित्यव्यवहितपूर्वक्षणे ज्ञानोत्पत्त्यनियमादिति भावः तथाच तत्राऽनुपपत्तये सविषयकत्वं निवेशितमित्यर्थः।

त्वेनान्यथासिद्धिसुद्ध्या तदीयावच्छेदकत्वखण्डनस्योन्मत्तप्रलपितत्वापत्तेरिति भावः । आदिपदलभ्यस्य स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्यकान्यत्वस्य कारणतावच्छेदकत्वप्रवेशे बाधकमाह स्वक्षणेत्यादि । स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वसमानाधिकरणानुमितिर्येषां तदन्यसविषयकत्वेनेत्यर्थः । अत्राप्युत्पत्त्यवच्छिन्नत्वविशेषणं प्रवेशनीयमिति नातिप्रसङ्गः ।

---

गभावाधिकरणतयाऽव्यवहितपूर्वत्वाभावेनैव वारणसम्भवे क्षणपदं व्यर्थम्, अत्राऽनुमित्यव्यवहितप्राक्क्षणोत्पन्नकालस्य तथात्वेन तदुत्तरत्तिकानुमित्युत्तरमनुमित्यापत्तिरतः क्षणपदमिति वाच्यम् । अव्यवहितपूर्वत्वावच्छिन्नत्वस्योत्पत्तौ निवेशादेव सामञ्जस्ये क्षणत्वपर्यन्तस्य व्यर्थत्वादित्यतस्तादृशाव्यवहितपूर्वत्वं न तादृशानुमित्युत्पत्तिक्षणस्याप्रसिद्ध्याऽव्यवहितपूर्वत्वस्याप्रसिद्धितादवस्थ्यात् । न च स्वसमयध्वंसाधिकरणत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वकालिकोभयसम्बन्धेनानुमितिमत्क्षणत्वं सामान्यतोऽनुमित्युत्पत्तिक्षणत्वं, एवं ध्वंसे तादृशक्षणोत्पत्तिकत्वमपि निरुक्तोभयसम्बन्धेन तादृशक्षणवृत्तित्वरूपमव्यवहितपूर्वत्वघटकमतो नाऽप्रसिद्धिरिति वाच्यम् । तथासति स्वप्रागभावाधिकरणकालप्रागभावाधिकरणत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वप्रागभावाधिकरणत्वोभयसम्बन्धेनानुमितिमत्क्षणत्वस्य सामान्यतोऽनुमित्यव्यवहितपूर्वक्षणत्वस्यापि प्रसिद्धतयाऽप्रसिद्ध्यभिधानमसङ्गतमिति चेन्न ।

स्वप्रागभावमनङ्गीकृत्यैवाप्रसिद्ध्यभिधानात् ।

तदन्यसविषयकत्वेनेत्यर्थ इति । स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वसमानाधिकरणानुमितिकं स्वं अनुमितिसामग्र्यसमवधानक्षणोत्पन्नं घटादिज्ञानादिकमेव तदन्यसविषयकोऽनुमित्यव्यवहितपूर्वोत्पन्नतत्समानाधिकरणपरामर्शादिः ततोऽनुमित्युपपत्तिः । नातिप्रसङ्ग इति । नोक्तरीत्याऽनुमित्यनन्तरमनुमित्यापत्तिरिति भावः ।

अथ क्रमिकसिषाधयिषायाः स्वाव्यवहितोत्तरक्षणोत्पन्नस्वसमानाधिकरणानुमितिकाभिन्नसविषयकत्वस्य विवक्षणीयतया न सिषाधयिषाचतुर्थक्षणे पञ्चमक्षणे वाऽनुमित्यनुपपत्तिः तत्र तत्र सिद्ध्यात्मकपरामर्शस्य च तथात्वादित्यपि सार्वभौमानां कल्पान्तरम्, तदनिराकरणाद्दीधितिकृतो न्यूनता दुर्वारैव । न च स्वाव्यवहितोत्तरक्षणोत्पन्नस्वसमानाधिकरणानुमितिकत्वं, स्वाव्यवहिदोत्तरक्षणस्य स्वसमानाधिकरणानुमित्युत्पादाभावकत्वं तथा च तस्यानुमित्युत्पादघटिततया कार्योत्पादघटितधर्मस्य कारणतावच्छेदकत्वखण्डनेनैव तद्घटितधर्मस्य कारणतावच्छेदकत्वखण्डनं भवतीति वाच्यम् । तादृशानुमितिकपदेन स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वोत्पत्तिसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकसमानाधिकरणानुमितिकत्वस्य विवक्षितत्वादिति चेन्न ।

कार्योत्पादादिकमित्यादिपदेन निरुक्तधर्मस्याप्युपग्रहादिति तत्रैव प्रतिबन्दिदर्शनपरतया दीधितिकारस्य तृतीयप्रतिबन्धिलक्षणम् ।

णानुमितिकसविषयत्वेन, स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयकत्वेन, स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयत्वेन वा, किंवा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात्, अव्यवहितोत्तरश्च द्वितीय एव क्षण

---

केचित्तु प्रागुक्तस्योत्पत्तिघटकस्वत्वघटितत्वेनानुगतत्वाभावादुक्तं स्वक्षणेत्यादि । न चैकानुमित्युत्तरमनुमित्यन्तरस्य वारणार्थमस्यापि स्वोत्पत्तिकालावच्छिन्नत्वेन विशेषणीयत्वादननुगमतादवस्थ्यम् । स्वोत्पत्तिकालावच्छिन्नत्वेन स्वानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य विवक्षितत्वादित्याहुः । तत्तुच्छम् । अनुगतस्वत्वमङ्गीकृत्यैव दोषोपक्रमात् । अन्यथा कार्योत्पत्त्याद्युपलक्षितायास्तद्व्यक्तेरेव कारणतावच्छेदकत्वे कार्योत्पादादेरवच्छेदकत्वखण्डनस्यासङ्गतत्वापत्तेः, पश्चाद्वक्ष्यमाणस्यापि स्वत्वगर्भत्वेन स्वग्रन्थविरोधापत्तेश्चेति दिक् ।

ननु सविषयकमात्रस्यैव प्रायशः स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणयत्किञ्चिदनुमितिव्यक्तिकतया तदन्यसविषयकस्य संसारिण्यभावात् परामर्शमात्रादप्यनुमितिर्न स्यात्। तादृशक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिसामान्यकाभिन्नसविषयत्वेन कारणत्वे महागौरवमत आह किंवेति । यत्तूक्तरूपेण हेतुतायामनुमितिसामान्योपधायकत्वं परामर्शस्य न स्याद्भिन्नस्थस्वस्थपरामर्शादनुमितिस्थले कथितरूपावच्छिन्नस्य तस्यासत्त्वादत आह किंवेत्यादिकमिति । तन्न । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन हेतुत्वोक्त्या पूर्वमेव परामर्शस्यानुमित्युपधायकतानियमस्य त्यक्तत्वात् तदाशङ्कने सन्द-

---

केचिदित्यादि । विवक्षितत्वादिति । अथैवमप्यननुगमतादवस्थ्यम्, तत्परामर्शानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य परामर्शद्वितीयक्षणोत्पन्नप्रकृतपक्षसाध्यकानुमित्युपधायकपरामर्शादावसत्त्वात् । न च तत्परामर्शानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य तत्तत्परामर्शादावसत्त्वेऽपि न क्षतिः एतत्परामर्शानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्यैव सत्त्वात्, निवेशनीयमपि तत्तत्कूटान्यतमवत्त्वमिति वाच्यम् । तथासत्यनुमित्यन्तरमनुमित्यापत्तितादवस्थ्यात् । न च स्वानुत्पत्तिक्षणावच्छेद्याभावकूटवत्त्वस्वतादात्म्योभयसम्बन्धेन यत्किञ्चिद्विशिष्टस्य निवेशान्नानुमित्यन्तरमनुमित्यापत्तिः, नवाऽननुगम इति वाच्यम् । स्वोत्पत्तिक्षणावच्छिन्नत्वस्वतादात्म्योभयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वनिवेशेनैव प्रागुक्तदोषवारणसम्भवे नञ्द्वयप्रवेशवैफल्यप्रसङ्गादिति चेद् ।

अत्रापि विशिष्य क्षणनियमस्यावहितैः करणीयत्वात्, तथा च परामर्शोत्पत्त्यनधिकरणतत्परामर्शसमानाधिकरणात्मवृत्त्यावृत्तिगुणवैशिष्ट्याभाव एतत्परामर्शोत्पत्त्यनधिकरण एतत्पराम-

इति नातिप्रसङ्गः । न चादिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिवि-
नाशस्तत्रोत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्यातथात्वादिति वाच्यम् । अनु-
मितिसामग्र्या विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेरन्ततः सं-

---

शेविरोधापत्तेः । अत्रानुमितिपूर्ववर्तिनो ज्ञानस्यानुमितिदशायामपि स-
त्त्वादुत्तरकालमनुमितेर्वारणाय तादृशपूर्ववर्तित्वविशिष्टत्वमुक्तं, तथाच तद-
वच्छिन्नस्य प्रागसत्त्वान्न दोषः । ज्ञानत्वादिनेत्यादिना सविषयत्वभावना-
त्वादेः परिग्रहः । ननु प्रथमकल्पे तृतीयक्षणसाधारणस्य प्रागुक्ताव्यवहि-
तोत्तरत्वस्य प्रवेशे व्याप्तिज्ञानमात्रादनुमितिः स्यात्तस्यापि परामर्शस-
त्त्वपरया स्वाव्यवहिततृतीयक्षणोत्पत्तिकानुमितिकत्वादत आह स्वाव्यवहितो-
त्तरश्चेति । तथाच स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकर-
णत्वगर्भमेवाव्यवहितोत्तरत्वं निवेश्यमिति भावः । नचेति वाच्यमित्यन्वयः ।
पूर्वोत्पन्नस्यैव परामर्शस्य स्थितिक्षणेऽनुमित्यव्यवहितपूर्वत्वविशिष्टस्य
सम्भवात् किंवेत्यादिकल्पे दोषासम्भवादादिमेषु त्रिष्वित्युक्तम् । अतथा-
त्वादिति । स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात् स्वसमा-
नाधिकरणाव्यवहितपूर्वक्षणोत्पन्नत्वाभावात् स्वक्षणाव्यवहितोत्तरक्षणानु-
त्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयकत्वाभावाच्चेत्यर्थः । तदा-

---

शेसमानाधिकरणात्मवृत्त्यन्त्यत्तिगुणवैशिष्ट्याभावकूटवत्त्वस्य सकलपरामर्शादिसाधारणतया नान-
नुगमो न वाऽनुमित्यन्तरमनुमित्यापत्तिरिति ।

न च चन्याभावलक्षणस्य ध्वंसस्य प्रवेशवैयर्थ्यम्, अभावान्तराणामुत्पत्तिविरहेणाऽनिवे-
शादिति वाच्यम् । ध्वंसत्वनिरूपकप्रतियोगितालाभार्थं तदुपादानात्, अन्यथा सर्वेषामेव क्षणानां
अनुमित्युत्पत्तिक्षणोत्पत्तिकत्वस्वभेदात्मकध्वंसान्तरप्रतियोगितयाऽतिप्रसंगापत्तेरिति । न च सि-
द्ध्यात्मकपरामर्शक्षणस्यापि अनुमित्यव्यवहितपूर्वत्वानधिकरणत्वविरहेण तद्घटितपक्षताप्रसि-
द्धिरेव न चातिप्रसंग इति वाच्यम् । अत्रातिप्रसंगपदेनाऽव्यवहितपूर्वत्वलक्षणातिप्रसंगस्य
संग्रहात्, निरुक्तानधिकरणत्वघटितपक्षताप्रसिद्ध्या न तस्याऽनुमितिजनकत्वसंभवः किन्तु
परामर्शस्यैव, तथाच सिद्ध्यात्मकपरामर्शादप्यनुमित्यापत्तिरित्यतिप्रसंगपदार्थस्य संभवात् ।

पूर्वकल्पत्रये ज्ञानत्वमुपेक्ष्य सविषयकत्वनिवेशनप्रयोजनं स्फुटयितुं शङ्कते दीधितौ न-
चेति । दोषाऽसंभवादिति । अनुपपत्त्यभावादिति यावत् । दीधितौ अतथात्वादिति ।
द्वितीयक्षणेऽनुमित्यनुत्पत्त्या तत्कारणतावच्छेदकानाक्रान्तत्वात्, उत्पत्तिक्षणावच्छिन्नस्याऽनुमि-
त्यव्यवहितप्राक्क्षणेऽसत्त्वाच्चेत्यर्थः । अनुमित्युत्पत्तिक्षण इव दर्शितस्थलेऽनुमितिपूर्वमपि
परामर्शेन प्रतिबन्धादनुव्यवसायादिर्नोत्पत्तुमर्हतीति शंकानिरासायाह अनुमितिसाम-
ग्र्या विरोधिन्या विरहेणेति । तथाच परामर्शमात्रं न प्रतिबन्धकं अपि तु विरोधिसा-
मग्र्येव, तदानीं तु न तत्सामग्री, तस्याः फलाऽव्यवहितप्राक्क्षणे एव सत्त्वात् । नाश्रद-

स्काराद्वा तत्सम्भवात् संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात्, स्या- द्वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन

---

नी-विरोधिसिद्ध्यादेर्नास्तदशायाम् । अनुव्यवसायादेरित्यस्य पञ्चम्यन्तस्य स- म्भवादित्यनेन योजना । अनुव्यवसायादितोऽनुमितिसम्भवादित्यर्थः । आ- दिना बाह्यप्रत्यक्षान्तराद्युपसङ्ग्रहः । ननु यत्र परामर्शविषयिण्या कामि- नीजिज्ञासया परामर्शमात्रमुत्पाद्य नष्टं परामर्शोत्तरक्षणे तया प्रतिबन्धात् ज्ञानमात्रस्यैवानुत्पत्त्या पश्चादनुमितिर्न स्यादत आह अन्ततः संस्कारेति । अ- न्ततो जीवनयोनिकृतेरसत्त्वेन च यत्र सर्वांश एवोपेक्षात्मक उक्तपराम- र्शस्तत्र संस्कारस्यासम्भवस्तादृशस्थले मानाभावात् । अनुमित्यात्मक- कार्येणानुमितसंस्कारस्यान्यथानुपपत्त्याऽनुपेक्षात्मकस्यैव तत्र कल्पनादि- त्यपि स्वरसाद्वा किंवेत्यादिकल्पस्याश्रुतत्वादिति भावः । ननु तादृशानु- मितेः संस्कारजन्यत्वे स्मृतित्वापत्तिरत आह संस्कारजन्येति । जन्यत्वं च- अन्वयेन ग्राह्यम्, नातः संस्कारध्वंसे व्यभिचारः । प्रागेवशब्दः सुतरामर्थे निपातितः । निरासादिति । प्रत्यभिज्ञायां व्यभिचारादप्रयोजकत्वाच्च संस्का- रजन्यत्वे स्मृतित्वानियमादिति भावः । ननूक्तप्रतिबंदिभयाज्ज्ञानविशुकार- णताया अवच्छेदकविधया कार्योत्पादादिकमनिवेश्यतामभावरूपायाः प्र- तायाः कारणतायां तन्निवेशे न किञ्चिदपि बाधकमतस्तत्रापि प्रतिबन्दि- माह स्याद्वेति । तथासतीत्यनुषज्यते, ज्ञानमात्रस्यैव प्रायशो व्यधिकरणानु- मित्यव्यवहितपूर्ववृत्तित्वात्तदन्यस्य प्रलयादेरभावः परामर्शविधुरेऽप्यात्म- न्यस्तीति तत्रानुमितेर्वारणाय स्वसमानाधिकरणान्तम् । अनुमितिश्च प- क्षसाध्यादिविशेषनियन्त्रिता ग्राह्या, तेनैकसाध्यानुमितिदशायां सिद्धा-

---

ज्ञायामिति । परामर्शद्वितीयक्षणे इति यावत् । संस्कारादिति । तस्यापि सविषयक- त्वघटिततत्संस्कारणतावच्छेदकाक्रान्तत्वादिति भावः ।

दीधितौ फलानुत्पादबलेनापीति । नन्वयं तत्क्षणावच्छिन्नपवनादिपरमाणुसंयोग- ध्वंसोत्पत्तिमान् तत्क्षणावच्छिन्नानुमित्यनुत्पादवत्त्वादित्यनुमानं न संभवत्येव, तत्क्षणावच्छि- न्नानुमित्यनुत्पादात् तादृशसाध्याभाववद्वृत्तिर्न वेत्यनुकूलतर्काभावसहकृतेन व्यभिचारसंशयेन प्रतिबन्धात्, तादृशसाध्यव्याप्तिनिश्चयाभावात् । न च स्वसमानाधिकरणानुमित्यव्यव हितपूर्वक्षणवृत्तित्विभावो हेतुरिति निश्चय एवाऽनुकूलतर्कोऽस्तीति न निरुक्तव्यभिचार- ज्ञानस्य प्रतिबन्धकत्वसंभव इति वाच्यम् । स्वसमानाधिकरणानुमित्यव्यवहितप्राक्क्षणवृ- त्तिभिन्नाभावः स्वसामानाधिकरण्यस्वावच्छेदकक्षणावच्छिन्नत्वोभयसंबन्धेन अनुमित्यभावाधि- करणताविशिष्टाधिकरणताको न वेत्यन्वयव्यभिचारसंशयस्य प्रतिबन्धकतया तादृशहेतुतानि- श्चयाऽसंभवादित्याशंकया दीधितिग्रन्थमवतारयति ननिवत्यादिना ।

वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्ववि-
शिष्टत्वेन वा प्रतिबन्धकत्वम् । तदव्यवहितपूर्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वं-

---

द्धिसत्त्वेऽपि नान्यसाध्यकानुमितेरुत्पादः । तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रति-
योगित्वलक्षणस्य वक्ष्यमाणाव्यवहितपूर्वत्वस्यानुमितिस्थूलकालेपि स-
त्त्वात्तद्वृत्तिसिद्धिसत्त्वेऽप्यनुमित्यापत्तेरतः क्षणेति । ननु यत्र सामग्रीव
शात् साध्यतद्व्याप्ययोरनुमित्यात्मकपरामर्शः ततः साध्यस्यानुमित्यन्त-
रं जायतामितीच्छा ततोऽनुमित्यन्तरं तत्रानुमितिसाकालेप्यनुमित्यापत्तिः
पूर्वोत्पन्नानां सर्वेषामेव तदात्मगुणानां तादृशानुमित्यव्यवहितपूर्वक्षणव-
र्त्तित्वेनाविरोधित्वादत आह स्वसमानेति । तथा चोक्तस्थले प्रथमानुमिति
क्षणस्यैव तादृशाव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टस्य परा-
मर्शादेरेव विरोधिनः सत्त्वान्न दोष इति भावः । अनुमित्युत्पत्तिपर्य्यंत
स्यापि स्थूलकालोपाधेरपि तादृशानुमित्यव्यवहितपूर्वत्वानधिकरणतया
तद्वृत्तित्वविशिष्टस्य परामर्शमात्रस्य सत्त्वेऽप्यनुमितिर्न स्यादतः क्षणप
दम् । ननु तादृशानुमित्यव्यवहितपूर्वत्वं तादृशानुमित्युत्पत्तिक्षणोत्पत्ति
कध्वंसप्रतियोगित्वरूपमेवाग्रे वक्ष्यते न तु तादृशानुमित्युत्पत्तिकालोत्पत्ति
कध्वंसप्रतियोगित्वरूपं, तथासति सर्वेषामेव क्षणानां तादृशानुमित्युत्प
त्त्यधिकरणीभूतस्थूलकालोत्पन्नध्वंसप्रतियोगितया निरुक्ताव्यवहितपूर्व
त्वानधिकरणत्वस्यैव दुर्लभत्वापत्तेः । एवं च तादृशानुमित्युत्पत्तिक्षणो
त्पत्तिकध्वंसप्रतियोगित्वानधिकरणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वम
पेक्ष्य तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्ति
त्वविशिष्टत्वेन विरोधित्वं युक्तं क्षणद्वयाप्रवेशेन पूर्वतो लाघवादित्याशये
नाह स्वसमानेति । अत्र तादृशसमयाव्यवहितपूर्वत्वं तादृशसमयोत्पत्तिक
ध्वंसप्रतियोगित्वमात्रं न तु तादृशसमयोत्पत्तिकालोत्पत्तिकध्वंसप्रतियो
गित्वमाद्योत्पत्तेर्वैयर्थ्यान्निष्फलत्वाच्च । समयपदं त्वव्यवहितपूर्वत्वघट
कोत्पत्तेः कालिकसम्बन्धेन वृत्तित्वलाभार्थमन्यथाऽनुमितिपूर्वक्षणस्यापि
तादृशानुमित्युत्पत्त्यनधिकरणबुद्ध्यादौ विषयित्वादिसम्बन्धेन वर्तमानो-
त्पत्तिको यो ध्वंसस्तत्प्रतियोगित्वेन तत्क्षणवृत्तित्वविशिष्टस्य परामर्शादेः
प्रतिबन्धकतया स्वकालेप्यनुमित्यनापत्तेरिति ध्येयम् ।

नन्वनुमित्यव्यवहितपूर्वत्वं तदुत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वं,
तथा चातिपूर्वक्षणस्यापि अनुमित्युत्पत्त्यधिकरणस्थूलकालोत्पत्तिकध्वं-
सप्रतियोगित्वात्तद्वृत्तित्वविशिष्टस्यापि सिद्ध्यादेरप्रतिबन्धकत्वापत्तिरत
आह तदव्यवहितेति । तादृशानुमित्यव्यवहितपूर्वत्वं चेत्यर्थः । शेषकल्पे निरु
क्ताव्यवहितपूर्वत्वस्याप्रविष्टतया सामान्यतोऽव्यवहितपूर्वत्वस्य निरूपणा

सप्रतियोगित्वम् । न चात्र प्रथमे यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्मस्य न विनाशोऽनन्तरं पुनरनुमितिः तत्र तदुत्पत्तिसमयेऽपि सा स्यात्, तत्पूर्वकालीनानां सर्वेषां तादृशपूर्ववर्त्तित्वे-

---

नौचित्यादिति ध्येयम् । न च जन्याभावत्वलक्षणध्वंसत्वस्य प्रवेशो वैयर्थ्यमभावान्तराणामुत्पत्तिविरहेणैव निरासादिति वाच्यम् । ध्वंसत्वनिरूपकप्रतियोगित्वलाभार्थं तदुपादानात्, अन्यथा सर्वेषामेव क्षणानामनुमित्युत्पत्तिक्षणोत्पत्तिक्षणोत्पत्तिकत्वभेदात्मकध्वंसान्तरप्रतियोगितयातिप्रसङ्गापत्तेः, ध्वंसत्वस्याखण्डत्वमते वैयर्थ्याशङ्कानुत्पादाच्चेति भावः । न चेति वाच्यमित्यन्वयः । अत्र-उक्तेषु मध्ये । प्रथम इति । अन्ययोस्तु कल्पयोस्तादृशानुमित्यव्यवहितपूर्वत्वानधिकरणवृत्तित्वविशिष्टेन स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टेन च परामर्शेनैव प्रतिबन्धादनुमित्सोत्पादकालेऽनुमितेर्न सम्भव इति भावः । सिद्धेरसत्वेऽनुमित्सामवधूयानुमितिरेवोत्पद्यते परामर्शपूर्वं सिद्धिसत्वे च सैव तादृशाव्यवहितपूर्ववर्त्तिभिन्ना विरोधिनी भविता इत्यतः सिद्ध्यात्मकेत्युक्तम् । प्रतिक्षणमवश्यं कस्यचिद्विनाशोपगमात् तत्पुरुषीयस्येत्युक्तम् । तदुत्पादसमयेऽनुमित्सोत्पादसमये । सा-अनुमितिः, तादृशपूर्ववर्त्तित्वेन—स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वेन । यद्यप्यनुमित्साया अप्युपायेच्छात्वात्तत्कारणीभूतफलेच्छाया एवानुमितिप्राग्वृत्तिभिन्नायाः सत्त्वादनुमित्सोत्पत्तिकालेनुमितेरसम्भवः । तथापि सुखात्मिकानुमितिर्जायतामित्याकारिकैवात्र सिषाधयिषा बोध्या, सा च फलेच्छात्वादेव न फलेच्छान्तरमपेक्षते इत्यदोषः । परामर्शोऽप्यत्र स्मरणात्मको ग्राह्यः, अन्यथा विशिष्टानुभवत्वे तदर्थमपेक्षणीयस्य विशेषणज्ञानादेस्तादृशपूर्ववर्त्तिभिन्नत्वेन विरोधित्वसम्भवात् । न च स्मरणात्मकपरामर्शहेतोः संस्कारस्यैव फलनाश्यस्य तादृशपूर्ववर्त्तिभिन्नत्वसम्भवः, समूहालम्बनसंस्कारजन्यपरामर्शस्य चरमफलत्वाभावेन संस्कारानाशकत्वादिति वदन्ति । यत्तु सिद्ध्यात्मकपरामर्शोऽत्रानुमितिरूप एव ग्राह्यस्तथा च फलेच्छादेरपि स्वसमानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तित्वादेव प्रतिबन्धकत्वासम्भवात् । अत एव च पुनरनुमितिरित्यत्र पुनःपदेन सिद्ध्यात्मकपरामर्शस्यानुमितित्वं ग्रंथकृतैव व्यञ्जितम् । न च सिद्ध्यात्मकानुमितिसत्वेऽनुमित्सैव दुर्घटा, अनुमित्यन्तरत्वप्रकारेण तत्सम्भवादिति मतम् । तन्तुच्छम् । अनवरतेत्याद्युत्तरग्रन्थासङ्गतेः, क्षणिकपदार्थानभ्युपगमेन संयोगादीनामपि तादृशपूर्ववृत्तित्वेन प्रतिबन्धकत्वायोगादिति । यद्यपि स्वावच्छिन्नसमानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तितानवच्छेदकधर्मविशिष्ट-

नाविरोधित्वादिति वाच्यम् । अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोपरमात् फलानुत्पादबलेनापि तादृशकल्पनासम्भवात् कारणान्तरकल्पने गौरवाच्च । अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहाविरोधित्वात् । उपादीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा एव तादृशपूर्ववर्त्तिभिन्नाः, भवेद्वा तत्तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्य-

---

त्वेन प्रतिबन्धकत्वविवक्षयाप्युक्ताखिबाधयिषोत्पत्तिकालेनुमितेर्वारणं सम्भवतीति स्वोत्पत्तिक्षणावच्छिन्नतत्लिङ्गव्यक्तित्वस्यैव तादृशपूर्ववर्त्तितानवच्छेदकतया तद्भिन्नायाः सिद्धेः अनुमित्साप्राग्यपूर्वं सत्त्वात्, तथापि यथाश्रुतमेव समाधिसौकर्यादाह अनवरतेति । अनवरतम्—अनुक्षणम् । परिस्पन्दमाना येऽपरिमिताः पवनादिपरमाणवस्तैः सार्द्धं यश्चेतनसंयोगसन्तानस्तदन्तर्गतसंयोगव्यक्तीनामनुक्षणमेव नाशादित्यर्थः । तथाच परामर्शपर्यन्तस्थायिन्यः परमाणुचेतनसंयोगव्यक्तय एव तत्रानुमितिप्रतिबन्धिका इति भावः । ननु तत्र कारणाभावप्रयुक्तः फलानुत्पादः कारणान्तरमेवाक्षिपेदित्यत आह कारणान्तरेति । नन्वुक्तक्रमेण कारणतानिश्चये सति तादृशसंयोगोपरमः कल्पनीयः कारणतानिश्चय एव तत्प्राक् न सम्भवत्यन्वयव्यभिचारसन्देहेन प्रतिबन्धादत आह अन्वयेति । सन्देहस्येति प्रकृताभिप्रायेण । अविरोधित्वादिति । ग्राह्याभावानवगाहित्वादिति भावः । ननु यत्र पक्षः साध्यवान् साध्यव्याप्यवान् साध्यानुमित्यन्तरं चेष्टसाधनमित्याकारकानुमितेः पश्चात्साध्यानुमित्सा ततः साध्यानुमित्यन्तरं तत्रानुमित्साकालेऽनुमित्यनुत्पादेनान्वयव्यभिचारनिश्चयात्कारणान्तरमवश्यं कल्पनीयं क्षणिकपदार्थानभ्युपगमादनुमित्सापूर्ववर्त्तिनां सर्वेषामेव स्वसमानाधिकरणप्रथमानुमित्यव्यवहितप्राक्क्षणवृत्तित्वेन तद्भिन्नत्वाभावादित्यस्वरसादाह उपादीयन्तामिति । प्रतिबन्धकतयेति शेषः । तथा च प्रथमानुमित्युत्पत्तिक्षणसम्बन्धा एव अनुमित्यव्यवहितपूर्वक्षणवर्त्तिभिन्नत्वेनानुमितिप्रतिबन्धका इति भावः । तत्तदात्मसमयसम्बन्धानामतिरिक्तत्वमतेनेदम् । ननु स्याद्वेत्याद्युक्तप्रकारत्रयमपि स्वत्वगर्भत्वादननुगतमतस्तादृूप्येण प्रतिबन्धकतायां नैककारणपरिशेषापत्तिरत आह भवेद्वेति । अत्र च तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणत्वं स्वप्रागभाववन्निष्ठकालिकसम्बन्धेन तादृशानुमित्याश्रयशब्दस्वं वाच्यमतो नाननुगमाद्यवकाशः । न च ताद-

---

स्वत्वगर्भत्वादननुगतमिति । ननु प्रतिबन्धकानामननुगमेऽपि न क्षतिः, प्रतिबन्धकाभावकूटस्यैव हेतुत्वसंभवादत आह ताद्रूप्येण प्रतिबन्धकतायामिति । न चाऽत्रापि तत्पुरुषीयानुमित्यव्यवहितप्राक्क्षणत्वं तत्पुरुषीयानुमित्युत्पत्तिकस्वन्नतियावद्ध्वंसविशिष्टसम-

व्यवहितपूर्वक्षणत्वादिना तादृशक्षणवार्त्तित्वविशिष्टत्वादिना वा कारणत्वं तथा चोपमानादेः प्रमाणान्तरत्वं भज्येत सर्वत्रानुमितिसामग्रीसम्भवात् , विलीयेत च परामर्शत्वादिना कारणत्वं बाधकत्वादिना च प्रतिबन्धकत्वम् । अन-

---

शशब्दस्यानुमितिक्षणेऽपि सत्त्वात् पुनरनुमित्यापत्तिः, कार्यसहभावेनैव तस्य हेतुत्वात्तादृशशब्दविशिष्टत्वं वा वक्तव्यम् । वैशिष्ट्यं च स्ववृत्तित्व-स्ववृत्तिध्वंसप्रतियोगित्वोभयसम्बन्धेन ग्राह्यम् । शब्दस्य चतुःक्षणस्थायित्वमते तमपहाय सुखदुःखादीनां द्विक्षणस्थायिगुणानामन्यतममेव निवेशनीयमित्यभिनवः पन्थाः । पूर्वक्षणत्वादिनेत्यादिना तादृशपूर्वत्वानाधिकरणक्षणाभावत्वादेरुपग्रहः । परामर्शादेः कारणत्वरक्षामनुसृत्याह तादृशेति । अत्र तत्तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन हेतुतायां कालिकमेव व्यापकत्वं प्रविष्टमतः पुरुषान्तरे तत्पुरुषीयानुमितिर्नापादनीया । विशिष्टत्वादिनेत्यादिपदेन तादृशपूर्वत्वानाधिकरणवृत्तित्वविशिष्टाभावत्वादेः परिग्रहः । ननूक्तरूपेण कारणतायामिष्टापत्तौ को दोषः इत्यत आह तथा चेति । उपमानादेरित्यादिना शब्दस्य परिग्रहः । सर्वत्रेति । उक्तक्रमेणेत्यादिः । व्याप्त्याद्यप्रतिसन्धानदशायामुत्पन्नयोरुपमितिशाब्दयोः कारणबाधेनानुमितित्वासम्भवादेव तत्कारणयोरुपमानशब्दयोः प्रमाणान्तरत्वमिष्यते प्रागुक्तरूपैरनुमितिहेतुत्वे कारणबाधासम्भवात्तयोरप्यनुमान एवान्तर्भावः । ननु यत्रोपमिनोमीत्यादिस्थले नानुमिनोमि किन्तूपमिनोमीत्यादिरेवानुव्यवसायस्तत्रैवोपमित्यव्यवहितपूर्वक्षणस्यानुमित्यव्यवहितपूर्वत्वाभावात्कथं सर्वत्रोक्तानुमितिसामग्री, अन्यथोपमित्या

---

भयस्वरूपं वाच्यम् , तथाचाऽननुगमतादवस्थ्यमत आह अत्र चेत्यादि । न च तत्तत्पुरुषीयानुमितिं प्रति कालिकसम्बन्धेन तत्तत्पुरुषीयानुमित्याश्रयशब्दत्वेन हेतुतायां पुनरनुमित्यापत्तिवारणं कार्यसहभावेन हेतुत्वोक्तावपि न सम्भवतीति अनुमित्युत्पत्तिक्षणोत्पन्नशब्दस्य द्वितीयक्षणेऽपि सत्त्वात् । न च स्वप्रागभाववत्त्वकालिकोभयसम्बन्धेनाश्रयत्वोक्त्या न दोष इति वाच्यम् । तादृशोभयसम्बन्धेन तत्पुरुषीयानुमितिविशिष्टत्वस्य कदाप्यसम्भवेनाश्रयत्वाऽसम्भवात् , अतः स्वप्रागभाववच्छिष्टकालिकसम्बन्धेनेति । स्ववृत्तिध्वंसप्रतियोगित्वमात्रोक्तौ च यावदनुमत्याश्रयशब्दमादाय सिद्ध्यात्मकपरामर्शादनुमित्यापत्तिः तादृशसम्बन्धेन विभिन्नकालीनयोराधाराधेयभावसत्त्वादुभयमुपात्तमिति ।

तयोरपि—शब्दोपमानयोरपि । तथाचोपमानादिस्थले लिङ्गपरामर्शादिघटितानुमितिसामग्र्यनियमात् तत्र प्रमित्यन्तरमुपेयते अत उपमानादेः प्रमाणान्तरता, अनुमित्युत्पत्तिमात्रनिर्वाह्यस्योक्तकारणस्याऽनुमितिसामग्रीत्वे तु तस्याः सर्वत्रैवासम्भवेनोपमित्यादिरूपविलक्षणप्रमितेरेवाऽप्रसिद्ध्यापत्तेरिति भावः ।

रक्तत्वाविशिष्टवैशिष्ट्यप्रत्यक्षमिति वाच्यम् । यत्साध्यकसिद्धिपरामर्शदशायां न वस्त्वन्तरेऽपि कदापि भ्रमत्वाद्यासञ्जनं तत्रैवोक्तक्रमेण पक्षतायाः हेतुत्वव्यवस्थापनादित्याहुः । यत्तु पक्षताया अनुमित्यहेतुत्वे सिद्ध्यात्मकपरामर्शदशायां भिन्नविषयकप्रत्यक्षबुभुत्सासत्त्वेऽनुमितेर्वारणाय तत्तद्बुभुत्सायामनुमितिविरोधित्वकल्पने गौरवं स्यादतः पक्षता हेतुरिति । तत्तुच्छम् , पक्षतायाः कारणत्वे तत्तदनुमित्साविरहकूटविशिष्टसिद्धित्वेन प्रतिबन्धकतायामेव तत्तदनुमित्साविरहव्यक्तीनां विशेष्यविशेषणभावव्यत्यासेनानन्तविरोधित्वकल्पनया विपरीतगौरवात् । अत एव पक्षताया अनुमित्यहेतुत्वे कथितस्थल एव भिन्नविषयकप्रत्यक्षादेरुत्पत्तये तत्तद्बुभुत्साविरहविशिष्टानुमितिसामग्रीत्वेनैव तादृशप्रत्यक्षादौ प्रतिबन्धकत्वं कल्प्यमिति तत्र बुभुत्साव्यक्तीनामुत्तेजकत्वकल्पने गौरवं स्यादित्यपि प्रत्युक्तम् । भिन्नविषयकप्रत्यक्षादिकं प्रति तत्तद्बुभुत्साविरहविशिष्टपरामर्शत्वेन विरोधित्वमपेक्ष्य निरुक्तपक्षताविशिष्टपरामर्शत्वपर्यवसितेनानुमितिसामग्रीत्वेन विरोधित्वकल्पनायामेव गौरवात् । यदपि सिद्धेरनुमित्यविरोधित्वे पर्वतो वन्हिव्याप्यवानित्यनुमितेः साक्षात्कारो न स्यात् तस्या एव भिन्नविषयकानुमितिसामग्रीत्वेन प्रत्यक्षविरोधित्वादिति । तदपि तुच्छम् । पर्व-

---

शिष्टविशेषणज्ञानस्य तद्व्यक्तित्वेन प्रतिबन्धकत्वं वाच्यम् यत्रादौ वह्निरित्याकारकं विशेषणज्ञानं ततः परामर्शोत्पाददशायां चक्षुस्संयोगादिरूपइतरतावत्कारणसमवधानम् तत्र लाघवेन उक्तविशेषणज्ञानव्यक्तेस्तद्व्यक्तित्वेन प्रतिबन्धकत्वम् न तु इतरतावत्कारणविशिष्टतद्व्यक्तित्वेन, गौरवात् , एवं तत्रैव परामर्शद्वितीयक्षणे आलोकादिचक्षुस्संयोगादिरूपइतरतावत्कारणसत्वात् परामर्शतृतीयक्षणे अनुमित्यनुपपत्तिभयेन तत्तत्संयोगादेः प्रतिबन्धकत्वस्य वक्तुमशक्यत्वाच्च । एवं यत्रादौ साध्यानिश्चयः ततः परामर्शदशायां विशेषणज्ञानातिरिक्ततावत्सामग्रीसमवधानम् , परमते सिद्धेरनुमित्याविरोधितया तत्र परामर्शद्वितीयक्षणे अनुमित्यापत्तिवारणाय तत्रत्यसिद्धेस्तद्व्यक्तित्वेनैव लाघवात्प्रतिबन्धकत्वम् , न तु साध्यनिश्चयत्वेन, एवं सहस्रसिद्धेस्तद्व्यक्तित्वेन प्रतिबन्धकत्वम् तत्र सिद्धिनाशक्षणे विशेषणज्ञानातिरिक्ततावत्सामग्रीसत्वात्तदुत्तरक्षणेऽनुमित्यनुपपत्तिभयेनापि विशेषणज्ञानातिरिक्तचाक्षुषादिज्ञानसामग्रीमात्रस्य प्रतिबन्धकताया वक्तुमशक्यत्वाच्च । एवं यत्रादौ प्रत्यक्षस्य विशेषणज्ञानातिरिक्तसामग्री ततः सिद्ध्यात्मकपरामर्शः ततश्चक्षुःसंयोगनाशप्रत्यक्षात्मकसिद्धी ततोऽनुमितिः प्रभाकरमतसिद्धा तत्रानुमित्यनुपपत्तिभयेन न केवलविशेषणज्ञानव्यक्तेस्तद्व्यक्तित्वेन प्रतिबन्धकत्वम् , किन्तु विशेषणज्ञानव्यक्तिविशिष्टचक्षुःसंयोगादेरिव विनिगमकाभावाच्चक्षुःसंयोगादिविशिष्टसिद्ध्यात्मकपरामर्शव्यक्तेस्तद्व्यक्तित्वादिना प्रतिबन्धकत्वं प्रभाकरसम्मतम् , अत एव विनिगमकाभावादित्युक्तम् , तथाऽनन्तसिद्धिव्यक्तेरनन्तरूपेण प्रतिबन्धकत्वापेक्षया साध्यनिश्चयत्वेन प्रति-

तो वन्हिमान् वन्हिव्याप्यवांश्चेत्याद्यनुमितेरवीकानुमितेरप्यसाक्षात्कारे पीष्टापत्तौ क्षतिविरहादित्यास्तां विस्तरः ।

इति श्रीजगदीशतर्कालङ्कारविरचिता पक्षतासिद्धान्तटीका समाप्ता ।

समाप्तं पक्षताप्रकरणम् ॥

---

बन्धकतायां लाघवादिति तात्पर्यं जगदीशतर्कालङ्काराणामिति ध्येयम् ।

इति महामहोपाध्याय पं० श्री प्रभुदत्तशास्त्रिसुतश्रीशिवदत्तमिश्रविरचिता जागदीशीपक्षतायाः गंगानाम्नीव्याख्या समाप्ता ।

शुभं भूयात् ।



